**University of Mysore**

Oriental Research Institute Publications

SANSKRIT SERIES No. 99

GENERAL EDITOR:

SRI H. DEVEERAPPA, M.A.,

*Director, Oriental Research Institute, Mysore*

श्री नीलकण्ठशिवाचार्यविरचितः

# क्रि या सा रः

(पञ्चमादिचतुर्दशोपदेशान्तः द्वितीयो भागः)

# THE KRIYĀSĀRA

OF

SRI NĪLAKAṆṬHA ŚIVĀCĀRYA

Vol. II

*(5 to 14 Upadeśas)*



EDITED BY:

VIDWAN S. NARAYANASWAMY SASTRY

*Pandit, Oriental Research Institute, Mysore*

MYSORE:

PRINTED BY THE DEPUTY DIRECTOR AT THE GOVT. BRANCH PRESS

1957

Price: Rs. 6-0-0

**University of Mysore**

**Oriental Research Institute Publications**

SANSKRIT SERIES No. 99

GENERAL EDITOR:

SRI H. DEVEERAPPA, M.A.

*Director, Oriental Research Institute, Mysore*

श्री नीलकण्ठशिवाचार्यविरचितः

# क्रि या सा रः

(पञ्चमादिचतुर्दशोपदेशान्तः द्वितीयो भागः)

# THE KRIYĀSĀRA

OF

SRI NĪLAKAṆṬHA ŚIVĀCĀRYA

## Vol. II

(*5 to 14 Upadeśas*)

EDITED BY:

VIDWAN S. NARAYANASWAMY SASTRY

*Pandit, Oriental Research Institute, Mysore*



MYSORE:

PRINTED BY THE DEPUTY DIRECTOR AT THE GOVT. BRANCH PRESS

1957

# PREFACE

THIS is a work in thirty-one upadeśas or lessons by the great Śaiva philosopher, Nīlakaṇṭha Śivācārya, on Vīraśaiva Philosophy and Religion. The first volume, comprising the first four upadeśas, deals with Vīraśaiva epistemology. In it the Vedanta aphorisms of Bādarāyaṇa are commented upon, according to the Vīraśaiva school of Philosophy. The work is an anthology, so to say, of all available literature on Vīraśaivism before the times of the author (*cf.* nigamāgamasārasaṅgraha). Though the author in the prefatory portion of his work refers to the thirty-second upadeśa (*cf.* dvātriṃśad upadeśāste; dvātriṃśad upadeśake), it is not to be met with in any of the manuscripts available so far, the natural inference being that it might have been lost.

The second volume, comprising the next ten upadeśas (5–14), deals, in detail, with the method of Śivapūjā with its accessories, such as Bhasma, Rudrākṣa, Mantra and so on. It has been edited in a fitting manner by Vidwan Sri S. Narayanaswamy Sastry, senior Pandit of the Institute.

The third volume, comprising the remaining seventeen upadeśas, will be published shortly.

My thanks are due to Sri Channabasava Swamiji of the Virakta Mutt of Byadgi for lending the manuscript copy of the work, containing the thirty-one upadeśas from the beginning, to the authorities of the Vīraśaiva Śivayoga Mandir of Bijapur for

their manuscript containing the text from stanza No. 582 in the eighth upadeśa up to the end of the thirty-first, and to *Panditaratnam*, *Mahavidwan*, Sri Sirasi Guruśanta Śastry, Professor of Śakti Viśiṣṭādvaita, Sri Chamarajendra Sanskrit College, Bangalore, for lending his printed copy of the work with his personal comments on the text. My thanks are also due to the Deputy Director, Government Branch Press, Mysore, for printing the work in time in an efficient manner.

H. DEVEERAPPA,
*Director*,
*Oriental Research Institute*,
*Mysore*.

# उपोद्घातः

ज्ञानमूर्तिर्महादेवः सत्यानन्दगुणः स्मृतः ।
नास्ति तस्य शरीरं हि मुक्त्वा चिच्छक्तिमव्ययाम् ॥

भोः विज्ञवर्याः—

विदितमेवेदं भवतां यदचिरादेव कालादस्मदीयप्राच्यविमर्शनालयात्प्रकटितं वीरशैवीयसिद्धान्तानुसारिणः क्रियासाराख्यस्य ग्रन्थस्य आदित उपदेशचतुष्टयात्मकं श्रीमद्ब्रह्मसूत्रार्थविवरणरूपं प्रथमं सम्पुटमिति । तस्यैव ग्रन्थस्य पञ्चमादिचतुर्दशोपदेशान्तोपदेशदशकात्मकं [1]वीरशैवाचारविभूतिधारण विरजाहोम रुद्राक्षोत्पत्ति रुद्राक्षधारण शिवपूजानां विस्तरेण प्रतिपादकं द्वितीयं सम्पुटमिदानीमनीयत भवदीयलोचनपथपथिकताम् ।

अस्मिन् ग्रन्थे शिवपूजाविधौ तदनन्तरं च यावदुपदेशपरिसमाप्ति तत्तत्प्रकरणानुगुण्येन शैवपुराणे विद्येश्वरवायवीयसंहिते, स्कान्दपुराणे सूतसंहिता, ब्रह्मवैवर्तपुराणे कतिपयभागाः, शङ्करसंहितायामुपदेशकाण्डश्च यथावदनूद्य निर्दिश्यन्ते । परं तु विरलप्रचारतयास्य ग्रन्थस्य लेखकप्रमादादिना च पौर्वापर्यव्यतिक्रमादयो बहवो दोषा आसन् । तांश्च दोषान् पुराणादिसाहाय्येन तत्र तत्र केषांचित्पदानां तात्पर्यवर्णनपूर्वकं यथामति सम्यक्परिशोध्य राजकीयमुद्रणालये मुद्रापयित्वा प्रकाशितोऽयं ग्रन्थः उपनिषदादिप्रमाणबद्धतया न केवलं वीरशैवानामेव अपि तु सर्वेषामेव विभूतिरुद्राक्षधारणशिवपूजानिरतानामत्यन्तमुपकाराय कल्पते । चतुर्दशोपदेशपरिशोधनविषये श्रीमदप्पयदीक्षितेन्द्रविरचितः शिवार्चनाचन्द्रिकाग्रन्थोऽत्यन्तमुपचकार । एतद्ग्रन्थसंकलयितुः श्रीनीलकण्ठशिवाचार्यविषये वक्तव्यं सर्वमपि प्रथमसम्पुटीयभूमिकायामेव विस्तरशः प्रतिपादितमिति तद्विषये नात्र पुनर्यत्न आस्थितः ।

---

[1] अनुपदमेव प्रतिपाद्यविषया विस्तरशः प्रदर्शयिष्यन्ते.

अस्मिंश्च ग्रन्थे आदितश्चतुर्षूपदेशेषु श्रीब्रह्मसूत्रार्थविवरण-मुखेन [1]निर्गुणोपासना, अनन्तरं नवसूपदेशेषु (शिवपूजा) सगुणो-पासनाङ्गत्वेन सदाचाराः नित्यनैमित्तिककर्माणि विभूतिरुद्राक्ष-धारणं तत्प्रशंसा च, चतुर्दशे सगुणोपासना (शिवपूजा), तद-नन्तरं यावदुपदेशसमाप्ति सगुणोपासनार्थवादश्च सविस्तरं निरूप्यते ।

एतद्ग्रन्थशोधनाविषये उपयुक्ताः कोशाः—

(1) ब्याडगि विरक्तमठाधिपतेः श्री चन्नबसवस्वामिनः सकाशादागतः देवनागराक्षरमयः कागदपत्रात्मकः आदित एक-त्रिंशदुपदेशान्तः कोशः।

(2) बीजापूर् श्रीमद्वीरशैवशिवयोगमन्दिरादागतः कन्नडाक्ष-रमयः कागदपत्रात्मकः अष्टमोपदेशे ५८२तमश्लोकप्रभृति एकत्रिं-शदुपदेशान्तः कोशः ।

(3) महीशूरपुरी पण्डितरत्नं महाविद्वान् श्रीगुरुशान्त-शास्त्रिणः सकाशादागतः तत्र तत्र परिशोधितः मुद्रितः कोशः ।

एवमेतेषामादर्शपुस्तकदानेन मुद्रणविषये अस्माकं बहूपकृत-वतां महाशयानामनन्तान् धन्यवादान् समर्पयामि ।

इत्थं परिशोधितेऽप्यस्मिन्ग्रन्थे प्रमादादिना संभाविता दोषा गुणैकपक्षपातिभिर्विद्वद्वरैः क्षन्तव्या इत्यभ्यर्थये ।

मौर्वीमूर्ध्नि रथः, शरासनशिरःसंचारि चक्रद्वयं,
चक्रान्तर्निहितः शरः, तदुदरे सूतः, तदास्ये हयाः ।
तेषामेव शिरःपदेषु वसतिः स्वस्येति यस्य श्रुतं
देवश्चित्रपरिच्छदः स भगवान् कुर्यात्सदा मङ्गलम् ॥

सु. नारायणस्वामिशास्त्री

---

[1] अयमंशः 338तमे पुटे स्फुटम्.

# क्रियासारे पञ्चमादिचतुर्दशान्तोपदेशदशकगतानां विषयाणां सूचिनी.

# अस्मिन् संपुटे उल्लेखितानां ग्रन्थान्तराणां नामानि

# शुद्धपत्रिका

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 3 | 9 | कारिणाम् | कारिणम् |
| 9 | 26 | कार्पासं | कार्यं च |
| 14 | 9 | तथैत्र | तथैव |
| 15 | 13 | पत्रये | पतये |
| 16 | 21 | चव | चैव |
| 24 | 20 | पालैकं | पौलकं |
| 25 | 10 | परायणो | परायणः |
| 25 | 18 | दिस्य इदम् | दिभ्य इदम् |
| 25 | 25 | स्वाहाये | स्वाहा |
| 25 | 26 | धाना । येदम् | धानायेदम् |
| 27 | 6 | म शु | मे शु |
| 28 | 21 | स्वाहान्ते जुहुयात्। | स्वाहान्तैर्जुहुयात् |
| 32 | 10 | पूर्वं | पूजां |
| 37 | 18 | मृण्मर्यं | मृण्मयं |
| 39 | 3 | व्यापादो यनिवारित: | व्यापदो यन्निवारिताः |
| 40 | 25 | नतः | ततः |
| 67 | 1 | रलानि | रालानि |
| 86 | 17 | व्यापादो | व्यापदो |
| 91 | 5 | कार्यान्मा | कार्याद्वा मा |
| 91 | 10 | भस्मात् | भास्मात् ? |
| 117 | 3 | विनाज्ञान | घनाज्ञान |
| 121 | 21 | घिपोऽयं | घिपोऽहं |
| 129 | 15 | नं | तं |
| 208 | 15 | कथितं | कथितः |
| 208 | 15 | क्रमम् | क्रम: |
| 241 | 15 | ह्रदेयेन | ह्रदयेन |
| 249 | 29 | धरशक्तिं | धाराशक्तिं |
| 250 | 6 | पद्मः शङ्ख | पद्मशङ्ख |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 357 | 12 | श्रतिसमं | श्रुतिसमं |
| 357 | 14 | इदानींछ्रोतु | इदानीं श्रोतु |
| 358 | 20 | परः | परम् |
| 358 | 20 | दपिरे | दापिरे |
| 417 | 13 | यासास | यामास |

---

॥ श्रीः ॥

श्रीमन्महेश्वराय नमः

# क्रियासारः

## द्वितीयं संपुटम्

---

### अथ पञ्चमोपदेशः

व्याससूत्रमिदं पात्रं ब्रह्माऽऽनन्दसुधासृतेः ।
तत्र निष्णातमनसां तत्त्वसारमहं ब्रुवे ॥ १

आचाराणामनेकेषामङ्गाङ्गित्वव्यवस्थया ।
द्वारं प्रविशतः शीर्षमिव ब्रह्म व्यवस्थितम् ॥ २

आचारः [1] प्रथमो धर्मस्तस्माच्छ्रेयस्ततो जयः ।
तस्मान्निश्चिन्तता तस्याश्चित्तनैर्मल्यसंभवः ॥ ३

ततः शास्त्रेषु विश्वासः प्रविश्य परिशीलनम् ।
तस्मादध्यवसायः स्यात् प्रवाहो निश्चितस्य च ॥ ४

प्रवाहात् सञ्चितागामिप्रारब्धपरिपाकतः ।
विदुषां ब्रह्मभावेन मुक्तिः सायुज्यरूपिणी ॥ ५

तस्मान्मूलं सदाचारास्तेषां मूलं गुरुः स्वयम् ।
गुरूपदिष्टमार्गेण सदाचाररतो भवेत् ॥ ६

परमात्मा गुरुः साक्षात् कालावच्छेदवर्तिनाम् ।
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः ॥ ७

गुरुरेव परं ब्रह्म तस्माद्गुरुमनुव्रजेत् ।
विश्वस्य गुरुवाक्यानि सदाचारपरो भवेत् ॥ ८

---

[1] परमो—पा.

सदाचारा बहुविधाः प्रमाणैरुपवर्णिताः ।
संक्षेपतः पञ्चविधा आचारा निर्विशेषकाः ॥ ९

नित्यं नैमित्तिकं काम्यं नित्यनैमित्तिकं तथा ।
नित्यकाम्यमिति प्राहुः पञ्चधा शास्त्रकोविदाः ॥ १०

सविशेषाः सदाचारा आगमैरुपपादिताः ।
पञ्चाचारा वीरशैवैः सादरं स्वीकृताः सदा ॥ ११

अनपेक्ष्य शरीरान्तं विच्छेदे प्राणसंशयम् ।
प्रायश्चित्तेन सहितं निर्विशेषं विदुर्बुधाः ॥ १२

अपेक्ष्यैव शरीरान्तं विच्छेदे प्राणसंशयम् ।
प्रायश्चित्तेन रहितं सविशेषं विदुर्बुधाः ॥ १३

सविशेषप्रपञ्चस्तु वीरशैवीयसङ्ग्रहे ।
उपात्तो निर्विशेषस्तु वीरशैवैर्मतो न वा ॥ १४

इत्येवं सन्दिहानानां शङ्काशूकनिवृत्तये ।
प्रपञ्च्यते मया सर्वं तत्त्वमार्गानुसारतः ॥ १५

यदुक्तं निर्विशेषाख्यं पञ्चधा विधिमार्गतः ।
तत्र नित्यं सायमग्निहोत्रमौपासनादिकम् ॥ १६

नित्यत्वं श्रुतिचोद्यत्वं प्रमादे दोषसंभवः ।
तद्दोषविनिवृत्त्यर्थं प्रायश्चित्तविधिः पुनः ॥ १७

नैमित्तिकं क्रान्ति[1]पातग्रहणग्रहसंभवे ।
कर्तव्यं कर्म वेदोक्तं कालसापेक्षमुच्यते ॥ १८

दध्ना जुहोति पयसा जुहोतीत्येवमादिकम् ।
नित्यकाम्यमिति प्राहुः करणेऽभ्युदयः परः ॥ १९

नित्यनैमित्तिकं प्राहुः प्रावृषि प्रावृषि श्रुतम् ।
निरूढपशुबन्धाख्यं प्रमादाद्दोषसंभवे ॥ २०

प्रायश्चित्तेन सहितमनुष्ठानं पुनः [2]सतः ।
काम्यं कर्म समाख्यातं पवित्रेष्ट्यादिकं बुधैः ॥ २१

---

[1] पाताग्रयण–पा. [2] पुनस्ततः–पा.

एनोनिर्हरणार्थाय स्मार्तेष्वपि तथैव हि ।
स्मृतीनां श्रुतिमूलत्वात् स्मार्तानां श्रुतिचोदना ॥ २२

वीरशैवैरनुष्ठेया आचारा नैवमादयः ।
यदि चेन्नानुतिष्ठेयुर्वैदिकत्वमसङ्गतम् ॥ २३

यदि चेदनुतिष्ठेयुर्वीरशैवत्वमुत्पतेत् ।
वैदिकत्वप्रतिज्ञा सा शशशृङ्गायते तदा ॥ २४

इतीव भ्रमतो [1] भ्रान्तिसम्भ्रमैरलमस्तु ते ।
सत्यमुक्तं वैदिकत्वमाचाराणां त्वया पुनः ॥ २५

किमाचारा अपेक्षन्ते ? नापेक्षन्तेऽधिकारिणाम् ।
यद्यपेक्षा तत्र वाच्यः कालश्च [2] नियमः क्रमः ॥ २६

नापेक्षा यदि सर्वेषां सर्वदा सर्वकर्मसु ।
निर्विशेषप्रवृत्त्या ते वैदिकत्वं पलायते ॥ २७

अत एव त्वयावश्यं कालश्च विषयः क्रमः ।
वक्तव्यो यदि तत्रैवं तत्त्वदृष्ट्यावधारय ॥ २८

चतुराश्रमनिष्ठानां स्वाधिकारानुसारतः ।
कर्मव्यवस्था श्रुत्युक्ता कानिचिद्ब्रह्मचारिणाम् ॥ २९

विशेषतो गृहस्थानां वानप्रस्थस्य कानिचित् ।
यतीनां नैव कर्माणि नियमाः केचन [3] श्रुताः ॥ ३०

न स्युरत्याश्रमस्थानां कर्माणि नियमाः पुनः ।
प्रमाणैरेव विहिताश्चैवं तत्त्वविदां स्थितिः ॥ ३१

वीरशैवीयसमया अत्याश्रमपुरस्सराः ।
निराभारादिभेदेन भिन्ना नियमिनश्च ते ॥ ३२

न तेषां विद्यते तीर्थं न यज्ञा न व्रतान्यपि ।
न योगकरणापेक्षा न वारपरिशोधनम् ॥ ३३

किंतु तेषां बहुविधा नियमा युक्तचेतसाम् ।
नन्वस्तु युक्तमनसां विरक्तानां क्षमावताम् ॥ ३४

---

[1] भ्रान्तसंभ्रमैः—पा. [2] विषयः—पा. [3] स्मृताः—पा.

सर्वं त्वयुक्तमन्येषां विषयोद्युक्तचेतसाम् ।
संसारिणां पुत्रपौत्रपत्नीपशुमतां पुनः ॥ ३५

संसारिणां पाशबद्धचेतसां विषयैषिणाम् ।
लिङ्गाङ्गसङ्गिनां लोकपन्थानमनुकुर्वताम् ॥ ३६

अनादरः कथं वा स्यात् उपन्यस्तेषु कर्मसु ।
न वाङ्मात्रेणार्थसिद्धिः कथं वात्रोपपाद्यताम् ॥ ३७

इति चेन्न, तथा वीरशैवानां स्वस्वकर्मणि ।
विशेषतोऽसमर्थानां यथा यतिगृहस्थयोः ॥ ३८

यावत्स्वधर्मानुष्ठानविकलानां च केनचित् ।
कर्मणा निष्कृतिस्तद्वदेतेषां लिङ्गसङ्गिनाम् ॥ ३९

स्वस्वशक्त्यनुसारेण स्वधर्म [1] परिपालनात् ।
निष्कृतिः पाशविच्छेदः सद्गुरोः कृपया भवेत् ॥ ४०

ननु तीर्थेषु पुण्येषु स्नानात् क्षेत्रस्य दर्शनात् ।
[2]उपरागेषु सङ्क्रान्तौ विषुवे पातवैधृतौ ॥ ४१

अम्बुधौ सेतुबन्धे च काश्यां च कुरुजाङ्गले ।
नर्मदासिन्धुकावेरीप्रमुखान्यनदीषु च ॥ ४२

नानाकर्तव्यकर्मभ्यो दानाद्धोमात्सुरार्चनात् ।
उपोषणादात्मनश्च कृच्छ्रचान्द्रायणादिभिः ॥ ४३

परिशुद्धिर्गृहस्थस्य कैश्चित्सन्यासिनां तथा ।
श्रुतिस्मृतिपुराणेषु वर्ण्यते तव चेत्कथम् ॥ ४४

स्वधर्मसमनु [3] ष्ठानवैकल्यपरिपूरणम् ।
इति चेच्छृणु तेषां च चित्तशुद्धिर्विधीयते ॥ ४५

गुरुभक्त्या शिवे भक्त्या पूजया लिङ्गरूपिणः ।
जपात्पञ्चाक्षरमनोर्दानाच्छक्त्यनु[4]रोधतः ॥ ४६

मन एव हि सर्वेषां कारणं पुण्यपापयोः ।
मनःशुद्धिमुपादाय प्रयान्ति परमां गतिम् ॥ ४७

---

[1] परिशीलनात्–पा. [2] उपरागेतु–पा. [3] ष्ठानाद्वैकल्य–पा. [4] नुसारतः–पा.

ननु तर्ह्यविशेषेण वीरशैवैर्विधीयताम् ।
निर्विशेषं तु यत् कर्म वैकल्यपरिपूर्तये ॥ ४८

नैवं यतिः स्ववैकल्यपरिपूर्त्यै क्रियापरः ।
अविरुद्धानि कर्माणि प्रयत्नेनाचरत्यसौ ॥ ४९

[1] तथैव वीरशैवाश्च स्वस्वकर्माविरोधतः ।
अनुतिष्ठन्तु कर्माणि वक्ष्यन्ते तानि वै मया ॥ ५०

यदुक्तं श्रुतिषु ब्राह्मे मुहूर्ते स्वासने स्थितः ।
चिन्तयेदिष्टदैवं च ततस्तन्नामचिन्तनम् ॥ ५१

दन्तधावनमुख्येभ्यो मृत्तिकाशौचतोऽपि च ।
शरीरपरिशुद्धिः स्याद्बहिरन्तर्मलं त्यजन् ॥ ५२

चित्तशुद्ध्यनुसारेण स्नानं, दशविधेषु च ।
भूतिस्नानं विशेषेण कृतस्नानोऽपि चाचरेत् ॥ ५३

नित्यपूजां च निर्वर्त्य यथास्वं धर्ममाचरेत् ।
शैवानां नित्यमेतावन्नैमित्तिकमथोच्यते ॥ ५४

पुण्यक्षेत्रे पुण्यदिने पुण्यकाले विशेषतः ।
सङ्क्रान्तौ विषुवे पाते सोमसूर्योपरागयोः ॥ ५५

स्नायाद्ध्याज्जीवरत्नं जपेदामोचनं मनुम् ।
शिवस्य लोचने चन्द्रसूर्यौ तौ तत्तयोरपि ॥ ५६

राहुणान्तर्हिते प्राप्ते तत्र धर्मान् समाचरेत् ।
स्वस्वनित्याविरोधेन यस्य नित्ये परं मनः ॥ ५७

[2] जीवरत्नजपेनैव तं कालमतिवर्तयेत् ।
यथाग्निहोत्रसमय उपरागे समागते ॥ ५८

अग्निहोत्रेण चेष्टया वा तं कालमतिवर्तयेत् ।
तदुल्लङ्घनजो दोषो यथा तस्य न विद्यते ॥ ५९

तद्वदेवात्र विज्ञेयं विध्यनुलङ्घनं पुनः ।
नित्यनैमित्तिकं कर्म शिवरात्रिसमागमे ॥ ६०

---

[1] अथैवं. [2] जीवरत्नं जपेन्नैवं—पा.

कर्तव्यं कर्म विज्ञेयं सर्वेषां तुल्यमेव तत् ।
अन्ये धर्मास्तु नैवेष्टा शैवधर्मविरोधिनः ॥ ६१

अन्तर्भावश्शैवधर्मे ज्योतिष्टोमेऽग्निहोत्रवत् ।
अतस्तल्लङ्घने दोषो न कश्चिदपि विद्यते ॥ ६२

नित्यकाम्यं तु तेषां यन्नित्यपूजादिके पुनः ।
किंचित्कार्यं समुद्दिश्य किंचित्कालं प्रपूजनम् ॥ ६३

अन्येषां चेदनेकेषामुक्तदृष्टान्ततोऽथवा ।
अग्निहोत्रे नैय्यमिके यथा मासाऽग्निहोत्रकम् ॥ ६४

तदुल्लङ्घनजो दोषो दूरादेव पलायते ।
नित्यनैमित्तिकं कर्म चरे च गृहमागते ॥ ६५

आतिथ्यं तत्र कर्तव्यं सर्वथैवेति निश्चयः ।
अन्तर्भावस्तदन्येषां सुलभः परिकीर्तितः ॥ ६६

नित्यकाम्यं कर्म तत् स्याच्चरलिङ्गे गृहागते ।
मासमात्रं [1]भक्षभोज्यैर्विशेषेणेति निश्चयः ॥ ६७

काम्यं बहुविधं प्रोक्तं स्नानं दानं जपस्तपः ।
अविरोधेन तत्सर्वं भावनीयं विपश्चिता ॥ ६८

श्रुतीनां [2]च स्मृतीनां च पुराणानामथापि वा ।
नाप्रामाण्यं वयं ब्रूमः किं तु तेषां परस्परम् ॥ ६९

अविरोधं पुरस्कृत्य तात्पर्यं वर्णितं मया ।
न परेण भ्रान्तमिति भ्रमितव्यं बुधेन हि ॥ ७०

आगमानामशेषाणां प्रमाणानामनेकशः ।
प्रामाण्यमविशेषेण ज्ञातव्यं तत्वदृग्भिः ॥ ७१

ननु चैवं सति प्रौढिवादमात्रमिदं पुनः ।
[3]ये विरक्ता न्यस्तचित्तास्तेषामत्याश्रमोऽस्तु वा ॥ ७२

ये पुनर्गृहिणस्तेषामाचारा मुख्यहेतवः ।
अत्याश्रमीया आचारा नैतेषां युज्यते पुनः ॥ ७३

---

[1] भक्षभोज्ये–पा. [2] वा. [3] येऽरक्ता–पा.

यथा गृहस्थधर्माणामधिकारं न चार्हति ।
ब्रह्मचारी, यथा गेही यतिधर्मान्न चार्हति ॥ ७४

एवमत्याश्रमाचारानपि लिङ्गाङ्गसङ्गिनः ।
नार्हन्ति विषये निष्ठा मनश्चाञ्चल्यशालिनः ॥ ७५

अननुष्ठानतश्चोक्तकर्मणामप्यनुष्ठितेः ।
वीरशैवविरोधः स्यात्तद्दोषस्तदवस्थितः ॥ ७६

अत्रोच्यते वीरशैवमतमेतच्छिवोदितम् ।
तत्रापि विविधा भेदा निराभारादिभेदतः ॥ ७७

निराभारस्य ये धर्मास्तान् विशेषो नचार्हति ।
विशेषधर्मान् सामान्यशैवो नैवार्हति क्वचित् ॥ ७८

त्वदुपन्यस्तकर्माणि कर्तव्यानि तथैव हि ।
यत्किञ्चिदथ वा यावद्यत्किञ्चित्तु निरूपितम् ॥ ७९

यावतां समनुष्ठानं सप्तसागरशोषणम् ।
यदप्युक्तं ब्रह्मचारी गार्हस्थ्यं नार्हतीति च ॥ ८०

यतिधर्मान् गृही चेति तत्रैवमवधारयेत् ।
किं वा गृहस्थः स्नातीति न स्नायाद्ब्रह्मचर्यवान् ॥ ८१

गृही शान्त्यादिसहितो न स्याद्यति[1]गुणो यती ।
असाधारणधर्मांस्तु नानुतिष्ठेद्गृही यदि ॥ ८२

गृही न कोऽपि सन्यस्येत्तदतो दुर्वचस्तव ।
आपातरमणीयं चेत्यास्तां किं विस्तरेण तु ॥ ८३

ननु गेही लिङ्गसङ्गी निराभारादिलक्षणः ।
कथमर्हेत् यथा ब्रह्मचारी गार्हस्थ्यलक्षणम् ॥ ८४

औपासनादिकं कर्म नार्हतीत्येवमत्र च ।
न्यूनाधिकारी स्वश्रेष्ठधर्मान्नार्हेत्ततः कथम् ॥ ८५

न वयं गृह्यसाध्यानां कर्मणां ब्रह्मचारिणः ।
अधिकारं प्रवक्ष्यामः स्वाश्रमानुगुणं पुनः ॥ ८६

---

[1] गुणा इति—पा.

अविरुद्धस्य धर्मस्य समनुष्ठानतः शिवम् ।
एवमत्याश्रमस्थानामाचारो मास्तु गेहिनः ॥ ८७

न तेन वीरशैवत्वं भज्यते गेहिनां पुनः ।
अनाश्रमत्वं किन्नाम मोक्षमार्गैकयोग्यता ॥ ८८

सा च दृष्टा गृहस्थे च वामदेवे महात्मनि ।
गार्ग्यामपि स्त्रियां चैव [1]सा यतो ब्रह्मचारिणी ॥ ८९

अतः श्रेयोऽभिवृद्ध्यर्थं वीरशैवः समाचरेत् ।
उपन्यस्तानि कर्माणि वीरशैवाविरोधतः ॥ ९०

ब्रह्मपन्थानमाश्रित्य स्नानं दानं शिवार्चनम् ।
विदधीत क्षात्रमार्गमाश्रितो राष्ट्रवृद्धये ॥ ९१

कारयेद्वेदकर्माणि यस्यार्थस्तस्य तत्फलम् ।
वैदिकांस्तान् समाहूय राजा सोऽयं क्रमात्ततः ॥ ९२

उपास्यतो वैश्यवृत्तिं स्नायाद्देयं धनादिकम् ।
श्ववृत्या जीवनं प्राप्य निवर्तेत पुनर्बुधः ॥ ९३

एवं प्रतिज्ञानुगुणं नित्यकर्माणि वर्णये ।
पराशरपुराणोक्तं धर्मशास्त्रेषु वर्णितम् ॥ ९४

सदाचारं श्रावयाशु येन लोकान् जयेद्बुधः ।
धर्माधर्मौ तथा ब्रूहि स्वर्गनारकदौ तथा ॥ ९५

वेदाचारायुतो विद्वान् ब्राह्मणो नाम नामतः ।
वेदाचारयुतो विप्रो ह्येतेष्वेकैकवान् द्विजः ॥ ९६

अल्पाचारोऽल्पवेदश्च क्षत्रियो राजसेवकः ।
किञ्चिदाचारवान् वैश्यः कृषिवाणिज्यतस्तथा ॥ ९७

शूद्रब्राह्मण इत्युक्तः स्वयमेव हि कर्षकः ।
असूयालुः परद्रोही चण्डालद्विज उच्यते ॥ ९८

पृथिवीपालको राजा, इतरे क्षत्रियास्तथा ।
धान्यादिक्रयवान् वैश्यः, इतरे विश उच्यते ॥ ९९

---

[1] नियतो–पा.

ब्रह्मक्षत्रियवैश्यानां शुश्रूषुः शूद्र उच्यते ।
कर्षको वृषलो ज्ञेय इतरे चैव दस्यवः ॥ १००

सर्वो ह्युषः प्राचीमुखश्चिन्तयेद्देवपूर्वकान् ।
इत्यादिषु पुराणानां वचनेषु गुणैः पुनः ॥ १०१

सम्बन्धाद्ब्राह्मणादीनि नामानि न च जातितः ।
वैदिकत्वाद्वीरशैवा [1] आचारा वैदिकोत्तमाः ॥ १०२

अथ प्रातः करणीयम्ः—

ब्राह्मे मुहूर्ते चोत्थाय स्वासने शुचिरास्थितः ।
धर्मानर्थांश्च तत्क्लेशानादायं व्ययमेव च ॥ १०३

आयुर्विद्वेषमरणं पापं भाग्यं तथैव च ।
व्याधिं पुष्टिं तथा शान्तिं प्रातरुत्थानदिक्फलम् ॥ १०४

निशान्तिमो याम उषो यामार्धः सन्धिरुच्यते ।
तत्काले च समुत्थाय विण्मूत्रे उत्सृजेद्बुधः ॥ १०५

गृहाद्दूरं ततो गत्वा वाग्यतः प्रावृतस्तथा ।
उदङ्मुखः समाविश्य प्रतिवन्धेऽन्यदिङ्मुखः ॥ १०६

अथ शौचविधिः—

जलाग्निब्राह्मणादीनां देवानां नाभिमुख्यतः ।
लिङ्गं पिधाय वामेन मुखमन्येन पाणिना ॥ १०७

मलमुत्सृज्य चोत्थाय न पश्येदेव तन्मलम् ।
उद्धृतेन जलेनैव शौचं कुर्याज्जलाद्बहिः ॥ १०८

अथवा देवपित्रर्थतीर्थावतरणं विना ।
सप्तवारं च वा तिस्रो गुदं संशोधयेन्मृदा ॥ १०९

शिश्ने कर्कोटिमात्रं तु गुदे प्रसृतिरिष्यते ।
तत उत्थाय पद्धस्तशौचं गण्डूषमष्टकम् ॥ ११०

येन केन च पत्रेण काष्ठेन च जलाद्बहिः ।
कार्पासं तर्जनीं त्यक्त्वा दन्तधावनमाचरेत् ॥ १११

---

[1] आचारात्

दिव्यागमोक्तवचनं विलिखामि समासतः ।
आदित्यस्योदयात्पूर्वं मुहूर्तद्वितये स्थिते ॥ ११२

उत्थाय धौताङ्घ्रिकरः कृतभस्मावकुण्ठनः ।
हृदि सामान्यसमयी चिन्तयेत् परमेश्वरीम् ॥ ११३

विशिष्टसमयी बिन्दौ मूर्ध्नि निर्वाणदीक्षितः ।
आचम्य साधकः शम्भुं द्वादशान्ते विचिन्तयेत् ॥ ११४

नामानि चास्य हृद्यानि चरित्राणि च कीर्तयेत् ।
निराभारो विशिष्टश्च ह्येवमेव हि चिन्तयेत् ॥ ११५

विण्मूत्रोत्सर्जनं कुर्याद्गत्वा देशं यथोचितम् ।
उदङ्मुखोऽहःसन्ध्यासु रजन्यां दक्षिणामुखः ॥ ११६

प्राक्प्रत्यग्वदनो यद्वा दिनपूर्वापरार्धयोः ।
उदङ्मुखस्तु मध्याह्ने रजन्यां दक्षिणामुखः ॥ ११७

नभोविण्मूत्रदिक्चन्द्रसूर्यताराग्निदर्शनम् ।
देवगोमुनिविप्रस्त्रीसम्मुखं च[1] विवर्जयेत् ॥ ११८

तृणैः पायुमयज्ञाङ्गैर्मृज्यादनुपयोगिभिः ।
लोष्ठाद्यैर्वा न सत्पर्णशाखापुष्पफलादिभिः ॥ ११९

अधोदृष्टिः प्रजननं गृह्णन् वामेन पाणिना ।
जलाभ्याशमुपागत्य शौचं कुर्वीत मृज्जलैः ॥ १२०

एका शिश्ने गुदे पञ्च दश वामकरे मृदः ।
षट्सप्त पृष्ठे चाङ्घ्र्योश्च करयोः सप्त मृत्तिकाः ॥ १२१

वल्मीके वृक्षमूले च गृहे मार्गे जलान्तरे ।
ऊषरे मूषकोद्धाते गोव्रजे देवतालये ॥ १२२

वापीकूपतटाकादिकूले सिकतिलस्थले ।
वीथ्यां श्मशाने कीटास्थितुषाराङ्गारदूषिते ॥ १२३

पांसुले परशौचार्थशिष्टमृत्कीर्णभूतले ।
हलोद्धाते च जम्बाले शार्करे नाहरेन्मृदम् ॥ १२४

विशुद्धभूमौ मृद्ग्राह्या व्यपोह्योपरि मृत्तिकाम् ।
यथा स्याच्छौचपर्याप्तं नावशिष्येत[2] वा यथा ॥ १२५

---

[1] विवर्जयन्–पा. [2] वाप्यथ–पा.

प्रथमं पायुशौचं स्यादथ प्रसृतिमानतः ।
तदर्धमानतः पश्चात्तदर्धेन ततः परम् ॥ १२६

आर्द्रामलकमात्रं स्यान्मूत्रशौचे तु मृत्तिका ।
द्विगुणा मृत्तिका शुक्ले त्रिगुणा दारसङ्गतौ ॥ १२७

एतच्छौचं गृहस्थस्य शावमध्ये ततोऽधिकम् ।
ब्रह्मचर्यादिकानां तु क्रमाद्द्वित्रिचतुर्गुणम् ॥ १२८

यस्य यावद्दिवा शौचं तदर्धं निशि तस्य तत् ।
तदर्धमातुरस्योक्तमातुरस्यार्धमध्वनि ॥ १२९

आगुल्फं चरणौ मृद्भिः करावामणिबन्धकम् ।
संक्षाल्य क्षालयेत् पश्चादाजान्वाकूर्परं जलैः ॥ १३०

धाराशौचं न कर्तव्यं शौचसिद्धिमभीप्सता ।
चुलकेनैव कर्तव्यं हस्तशुद्धिविधानतः ॥ १३१

शौचे मृज्जलदानार्थं कर्तव्यौ परिचारकौ ।
सव्यहस्तगृहीता च क्षेप्या मृद्वामहस्तके ॥ १३२

कुर्याद्द्वादशगण्डूषान् पुरीषोत्सर्जने कृते ।
कुर्वीत चतुरो मूत्रे भोजनान्ते तु षोडश ॥ १३३

प्राङ्मुखः क्षालयेत् पादौ [1] हस्तावत्र उदङ्मुखः ।
उदङ्मुखः प्राङ्मुखो वा ततस्त्वाचमनं चरेत् ॥ १३४

अथ दन्तधावनविधिः—

हृन्मन्त्रेण ततो ग्राह्यं दन्तकाष्ठं त्वगन्वितम् ।
आपर्वाग्रसमच्छेदमार्द्रमग्रे च कूर्चकम् ॥ १३५

कनिष्ठिकासमस्थौल्यं सूक्ष्मं वा दन्तसौक्ष्म्यतः ।
अष्टाङ्गुलं नैष्ठिकानां भोगिनां द्वादशाङ्गुलम् ॥ १३६

वर्णिनां दशषष्ठाष्टसप्ताङ्गुलकमेव वा ।
षडङ्गुलं प्रहीणानां नारीणां चतुरङ्गुलम् ॥ १३७

---

[1] हस्तौ वक्र–पा·

जम्ब्वाम्रककुभाशोककपित्थवकुलोद्भवम् ।
प्लक्षौदुम्बरफुल्लाङ्घ्रिजातीचम्पकशङ्खजम् ॥ १३८

अतिमुक्तकदम्भोत्थमपामार्गं च भोगिनाम् ।
ग्राह्यमेतच्च शैरीषचिरविल्वकरञ्जकम् ॥ १३९

श्रीपर्णीदारुनिर्गुण्डीसारजं खादिरादिकम् ।
[1]अक्षक्षीरीधवैरण्डवटाश्वत्थककुद्भवैः ॥ १४०

गुडिकामधुकाशिल्पीकुलोद्भवनिशिग्रुजैः ।
नाकुलीपेरुवानीरधात्रीकादम्बसंभवम् ॥ १४१

खर्जूरीनारिकेलोत्थं पालाशं तालवंशजम् ।
तृणपर्णपिशाचोत्थमिष्टकाङ्गारभस्मजम् ॥ १४२

अङ्गुल्यां तर्जनी वर्ज्या सुवर्णादिकृतं तथा ।
प्रतिपन्नवमी षष्ठी द्वादशी पर्वपञ्चकम् ॥ १४३

उपवासदिनं जन्मत्रयं च शनिवासरम् ।
भानुवारव्यतीपाते ग्रहणं जन्मवासरम् ॥ १४४

सूर्योदयानन्तरं च विवर्ज्यं दन्तधावनम् ।
गण्डूषैर्द्वादशावृत्तैर्दलैर्वा शोधयेद्रदान् १४५

जिह्वानिर्लेखनं कुर्याज्जिह्वामल[2]विशोधने ।
लालाक्षिश्रोत्रनासास्यरेतोविण्मूत्रगात्रजम् ॥ १४६

करपादगतं यच्च शोध्यं तत्सकलं मलम् ।
नासिकाश्रोत्रनेत्रादि क्षालनेन विशुध्यति ॥ १४७

मृद्भिरामलकाद्यैश्च नखकेशादि शुध्यति ।
एवं मलादि संशोध्य वारुणं स्नानमाचरेत् ॥ १४८

अशेषमालिन्यहरं दुस्वप्नादिविनाशनम् ।

अथ स्नानविधिः—

जलदेवान्नमस्कृत्य मन्त्रस्नानं समाचरेत् ॥ १४९

अशक्तः कण्ठदघ्नं वा कटिदघ्नमथापि वा ।
आजानु जलमासिच्य मन्त्रस्नानं समाचरेत् ॥ १५०

---

[1] अर्कक्षीरी–पा. [2] विशोधनैः–पा.

देवादींस्तर्पयेद्विद्वान्मूलमन्त्रजपेन च ।
शिवं [1] देवीं शिवगणांस्तर्पयेच्छुद्धमानसः ॥ १५१

धौतवस्त्रं समादाय [2] पञ्चकच्छेन धारयेत् ।
उत्तरीयं च किंचैव धार्यं सर्वेषु कर्मसु ॥ १५२

नद्यादितीर्थस्नाने तु स्नानवस्त्रमधो नयेत् ।
वापीकूपग्रहादौ तु स्नान ऊर्ध्वं नयेद्बुधः ॥ १५३

शिलादार्वादिके वापि जले वापि [3] स्थलेऽपि वा ।
संशोध्य पीडयेद्वस्त्रं पितॄणां तृप्तये द्विजः ॥ १५४

वीरशैवस्तु नैव स्यात्तर्पिता पितृमुक्तये ।
शिवसायुज्यमाप्तं तैर्यतः शाम्भवदीक्षया ॥ १५५

इत्येवं वीरशैवानां निर्णीतं स्नानकर्म च ॥

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञ श्री नीलकण्ठ-
शिवाचार्यकृते निगमागमसारसङ्ग्रहे क्रियासारे
पञ्चम उपदेशः

———

## षष्ठ उपदेशः

स्नातस्य वीरशैवस्य वारुणेनाथ भस्मना ।
स्नानाय धारणायापि भस्मोत्पत्तिः प्रदर्श्यते ॥ १

अथ भस्मोद्धूलनार्थं भस्मोत्पादनोद्बोधकप्रमाणानि विलिख्यन्ते—

बृहज्जाबालोपनिषदि, बृहज्जाबालाभिधां मुक्तिश्रुतिं ममोपदेशं कुरुष्वेति । अथ तथेति सद्योजातात्पृथिवी, तस्या निवृत्तिः, तस्याः कपिलवर्णा नन्दा, तस्या गोमये विभूतिर्जाता । वामदेवादुदकं, तस्मात् प्रतिष्ठा, तस्याः ; कृष्णवर्णा भद्रा, तस्या गोमये भसितं जातम् । अघोराद्वह्निः, तस्मा-

---

[1] देवं–पा. [2] पञ्चपुच्छेन–पा. [3] स्थलेऽथ–पा.

द्विद्या, तस्या रक्तवर्णा सुरभिः, तस्या गोमये भस्म जातम्। तत्पुरुषाद्वायुः, तस्माच्छान्तिः, तस्याः श्वेतवर्णा सुशीला, तस्या गोमये क्षारं जातम्। ईशानादाकाशः, तस्माच्छान्त्यतीता, तस्याश्चित्रवर्णा सुमनाः, तस्या गोमये रक्षा जाता। विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनो भवन्ति पञ्च नामानि। पञ्चभिर्नामभिर्भृशमैश्वर्यकारणाद्भूतिः। भस्म सर्वाघभक्षणात्। भासनाद्भसितम्। क्षारणादापदां क्षारम्। भूतप्रेतपिशाचब्रह्मराक्षसापस्मारभवभीतिभ्योऽभिरक्षणाद्रक्षेति । तथैत्र तृतीयब्राह्मणे—"अथ भूसुण्डः कालाग्निरुद्रं विभूतियोगं प्रब्रूहीति स होवाच विकटाङ्गामुन्मत्तां महाखलां मलिनामशिवादिचिह्नाङ्कितां पुनर्धेनुं कृशाङ्गां वत्सहीनामशान्तामदुग्धदोहिनीं निरिन्द्रियां जग्धतृणां केशचेलास्थिभक्षिणीं सन्धिनीं नवप्रसूतां रोगान्वितां विहाय प्रशस्तं गोमयमाहरेत्। तत्रैते श्लोकाः—

विद्याशक्तिः समस्तानां शक्तिरित्यभिधीयते।
गुणत्रयाश्रया विद्या सा विद्या च तदाश्रया॥ १

गुणत्रयमिदं धेनुः विद्याभूद्गोमयं शुभम्।
मूत्रं चोपनिषत्प्रोक्तं कुर्याद्भस्म ततः परम्॥ २

वत्सास्तु स्मृतयश्चास्यास्तत्संभूतं तु गोमयम्।
[1]पञ्चाक्षरेण मन्त्रेण धेनुं तत्राभिमन्त्रयेत्॥ ३

[2]अष्टोत्तरशतेनाथ प्राशयेत्तु जलं तृणम्।
उपोष्य च चतुर्दश्यां शुक्ले कृष्णेऽथवा व्रती॥ ४

परेद्युः प्रातरुत्थाय शुचिर्भूत्वा समाहितः।
कृतस्नानो धौतवस्त्रः पयोऽर्थं च सृजेच्च गाम्॥ ५

उत्थाप्य गां प्रयत्नेन गायत्र्या मूत्रमाहरेत्।
सौवर्णे राजते ताम्रे धारयेन्मृण्मये घटे॥ ६

पौष्करेऽथ पलाशे वा पात्रे गोशृङ्ग एव वा।
आदधीत हि गोमूत्रं [3]मूलमन्त्रेण गोमयम्॥ ७

---

[1] आगाव इति मन्त्रेण—उ. पा. [2] गावो भगो गाव इति—उ. पा. [3] गन्धद्वारेति—उ. पा.

अभूमिपातं गृह्णीयात्पात्रे पूर्वोदिते गृही ।
गोमयं शोधयेद्विद्वान् [1] मूलमन्त्राष्टकेन च ! ८

[2] दशजप्तेन मन्त्रेण गोमयस्थान्यवर्जनम् ।
[3] भवाय नम मन्त्रेण गोमूत्रं गोमये क्षिपेत् ॥ ९

[4] शर्वाय नम इत्येवं पिण्डानां च चतुर्दश ।
कुर्यात्संशोध्य किरणैः [5] सप्तमूलेन चाहरेत् ॥ १०

त्रिदध्यादथ पूर्वोक्तपात्रे गोमयपिण्डकान् ।
[6] शैवोक्तैनैव विधिना प्रतिष्ठाप्याग्नि[7]मर्चयेत् ॥ ११

पिण्डांश्च निक्षिपेत्तत्र आद्यन्तप्रणवेन तु ।
षडक्षरस्य [8] सूत्रस्य व्यावृत्तस्य तथाक्षरैः ॥ १२

स्वाहान्तैर्जुहुयात्तत्र वर्णदेवाय पिण्डकान् ।
[9] मूलेनैवाज्यभागौ च प्रक्षिपेन्मूलमन्त्रतः ॥ १३

ततो निधनपत्रये त्रयोविंशत् जुहोति च ।
होतव्याः पञ्च [10] ब्रह्माख्या नमो देवाय शम्भवे ॥ १४

इति सर्वाहुतीर्हुत्वा चतुर्थ्यन्तैश्च मन्त्रकैः ।
[11] भवः शर्वो मृडो रुद्रो हरः शम्भुर्महेश्वरः ॥ १५

एतैश्च जुहुयाद्विद्वान् [12] मूलमन्त्राष्टकं तथा ।
[13] शिवाय त्रयहोमश्च स्विष्टकृन्मूलमन्त्रतः ॥ १६

[14] इत्थं शेषं तु निर्वर्त्य पूर्णपात्रोदकं तथा ।
[15] अष्टोत्तरशतेनाथ तर्पयेच्छुद्धमानसः ॥ १७

---

[1] श्रीर्मे भजतु मन्त्रतः–उ. पा. [2] अलक्ष्मीरिति मं–उ. पा. [3] संत्वा सिञ्चामि मं–उ. पा. [4] पञ्चानां त्विति मं–उ. पा. [5] सौरकैराहरेत्ततः–उ. पा. [6] स्वगृह्योक्तविधानेन–उ. पा. [7] मोजयेत्–उ. पा. [8] सूक्तस्य व्याकृतस्य–पा. [9] आघारावाज्यभागौ च प्रक्षिपेद्व्याहृतीः सुधीः. [10] पञ्चब्रह्मणि नमो हिरण्यबाहवे. [11] ऋतं सत्यं कद्रुद्राय यस्य वैकंकतीति च. [12] अनाशातत्रयं तथा. [13] व्याहृतीरथ हुत्वा च ततः स्विष्टकृतं हुनेत्. [14] इध्मशेषं. [15] पूर्णमसीति यजुषा जलेनान्येन बृंहयेत्.

[1] पञ्चब्रह्मेण मन्त्रेण तज्जलं शिरसि क्षिपेत् ।
[2] दशवारं च जप्तेन दिक्षु तोयं विनिक्षिपेत् ॥ १८

[3] शैवानां दक्षिणां दत्वा शान्त्यै पुलकमाहरेत् ।
आहरिष्यामि [4] शैवानां सर्वेषां कर्मगुप्तये ॥ १९

जातवेदसमेनं त्वां पुलकैश्छादयाम्यहम् ।
मन्त्रेणानेन तं वह्निं पुलकैच्छादयेत्ततः ॥ २०

त्रिदिनं ज्वलनस्थित्यै छादनं पुलकैः स्मृतम् ।
[5] शैवांश्च भोजयेद्भक्त्या स्वयं भुञ्जीत वाग्यतः ॥ २१

भस्माधिक्यमभीप्संस्तु चाधिकं गोमयं हरेत् ।
दिनत्रयेण यदि वा एकस्मिन्दिवसेऽथवा ॥ २२

तृतीये वा चतुर्थे वा प्रातः स्नात्वा सिताम्बरः ।
[6] शुक्लभास्वच्छैवसूत्रः शुक्लभस्मानुलेपनः ॥ २३

शुक्लदन्तो भस्मदिग्धो मन्त्रेणानेन मन्त्रवित् ।
[7] मूलमन्त्रं समुच्चार्य पुलकं भस्म संत्यजेत् ॥ २४

तत्र चावाहनमुखानुपचारांस्तु षोडश ।
[8] कर्तव्या व्याहृतीश्चैवं ततोऽग्निमुपसंहरेत् ॥ २५

[9] सद्यादिकेन मन्त्रेण गृह्णीयाद्भस्म चोत्तमम् ।
[10] तदनन्तरमन्त्रेण प्रमृज्य च ततः परम् ॥ २६

संयोज्य गन्धसलिलैः कपिलामूत्रकेन वा ।
चन्द्रकुङ्कुमकाश्मीरमुशीरं चन्दनं तथा ॥ २७

अगरुत्रितयं चेव चूर्णयित्वा तु सूक्ष्मतः ।
क्षिपेद्भस्मनि तच्चूर्णमोमिति ब्रह्ममन्त्रतः ॥ २८

प्रणवेनाहरेद्विद्वान् बृहतो वटकानथ ।
[11] अघोरमन्त्रतश्चाथ दशजप्तेन मूलतः ॥ २९

---

[1] पञ्चाक्षरेण मन्त्रेण. [2] प्राच्यामिति दिशं लिङ्गैर्दिक्षु. [3] ब्रह्मणे दक्षिणां. [4] देवानां. [5] ब्राह्मणान् भोज. [6] शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः. [7] ओंतद्ब्रह्मेति चोच्चार्य पौलकं भस्म सन्त्यजेत्. [8] कुर्याद्व्याहृतिभिस्त्वेवं. [9] अग्निर्भस्मेति मन्त्रेण. [10] अग्निरित्यादिमन्त्रेण. [11] अणोरणीयानिति हि मन्त्रेण च विचक्षणः.

बोधायनसूत्रे—

अथातो विभूतिसम्पादनधारणविधिं व्याख्यास्यामः। शुचिर्भूत्वा विकटाङ्गामुन्मत्तामशिवां हीनातिरिक्ताङ्गां वन्ध्यामस्थिचेलाशुचिभक्षिणीं रोगिणीं विहाय, सुलक्षणाया गोमयमादाय, पिण्डं कृत्वा संशोष्य श्वेतपचनीयैः संभारैः प्रच्छाद्य, गृह्याग्नौ वैताने वा पाचने वोपोषयेत्। बिल्वपात्रे मृण्मये वा स्थापयेत् ॥

बोधायनस्मृतौ—

सव्येन गोशकृद्ग्राह्यं वामेन त्वभिमन्त्रयेत् ॥ १

अघोरेण दहेत् पिण्डं ग्राह्यं तत्पुरुषेण तु ।
नमस्कृत्वा [1] महादेवं देवी वचनमब्रवीत् ॥ २

भस्मस्नानं महादेव तत्सम्यग्वद मे प्रभो ।

ईश्वर उवाच

अथातः सम्प्रवक्ष्यामि भस्मस्नानं सुलोचने ॥ ३

आयुष्यं बलमारोग्यं श्रीः पुष्टिर्वर्धते यथा ।
रक्षार्थं मङ्गलार्थं च सर्वसम्पत्समृद्धये ॥ ४

भस्मदिग्धमनुष्याणां ज्वरमार्यभयाय च ।
शान्तिकं पौष्टिकं भस्म कामदं च त्रिधा भवेत् ॥ ५

गोमयं योनिसम्बद्धं यद्धस्तेनैव गृह्यते ।
ब्रह्ममन्त्रैश्च सन्दग्धं तच्छान्तिकमिहोच्यते ॥ ६

सावधानः सुगोयोनिनिस्सृतं गोमयं तु यत् ।
अन्तरिक्षे गृहीत्वातः षडङ्गेन दहेत्ततः ॥ ७

पौष्टिकं तत्समाख्यातं कामदं तु ततः शृणु ।
सुशुद्धे भूतले दैवात् पतितं गोमयं तु यत् ॥ ८

प्रासादेन दहेदेतदेतत् कामदमुच्यते ।
प्रातरुत्थाय देवेशि ! मौनव्रतधरः शुचिः ॥ ९

---

[1] सुप्रबोधं–पा.

गवां गोष्ठे च गत्वा तु नमस्कृत्य च गोकुलम् ।
गवां वर्णानुरूपाणां गृह्णीयाद्गोमयं शुभम् ॥ १०

ब्राह्मणस्य तु गौः श्वेता रक्ता गौः क्षत्रियस्य तु ।
पीतवर्णा तु वैश्यस्य कृष्णा शूद्रस्य चोच्यते ॥ ११

पौर्णमास्याममायां वा अष्टम्यां वा विशुद्धधीः ।
प्रासादेन तु मन्त्रेण गृहीत्वा गोमयं शुभम् ॥ १२

हृदयेन तु मन्त्रेण पिण्डं कृत्वा तु गोमयम् ।
रविरश्मिषु संतप्तं शुचौ देशे मनोहरे ॥ १३

तुषेण वा बुसैर्वापि प्रासादेन तु निक्षिपेत् ।
अरण्युद्भवमग्निं वा तुषाग्निं वापि कारयेत् ॥ १४

अग्निं च विन्यसेत्तत्र शिव एव हि मन्त्रतः ।
सन्दहेदथ तच्चापि [1] कन्दाद्भस्म विचक्षणः ॥ १५

नवपात्रं समादाय प्रासादेन तु निक्षिपेत् ।
केतकीं पाटलीं तद्वदुशीरं चन्दनं तथा ॥ १६

निक्षिपेत्तस्य मध्ये तु सद्यो मन्त्रेण शुद्ध्यति ।

पाद्मे पुराणे श्रीरामवचनम्—

पीताम्बुधे! प्रसन्नस्त्वं यदि मे किमु दुष्करम् ॥ १७

अतस्त्वं विरजादीक्षां ब्रूहि मे मुनिसत्तम ।

अगस्त्यमुनिरुवाच

शुक्लपक्षे चतुर्दश्यामष्टम्यां वा विशेषतः ॥ १८

एकादश्यां सोमवारे आर्द्रायां वा समारभेत् ।
यं वातमाहुर्यं रुद्रं शाश्वतं परमेश्वरम् ॥ १९

परात्परतरं चाहुः परात्परतरं शिवम् ।
ब्रह्मणो जनकं विष्णोर्वह्निवाय्वोः सदाशिवम् ॥ २०

ध्यात्वा[2]ग्निनावसथ्याग्निं विशोध्य च पृथक् पृथक् ।
पञ्चभूतानि संयम्य मात्रागुणविधिक्रमात् ॥ २१

---

[1] कुण्डाद्भस्म—पा. [2] ग्नीनावस—पा.

मात्राः पञ्च चतस्रश्च त्रिमात्रा द्विस्ततः परम् ।
एकमात्रममात्रं हि द्वादशान्ते व्यवस्थितम् ॥ २२

स्थित्वा स्थानशामृतो भूत्वा व्रतं पाशुपतं चरेत् ।
इदं व्रतं पाशुपतं करिष्यामि समासतः ॥ २३

प्रातरेवं तु सङ्कल्प्य निधायाग्निं [1]समागतः ।
उपोषितः शुचिः स्नातः शुक्लाम्बरधरः स्वयम् ॥ २४

शुक्लभस्मानुलेपश्च शुक्लदन्तादिमान् बुधः ।
जुहुयाद्विरजामन्त्रैः प्राणापानादिभिस्ततः ॥ २५

अनुवाकान्तमेकाग्रं समिदाज्यचरून् पृथक् ।
[2]आत्मन्यग्निं समारोप्य "तेऽग्न" इत्यादिमन्त्रतः ॥ २६

भस्मादायाग्निरित्याद्यैर्निमृश्याङ्गानि संस्पृशेत् ।
अयं होमप्रकार उत्तरत्र प्रदर्शयिष्यते ॥

एवं वायवीयसंहितायामपि होमादिपुरस्सरः पाशुपतव्रतानुष्ठानप्रकारो बहुधा प्रपञ्चितः । स चाप्युत्तरत्र निरूपयिष्यते ।

कपिलायाः शकृच्छस्तं गृहीत्वा गगने पतत् ।
न क्लिन्नं नातिकठिनं न दुर्गन्धं न वोषितम् ॥ २७

उपर्यधः परित्यज्य गृह्णीयात् पतितं यदि ।
पिण्डीकृत्य शिवाग्नयादौ निक्षिपेन्मूलमन्त्रतः ॥ २८

अपक्वमतिपक्वं च सन्त्यज्य भसितं [3]सितम् ।
आदाय वाससालोड्य भस्माधारे विनिक्षिपेत् ॥ २९

सुकृते सुदृढे शुद्धे क्षालिते प्रोक्षिते शुभे ।
विन्यस्य मन्त्री मन्त्रेण पात्रे भस्म विनिक्षिपेत् ॥ ३०

[4]प्रोक्षितं भस्म गृह्णीयात्स्वयं चानुचरोऽपि वा ।
स्वजनाय करे दद्यान्न चाशुचितले क्षिपेत् ॥ ३१

न संस्पृशेत नीचाङ्गैः नोपेक्षेत न लङ्घयेत् ।
तस्माद्भसितमादाय विनियुञ्जीत मन्त्रितम् ॥ ३२

---

[1] स्वमार्गतः—पा. [2] आत्मन्यग्नीन्—पा. [3] शुभम्—पा. [4] प्रश्रितो—पा.

अथ भस्मव्यवस्था बृहज्जाबालोपनिषदि—

तैजसं दारवं वापि मृण्मयं चैवमेव वा ।
अन्यदा शोभनं शुद्धं भस्माधारं प्रकल्पयेत् ॥ ३३

त्रैवर्णिकानामग्निहोत्राग्निजं गृहस्थानां तदेव विवाहाग्निजं औपासनाग्निजं वा ब्रह्मचारिणां समिदग्निजम् । विरक्ताना-मतिवर्णाश्रमिणां विरजानलजम् । शूद्राणां श्रोत्रियागारपचना-ग्निजम् । अन्येषां दावानलसमुद्भवम् । यतीनां सर्वत्र स्थितम् । अतिवर्णाश्रमिणां तदेव । तत्रापि विरक्तानां सर्वत्र स्थितम् । सर्वेषां देवालये स्थितमिति । शिवयोगिनां शिवाग्निजा भूतिः । शिवालये स्थितं तल्लिङ्गमन्त्रसंस्कारदग्धं वा ॥

वासिष्ठलैङ्गे पञ्चमाध्याये—

त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवम् ।
विरजानलजं चैव धार्यं भस्म महामुने ॥ ३४

औपासनसमुत्पन्नं गृहस्थानां विशिष्यते ।
समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणाम् ॥ ३५

शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् ।
अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम् ॥ ३६

सूतसंहितायाम्—

समिदग्निसमुत्थेन विरजानलजेन वा ।
अग्निहोत्रसमुत्थेन सजलेन च भस्मना ॥ ३७

अग्निरित्यादिभिर्मन्त्रैः षड्भिर्वा सप्तभिः क्रमात् ।

तत्रैव—

स्वल्पं भस्म द्विजश्रेष्ठाः बहुधा परिकीर्तितम् ॥ ३८

श्रौतमेकं तथा स्मार्तमपरं पण्डितोत्तमाः ।
श्रौतं भस्म द्विजाः! मुख्यं स्मार्तं गौणं प्रकीर्तितम् ॥ ३९

अन्यच्चापि द्विजाः! भस्म केवलं लौकिकं परम् ।
श्रौतं भस्म तथा स्मार्तं द्विजानामेव कीर्तितम् ॥ ४०

अन्येषामपि सर्वेषामपरं भस्म लौकिकम् ।

तत्रैव शिवमाहात्म्यखण्डे—

पुनः साक्षाच्छिवज्ञानसिध्यर्थं मुनिपुङ्गवाः ॥ ४१
अग्निहोत्रसमुत्पन्नं भस्मादायादरेण तु ।

कालाग्निरुद्रोपनिषदि—

'किं द्रव्यम्' इत्यारभ्य 'द्रव्यं तदाग्नेयं भस्म' इति ।

भारद्वाजस्मृतौ—

'प्राङ्मुखश्चरणौ हस्तौ प्रक्षाल्याचम्य'—इति प्रस्तुत्य
आदाय भसितं श्वेतमग्निहोत्रसमुद्भवम् ॥ इति ॥ ४२

तत्रैव—

शूद्रहस्तस्थितं भस्म नैव धार्यं द्विजातिभिः ।
शूद्रैरन्त्यजहस्तस्थं न धार्यं भस्म जातुचित् ॥ ४४

अतोऽग्निहोत्रजेनैव भस्मना तु त्रिपुण्ड्रकम् ।
नित्यं द्विजोऽप्रमादेन कुर्यात्कर्माभिवृद्धये ॥ ४५

पुरुषार्थप्रबोधकारास्तु—

विभूतिधारणविधिस्तत्रोक्तोऽत्र मयेरितः ।
तत्रोक्ताचारसाङ्कर्यपरिहाराय नान्यथा ॥ ४६

[1] शैवैः सम्पादितं भस्म वैदिकैः शिवसन्निधौ ।
भक्त्या परमया ग्राह्यं प्रार्थयित्वापि पूजकान् ॥ ४७

(तत्रोक्तवर्त्मना सिद्धं भस्म सम्प्रार्थ्य पूजकैः)

यत्र कुत्रापि दत्तं चेत् तच्च ग्राह्यं हि वैदिकैः ।
शैवैरप्रार्थितैरेव महादेवस्य सन्निधौ ॥ ४८

लौकिकं भस्म दत्तं चेत्तच्च ग्राह्यं हि वैदिकैः ।
अप्रार्थितैस्तान्त्रिकैस्तु यत्र कुत्रापि पूजकैः ॥ ४९

---

[1] शैवसंपादितं—पा.

लौकिकं भस्म दत्तं चेत्तद्ग्राह्यं नैव वैदिकैः।
कापालिकैस्तथा शूद्रैः पाषण्डैरपरैश्च वा ॥ ५०

दत्तं चेद्भस्म वेदैकनिष्ठैस्तद्ग्राह्यमेव न।
वर्णी वा तापसो वापि शूद्रो वा यदि भूतिदः ॥ ५१

सा भूतिः सर्वदा ग्राह्या नो चेद्द्रोही ममैव सः।
इत्यस्य शिववाक्यस्य का गतिः कथयेति चेत् ॥ ५२

चण्डालगेहे विप्राणां गृहे वा परमार्थवित्।
भक्ष्यभोज्यादिवैषम्यं न किंचिदपि पश्यति ॥ ५३

इत्यस्य या गतिः सैव गतिरस्येति निश्चिनु।
यावन्तः पतिता भूमौ भस्मनः परमाणवः ॥ ५४

तावद्वर्षसहस्राणि रौरवं नरकं व्रजेत्।
इत्येवं भस्मपतने वहुदोषस्य कीर्तनात् ॥ ५५

भूत्वात्यन्तं सावधानो धारयेद्भस्म बुद्धिमान् ॥ इति ॥

अथ बृहज्जाबालोपबृंहकपाद्मोक्तविरजाहोमः प्रदर्श्यते—साधकः शुक्लचतुर्दश्यां (कृष्णचतुर्दश्यां वा) सङ्कल्पपुरस्सरं शुचिर्भूत्वा उपोष्य, तस्मिन्नेव दिने प्रशस्तां गां 'आगाव' इति मन्त्रेणाभिमन्त्र्य '.गावो भग' इति मन्त्रेण तृणं जलं च प्राशयेत्। एवं चतुर्दश्यां व्रती सन् परेद्युः प्रातरुत्थाय, शुचिर्भूत्वा समाहितः सन् कृतस्नानो धौतवासा विभूतिधारणपुरस्सरं प्रातः शिवपूजादिकं कृत्वा, पयोऽर्थं गां व्रजेत्। गवा वत्सस्य संयोगकाले सुवर्णे रजते ताम्रे मृण्मये शृङ्गमये पलाशमये वा पात्रे पुष्करपर्णे वा गायत्र्या गोमूत्रमाहरेत्। पूर्वोक्त एव पात्रे गोमयं 'गन्धद्वारे' इति खसंस्थमाहरेत्। शुद्धभूमौ पतितमपि अध ऊर्ध्वं परित्यज्य, मध्ये विद्यमानमाहरेत्। "श्रीर्मे भवत्वि"ति मन्त्रेण गोमयं शोधयेत्। "अलक्ष्मीर्मे नश्यत्वि"ति मन्त्रेण गोमयस्थं सैकतवीजधान्यादिकं वर्जयेत्। संत्वा सिञ्चामी"ति मन्त्रेण गोमूत्रं गोमये क्षिपेत्। अनन्तरं गोमयं सम्यगुपमर्द्य" पञ्चानां त्वा वातानामि"ति चतुर्दशमन्त्रैश्चतुर्दश पिण्डान् कुर्यात्। अधिकविभूतिसम्पादनेच्छा चेत्तूष्णी-

मेव पिण्डान् कुर्यात् । शुद्धपात्रे निधाय सौरकिरणैः [1] संशोष्य पूर्वोक्तपात्रे निदध्यात् । अनन्तरं [2] स्वशास्त्रोक्तविधानेनाग्निं प्रतिष्ठाप्य प्रज्वाल्य परिस्तरणादिब्रह्मवरणपूर्वकं इध्मप्रक्षेपणान्तं कृत्वा अनन्तरं पिण्डान् जुहुयात् । ओं स्वाहा परमात्मन इदं न मम । नं स्वाहा इन्द्रायेदं न मम । मं स्वाहा रुद्रायेदं न मम । शिं स्वाहा विष्णव इदम् । वां स्वाहा ब्रह्मण इदम् । यं स्वाहा स्कन्दायेदम् । पुनरपि यं स्वाहा । वां स्वाहा । शिं स्वाहा । मं स्वाहा । नं स्वाहा । ओं स्वाहा । अधिकविभूत्यपेक्षायां पिण्डान्तराणि तूष्णीमेव वह्नौ प्रक्षिपेत् ॥

आघाराज्यभागमखान्तं कृत्वा व्याहृतिभिर्जुहुयात् । निधनपतये स्वाहा[3] । निधनपतान्तिकाय । ऊर्ध्वाय, ऊर्ध्वलिङ्गाय, हिरण्याय, हिरण्यलिङ्गाय, सुवर्णाय, सुवर्णलिङ्गाय, दिव्याय, दिव्यलिङ्गाय, भवाय, भवलिङ्गाय, शर्वाय, शर्वलिङ्गाय, शिवाय, शिवलिङ्गाय, ज्वलाय, ज्वललिङ्गाय, आत्मने, आत्मलिङ्गाय, परमाय, परमलिङ्गाय, एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रं स्वाहा । सोमादिभ्य इदं न मम । सद्योजाताय स्वाहा । सद्योजातायेदम् । "भवे भवे नातिभवे भवस्व मां भवोद्भवाय स्वाहा । भवोद्भवायेदं न मम । वामदेवाय स्वाहा । ज्येष्ठाय, श्रेष्ठाय, रुद्राय, कालाय, कलविकरणाय, बलाय, बलविकरणाय, बलप्रमथनाय, सर्वभूतदमनाय, मनोन्मनाय, अघोरेभ्यः स्वाहा । घोरेभ्यो घोरघोरतरेभ्यः, शर्वेभ्यः सर्वशर्वेभ्यः स्वाहा । नमस्तेऽस्तु रुद्ररूपेभ्यः स्वाहा । "तत्पुरुषाय विद्महे—प्रचोदयात् स्वाहा । तत्पुरुषादिभ्य इदम् । ईशानः—सदाशिवों स्वाहा । ईशादानिभ्य इदम् । अथवा सद्योजातादिपञ्चमन्त्रैः पञ्चाहुतीर्जुहुयात् । नमो हिरण्यबाहवे स्वाहा । हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये स्वाहा । पशुपतये स्वाहा ऋतं सत्यं + वै नमः स्वाहा । ऋतादिभ्य इदम् । सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रः सन्महो नमो नमः स्वाहा ।

---

[1] संशोषयित्वा—पा. [2] स्वागमोक्त—पा. [3] स्वाहेतिपदं अत्र सर्वत्र योजनीयम्.

सर्वपुरुषात्मकरुद्रायेदम्। विश्वं भूतं भुवनं चित्रं+अस्तु स्वाहा। विश्वाद्यात्मकरुद्रायेदम्। कद्रुद्राय प्रचेतसे+नमोऽस्तु स्वाहा। प्रचेतात्मकरुद्रायेदम्। यस्य वैकङ्कती+प्रैव जायते स्वाहा। अस्मिन् कर्मणि हुताहुतसाद्गुण्यायेदं अनाज्ञातत्रयेण व्याहृतिभिश्च हुत्वा स्विष्टकृत्प्रभृति परिधिप्रहरणं विना जयादि समित्परिषेचनान्तं कृत्वा पूर्णपात्रं पुरतः स्थापयित्वा " पूर्णमसि—अक्षितमसि मा मे क्षेष्ठाः " इति मन्त्रेण शुद्धजलान्तरं प्रक्षिप्य 'प्राच्यां दिशि देवाः' इत्यादिना दिक्षु तोयं विनिक्षिप्य, 'ब्राह्मणेष्वमृतं हितम्, जातवेदा-मूर्जयन्त्या पुनातु' इत्यादिना शिरसि किंचिन्निक्षिप्य समुद्रं, वः प्रहिणोमीति मन्त्रेणावशिष्टं जलं भूमौ पातयेत्। ब्रह्मणे दक्षिणां दत्वा अग्न्युपस्थानान्तं कृत्वा 'आहरिष्याभि देवानां सर्वेषां कर्मगुप्तये। जातवेदसमेनं त्वां पुलकैश्छादयाम्यहम्। इति मन्त्रेण पुलकैः छादयेत्। दिनत्रयपर्यन्तं वह्निर्यथाधितिष्ठति तथा पुलका-च्छादनं कुर्यात्। पिण्डान्यूनतायां वाताद्यानुकूल्ये च द्वितीये वा तृतीये वा दिवसे विभूत्युत्पादनपक्षे तदानुकूल्येन पुलकं छादयेत्। प्रथमदिवसे यथाशक्ति ब्राह्मणान् भोजयित्वा वाग्यतः स्वयमपि भुञ्जीत। द्वितीये तृतीये चतुर्थे वा दिवसे प्रातः स्नात्वा सन्ध्यावन्दनानन्तरं शुचिर्भूत्वा शुक्लाम्बरधरः शुद्धो यज्ञोपवीती शुक्लदन्तः शुक्लमाल्यानुलेपनः सितभस्मदिग्धाङ्गः त्रिपुण्ड्रधारी अग्निसमीपं गत्वा 'ओंतद्ब्रह्मे'ति मन्त्रेण पौलकं भस्म परित्यज्य आवाहनादिषोडशोपचारान् कृत्वा 'या ते अग्ने' इत्यग्निमुपसंहरेत्। 'अग्नेर्भस्मास्यग्नेः पुरीषमसी' ति मन्त्रेण उत्तमं भस्म गृहीत्वा 'अग्निरसी'ति प्रमृज्य गङ्गादिसलिलैः कपिलाया मूत्रेण वा संयोज्य कर्पूरकाश्मीरकुङ्कुमोशीरचन्दनागरुद्वितयं सूक्ष्मरूपेण चूर्णयित्वा 'ओमिति ब्रह्मे' ति मन्त्रेण 'ओमिति' वा भस्मनि निक्षिप्य "अणोरणीयानि" ति मन्त्रेण वृहतो वटकान् कुर्यात्॥

अथ वायवीयसंहितायामुक्तप्रकारेण पाशुपतव्रतं लिख्यते—चैत्रमासे पूर्वपक्षे त्रयोदश्यां शिवक्षेत्रे शुभक्षेत्रारामे वा होमस्थलं सम्पाद्य सम्यक्शुद्धिं कृत्वा स्नानसन्ध्यावन्दनादिकं कृत्वा पूजानमस्कारपूर्वकमाचार्यमनुज्ञाप्य विशेषतः शिवपूजां कृत्वा

शुक्लाम्बरधरः शुक्लयज्ञोपवीती शुक्लमाल्यानुलेपनः प्राङ्मुख उदङ्मुखो वा दर्भासने समासीनो दर्भमुष्टिं परिगृह्य प्राणायामत्रयं कृत्वा देवं देवीं च ध्यात्वा तदनुज्ञां भावयित्वा पाशुपतव्रतं करिष्य इति सङ्कल्पं कुर्यात् ॥

यावच्छरीरपातं वा द्वादशाब्दमथापि वा ।
तदर्धं वा तदर्धं वा मासमेकं तथापि वा ॥ १

दिनद्वादशकं वाथ व्रतसङ्कल्पनावधि ।

तथा च सङ्कल्पकाले उक्तकालमध्ये यावत्कालपर्यन्तं व्रतानुष्ठानसामर्थ्यमस्ति तावत्कालमीश्वरप्रीत्यर्थमिति सङ्कल्पयेत् ॥

यद्वा 'घृताक्तो यश्चरेदेतद्व्रतं व्रतपरायणो द्वित्र्येकदिवसं वापि स च कश्चन नैष्ठिकः' इति वचनस्योत्तरत्र विद्यमानत्वादेवं कुर्यात् । अग्निप्रतिष्ठापनमुखान्तं स्वगृह्योक्तविधानेन कृत्वा पलाशसमिद्भिर्वा, तदलाभेऽश्वत्थसमिद्भिर्वा, प्राणापानादिमन्त्रैर्विंशत्याहुतीर्जुहुयात् । "प्राणापान+विपाप्मा भूयासं स्वाहा । प्राणादिभ्य इदम् । "त्वक्चर्ममांस+भूयासं स्वाहा ।" त्वगादिभ्य इदम् । शिरः पाणिपाद+भूयासं स्वाहा । शिर आदिभ्य इदम् । "उत्तिष्ठ पुरुष+विरजा विपाप्मा भूयासं स्वाहा । उत्तिष्ठादिभ्य इदं । "पृथिव्यप्तेजो+भूयासं स्वाहा । पृथिव्यादिभ्य इदम् । शब्दस्पर्श+भूयासं स्वाहा । शब्दादिभ्य इदम् । मनोवाक्काय स्वाहा । मन आदिभ्य इदम् । अव्यक्तभावैरहं ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । अव्यक्तादिभ्य इदम् । आत्मा मे शुध्यन्तां स्वाहा । आत्मन इदम् । अन्तरात्मा मे शुध्यन्तां स्वाहा । अन्तरात्मन इदम् । परमात्मा मे शुध्यन्तां स्वाहा । परमात्मन इदम् । क्षुधे स्वाहा । क्षुध इदम् । क्षुत्पिपासाय स्वाहा । क्षुत्पिपासायेदम् । विविद्यै स्वाहाये । विविद्या इदम् । ऋग्विधानाय स्वाहा । ऋग्विधानायेदम् । पृषोत्काय स्वाहा । पृषोत्कायेदम् । क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीर्नाशयाम्यहं स्वाहा । क्षुदादिभ्य इदम् । अभूतिमसमृद्धिं च सर्वान्निर्णुद मे पाप्मानं स्वाहा । मन्त्रोक्तदेवताभ्य इदम् । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ।

अन्नमयादिभ्य इदम् । एवमनेन विंशत्याहुतयः । आन्ध्रपाठे प्राणमयमनोमयविज्ञानमयप्रकारः । द्राविडपाठे तु प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । उद्देशत्यागः पूर्ववत् । वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणरेतोबुध्याकूतिसङ्कल्पा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा[1] । शिरः पाणिपादपार्श्वपृष्ठोदरजङ्घाशिश्नोपस्थपायवो मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । त्वक्चर्ममांसरूधिरमेदोऽस्थिमज्जा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । पृथिव्यप्तेजोवाय्वाकाशा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । विविट्यै स्वाहा । पृषोक्ताय स्वाहा । उत्तिष्ठपुरुषहरितपिङ्गललोहिताक्ष देहि देहि तापयिता मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । ओं स्वाहा । परमात्मन इदम् । एवं समिदाज्यैः प्रत्येकमेकादशाहुतयः कर्तव्याः ॥

विरजाहोमं कृत्वा अनन्तरं तत्त्वहोमः कार्यः । तत्प्रकारस्तु—

अग्निमाधाय विधिवद्विरजाहोमकारणात् ।
हुत्वाज्येन समिद्भिश्च चरुणा च यथाविधि ॥
पूर्णायां पुरतो भूयस्तत्त्वानां शुद्धिमाविशन् ।
जुहुयान्मूलमन्त्रेण तैरेव समिदादिभिः ॥
तत्त्वान्येतानि मद्देहे शुध्यन्तामित्यनुस्मरन् ।

इति वचनवलेनैवं प्रतीयते । आकाशतत्त्वं मे शुध्यन्तां+विरजा विपाप्मा भूयासं स्वाहा । ओं नमः शिवाय स्वाहा । एवमुत्तरत्रापि । तत्त्वशब्दाकाशोपाधिकाशिवायेदम् । वायुर्मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । ओं नमः शिवाय स्वाहा । वायूपाधिकशिवायेदम् । एवमुत्तरत्राप्युद्देशत्याग ऊहनीयः ।

---

[1] वागादिभ्य इदम् .

अग्निर्मे शुध्यन्तां स्वाहा। आपो मे शु—स्वाहा। पृथिवी मे शुध्यन्तां स्वाहा। शब्दतन्मात्रं मेशु स्वाहा। स्पर्शतन्मात्रं मे शु—स्वाहा। रूपतन्मात्रं मे शु—स्वाहा। रसतन्मात्रं मे शु—स्वाहा। गन्धतन्मात्रं मे शु—स्वाहा। श्रोत्रेन्द्रियं मे शु—स्वाहा। त्वगिन्द्रियं मे शु—स्वाहा। चक्षुरिन्द्रियं मे शु—स्वाहा। जिह्वेन्द्रियं म शु—स्वाहा। घ्राणेन्द्रियं मे शु—स्वाहा। वागिन्द्रियं मे शु—स्वाहा। पाणीन्द्रियं मे शु—स्वाहा। पादेन्द्रियं मे शु—स्वाहा। पाय्विन्द्रियं मे शु—स्वाहा। उपस्थेन्द्रियं मे शुध्यन्तां स्वाहा। त्वङ्मे शुध्यन्तां स्वाहा। चर्म मे शुध्यन्तां स्वाहा। मांसं मे शु—स्वाहा। रूधिरं मे शु—स्वाहा। मेदो मे शु—स्वाहा। अस्थि मे शु—स्वाहा। मज्जा मे शु—स्वाहा। प्राणो मे शु—स्वाहा। अपानो मे शु—स्वाहा। व्यानो मे शु—स्वाहा। उदानो मे शु—स्वाहा। समानो मे शु—स्वाहा। मनो मे शु—स्वाहा। अहंकारो मे शु—स्वाहा। ख्यातिर्मे शु—स्वाहा। सत्वं मे शु—स्वाहा। रजो मे शु—स्वाहा। तमो मे शु—स्वाहा। प्रकृतिर्मे शु—स्वाहा पुरुषो मे शु—स्वाहा। रागो मे शु—स्वाहा। विद्या मे शु—स्वाहा। कला मे शु—स्वाहा। नियतिर्मे शु—स्वाहा। कालो मे शु—स्वाहा। माया मे शु—स्वाहा। शुद्धविद्या मे शु—स्वाहा। महेश्वरो मे शु—स्वाहा। सदाशिवो मे शु—स्वाहा। शक्तिर्मे शु—स्वाहा। शिवतत्त्वं मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा। ओं नमः शिवाय स्वाहा। शिवतत्त्वोपाधिकशिवायेदम्। एवं समिदाज्यैः प्रत्येकं जुहुयात्। अत्र वचनानि—

पञ्चभूतानि तन्मात्रा पञ्चकर्मेन्द्रियाणि च।<br>
ज्ञानकर्मविभेदेन पञ्च पञ्च विभागशः॥

त्वगादिधातवः सप्त पञ्च प्राणादिवायवः।<br>
मनश्चाहंकृतिः ख्यातिः गुणाः प्रकृतिपूरुषौ॥ २॥

रागो विद्या कला चेति नियतिः काल एव च।<br>
माया च शुद्धविद्या च महेश्वरसदाशिवौ॥ ३॥

शक्तिश्च शिवतत्वं च तत्त्वानि क्रमशो विदुः।<br>
मन्त्रैश्च विरजैर्हुत्वा होतासौ विरजो भवेत्॥ ४॥

अथ गोमयमादाय पिण्डीकृत्वाभिमन्त्र्य च ।
न्यस्याग्नौ तं च संरक्ष्य दिने तस्मिन् हविष्यभुक् ॥ ५ ॥

इति वचनेन पिण्डं कृत्वाभिमन्त्र्य चेति विद्यमानत्वात् । दर्शे सायं प्रातर्दोहनवत् पिण्डविषये मन्त्रावृत्तिं कुर्यात् । तत्रादौ पूर्वमेव प्रशस्तगोमयमादाय प्रशस्तगोमूत्रेण संयोज्य हस्तेन सम्यक्पेषणं कृत्वा तत्रस्थबीजक्षुद्रपाषाणादीन् बहिर्निरस्य पिण्डं कृत्वा शुद्धपात्रे निधाय तरणिकिरणैः सम्यक्छोषयित्वा विद्यमानान् पिण्डान् तत्पात्रेण सहानीय हस्तेन स्पृष्ट्वा आगाव इत्यादि मन्त्रान् जपेत् । आगावो अग्मन्नुत भद्रमक्रन् । सीदन्तु गोष्ठे रणयन्त्वस्मे । प्रजावतीः पुरुरूपा इह स्युः । इन्द्राय पूर्वीरुषसो दुहानाः । गावो भगः चिदिन्द्रं तत् सत् इत्यादि । गन्धद्वारां—श्रियम् । श्रीर्मे भजतु । अलक्ष्मीर्मे नश्यतु । संत्वा सिञ्चामि यजुषा प्रजामायुर्धनं च । पञ्चानां त्वा वातानां यन्त्राय धर्ताय गृह्णामि इत्यदि चतुर्दशमंन्त्रैः सङ्गृह्य न्यस्याग्नाविति विद्यमानत्वात् , अनुक्तमविरूद्धमन्यतो ग्राह्यमिति न्यायात् । अग्नौ न्यासप्रकारः मन्त्रेणैव प्रतीयते ॥

मन्त्रश्च—

पिण्डांश्च निक्षिपेत्तत्र आद्यन्तप्रणवेन तु ।
षडक्षरस्य मन्त्रस्य व्यावृत्तस्य तथाक्षरैः ।
स्वाहान्तैर्जुहुयात्तत्र तत्तद्देवाय पिण्डकान् ॥

इति प्रश्नोत्तरखण्डे विद्यमानत्वादाद्यन्तप्रणवेनाग्नौ प्रक्षिपेन्मन्त्रस्य षडक्षरस्य व्यावृत्तस्याक्षरैः स्वाहान्ते जुहुयात् । वर्णदेवाय पिण्डकानिति बृहज्जाबालोपनिषद्वचनस्य विद्यमानत्वात् । एवंविधाहुतिप्रकारः । ओं स्वाहा । परमात्मन इदम् । नं स्वाहा । इन्द्रायेदम् । मं स्वाहा । रुद्रायेदम् । शिं स्वाहा । विष्णव इदम् । वां स्वाहा । ब्रह्मण इदम् । यं स्वाहा । स्कन्दायेदम् । पुनरपि यं स्वाहा । वां स्वाहा । शिं स्वाहा । मं स्वाहा । नं स्वाहा । ओं स्वाहा । ओं स्वाहा । इतरांस्तूष्णीमेव प्रक्षिपेत् ॥ "इन्द्रो रुद्रो हरिर्ब्रह्मा स्कन्दस्तेषां च देवताः ।" इति वायवीयसंहितायाम् । एवमुपरिष्टात्तन्त्रं कृत्वा अग्न्युपस्थानं च कृत्वा

"आहरिष्यामि देवानां सर्वेषां कर्मगुप्तये ।
जातवेदसमेनं त्वां पुलकैश्छादयाम्यहम् ॥"

इति मन्त्रेण वह्निं पुलकैश्छादयेत् । दिनत्रयपर्यन्तं वह्निर्यथा तिष्ठति यथा भस्मनि धावल्यं भवति तथा पुलकैराच्छादनं कुर्यात् । "दिने तस्मिन् हविष्यभुगि"ति वचनात् त्रयोदश्यां हविष्याशी भूत्वा सायन्तनं कर्म निर्वर्त्य, पञ्चाक्षरजपसाम्बशिवध्यानादिकं कृत्वा मौनी सन् रात्रौ भूमावग्निसमीपे शयीत ॥

"प्रभाते च चतुर्दश्यां कृत्वा सर्वं पुरोदितम् ।
दिने तस्मिन् निराहारः कालशेषं समापयेत् ॥"

इति वचनात् चतुर्दश्यामपि ब्राह्मे मुहूर्ते उत्थाय गुरुध्यानं साम्बशिवध्यानं च कृत्वा कृतस्नानः कृताह्निको वैशेषिकं शिवपूजां च कृत्वा अग्निमुखं च कृत्वा समिदन्नाज्यैर्विरजाहोमं कृत्वा उत्तराङ्गं च कृत्वा पूर्वेद्युवदग्निं संरक्ष्य तस्मिन् दिवसे निराहारः सन् कालविशेषं पञ्चाक्षरजपसाम्बशिवध्यानादिना पुराणपठनादिना च नयेत् ॥

"प्रातः पर्वणि चाप्येवं कृत्वा होमावसानतः ।
उपसङ्गृह्य रुद्राग्निं गृह्णीयाद्भस्म यत्नतः ॥"

इति वचनेन तृतीयदिवसेऽपि ब्राह्मे मुहूर्ते चोत्थाय गुरुशिवध्यानादिकं शौचस्नानसन्ध्यावन्दनादिकं कृत्वा अग्निसमीपं गत्वा, मुखान्तं कृत्वा [1] समिदाज्यैर्विरजाहोमं तत्त्वहोमं च पूर्ववत् कृत्वा स्विष्टकृत्प्रभृत्युत्तरांगानि कृत्वा 'यां ते अग्ने' इत्यग्निमुपसंहरेत् । उत्तराङ्गानि च प्रधानाहुत्यनन्तरं हविषा कृतस्विष्टकृज्जयादिहोमः । परिध्यञ्जनलेपकार्यं प्रस्तरतृणप्रहरणं निर्देशनमग्निमभिमन्त्र्य भूमौ निमार्ष्टि । परिधिप्रहरः । संस्रावहोमः । प्रायश्चित्ताहुतयः । "सप्त ते अग्न" इति पूर्णाहुतिः । प्राणायामः परिषेचनप्रणीतामोक्षणं ब्रह्मोद्वासनमग्न्युपस्थानमग्निसमारोहणम् । तृतीयदिवसे चाग्न्युपसंहारात्पूर्वमेव "ओं तद्ब्रह्मे"ति बृहज्जाबालपाद्मपुराणयो-

---

[1] समिदन्नाज्यैः—पा.

विद्यमानत्वेन तेन मन्त्रेण पौलाक्यं भस्म परित्यजेत्। तस्य पूजां कुर्यात्। "तत आवाहनमुखानुपचारांस्तु षोडशे"ति विद्यमानत्वात् परमशिवस्वरूपाग्निदेवतां प्रत्यावाहनादिषोडशोपचारान् कृत्वा अनन्तरमग्निसमारोपणं (कुर्यात्)। "गृह्णीयात् भस्म यत्नत" इति प्रकृतग्रन्थे विद्यमानत्वात्। "अग्नेर्भस्मास्यग्नेः पुरीषमसि" इति तदुत्तमं भस्म गृहीत्वा शुद्धपात्रे निधाय 'अग्निरसी'ति प्रमृज्य गङ्गादिसलिलैः कपिलामूत्रेण वा संयोज्य कर्पूरकाश्मीरकुङ्कुमोशीरचन्दनागरुद्वितयं सूक्ष्मरूपेण चूर्णयित्वा 'ओमिति ब्रह्मेति मन्त्रेण ओमिति वा भस्मनि निक्षिप्य "अणोरणीयान्" इति मन्त्रेण बृहतो वटकान् कुर्यात्। गङ्गादिसलिलाभावे तूष्णीमेव भस्म स्थापयेत्। यावत्सङ्ख्याकदिनपर्यन्तं व्रतसङ्कल्पः तावद्दिनपर्यन्तं जटी वा मुण्डी वा शिखामात्रजटी वा भवेत्॥

ननु गृहस्थस्य मुण्डनं कथं [1]न शिखावपनमिति चेन्न ; सत्रविशेषे प्रायश्चित्तविशेषे च गृहस्थस्यापि मुण्डनस्य विहितत्वात्। अत्रापि व्रतपरत्वेन व्रताङ्गमुण्डनादिकं विहितम्। विकल्पेन च सत्रविषये। वीतलज्जश्चेद्दिगम्बरः यद्वा काषायवसनः अथवा चीराम्बरः एकाम्बरो वा वल्कली वा दण्डी मेखली चेत्यपि विकल्पः। यद्वा पूर्वत्रापि जटादिविषये वस्त्रादिविषये च व्यवस्थितविकल्पाः। गृहस्थश्चेच्छिखामात्रजटी एकाम्बरधरः दण्डधारी मेखली सन् वर्तेत, अयं व्रतनिष्ठ इति लोकस्य ज्ञापनार्थं पूजार्थं च। वानप्रस्थाश्रमी चेज्जटी वल्कली चीराम्बरधरो दण्डी मेखली वेति सर्वत्र साधारणम्। सन्यासी चेत् मुण्डो दिगम्बरः काषायवसनो वाचंयमी वा॥

ननु सन्यासिनो होमाधिकाराभावात् इदं व्रतं [2]सत्यमिति चेत्—सत्यं, हस्तपादादिवच्छिष्य इति न्यायात् शिष्यमुखेन होमादिसम्भवात्। यद्वा सन्यासकाल एव विरजाहोमस्य कृतत्वात् तत्त्वहोमस्य जपद्वारा निर्वर्तयितुं शक्यत्वात्। गृहस्थेभ्यो विभूतिग्रहणसंभवात्॥

---

[1] सशिखवपनमिति—पा. [2] नित्यमिति—पा.

यद्वा गृहस्थः सन् विरक्तो यदि पाशुपतव्रतधारणार्थं प्रवृत्तः तेन सर्वं क्रमेण कर्तुं शक्यम्। तथा हि—पूर्वं जीवश्राद्धादिकं कृत्वा विरजाहोमतत्त्वहोमपिण्डहोमान् कृत्वा अग्निमुपसङ्गृह्य विभूतिसङ्ग्रहं कृत्वा प्रेषोच्चारणं कृत्वा दिगम्बरः काषायवसनो वा गृहाद्बहिर्गत्वा कालत्रयेऽप्याथर्वणोक्तप्रकारेण व्रतमाचरेत्। एवं कुर्वन् भैक्षाचरणमेकवारमाचरन् यावदायुषं संवर्तेत। ज्ञानार्थी चेच्छिवभक्तं ब्रह्मनिष्ठं सन्यासिनं प्रति गच्छेत्। अत्यन्तवैराग्याभावे ईषद्वैराग्ये जटी वल्कली सन् भस्मव्रतनिष्ठो यावदायुषं वर्तेत। सर्वात्मना वैराग्याभावे शिखामात्रजटी स्नात्वा एकाम्बरो दण्डधारी मेखली सन् पादप्रक्षालनपूर्वकं आचमनं कृत्वा अङ्गन्यासकरन्यासौ पञ्चाक्षरेण कृत्वा, अनन्तरं विध्युक्तप्रकारेण भस्मधारणम्। नित्यशिवपूजा। अनन्तरं व्रताङ्गत्वेन स्फाटिकं लिङ्गं सम्पाद्य विधिना प्रतिष्ठाप्य नवरत्नखचिततया सौवर्णं पद्मं सकर्णिकं सकेसरं सदलं च सम्पाद्य, तदभावे रक्तपद्मं सितपद्मं वा सम्पाद्य तत्कर्णिकायां प्रतिष्ठितं तनीयः स्फाटिकं लिङ्गं स्थापयित्वा, सति विभवे शिवपूजादिद्रव्यं यद्यदस्ति तत्सर्वं प्रयत्नेन सम्पाद्य पूजयित्वा यथाविभवं वा पूजयित्वा, अनन्तरं देव्या सह परमेश्वरस्य कल्याणं भावयित्वा, यथाशक्ति ब्राह्मणेभ्यो द्रव्यं दत्वा पूजाशेषं समापयेत्। अनन्तरं पूर्वोक्तपूजासाधनविल्वपत्रपद्मादिद्रव्यनियमः। तेषां सङ्ख्यानियमः। अनन्तरमर्घ्यधूपादौ विशेषः। अनन्तरं नैवेद्यात्पूर्वमावरणपूजा। अनन्तरं महानैवेद्यम्। अनन्तरं ताम्बूलादिनीराजनान्तमन्यद्राजोपचारान् कृत्वा स्तोत्रजपप्रदक्षिणनमस्कारादिकं निर्वर्त्य, लिङ्गतो देवमभिमुखीकृत्य, अनन्तरमग्निपूजां कृत्वा अग्निं चोद्वास्य कृत्यशेषं कुर्यात्। एवमेव सङ्कल्पितव्रतदिनेषु अग्न्युत्पादनविरजाहोमास्तत्त्वहोमाश्च कार्याः। अनन्तरं व्रताङ्गत्वेन पूजितं [1]लिङ्गमादाय शिवालयं निर्माय तत्र देवं निदध्यात्। अनन्तरं गुरुप्रीतिभक्तपूजादीनानाथतोषणम्। अनन्तरं यजमानस्य भोजनशयनादिनियमः। एतत्सर्वं वायवीयसंहितायां पूर्वभागे एकोनत्रिंशाध्याये स्पष्टम्। तदेव लिख्यते। ऋषयः—

[1] लिङ्गमुपासयेत्-पा.

भगवन् श्रोतुमिच्छामो व्रतं पाशुपतं परम् ।
ब्रह्मादयोऽपि यत्कृत्वा सर्वे पाशुपताः स्मृताः ॥ १

वायुः—

रहस्यं वः प्रवक्ष्यामि सर्वपापनिकृन्तनम् ।
व्रतं पाशुपतं श्रौतमथर्वशिरसि स्थितम् ॥ २

कालश्चित्रापौर्णमासी देशः शिवपरिग्रहः ।
क्षेत्रारामादिरन्यो वा प्रशस्तः शुभलक्षणः ॥ ३

तत्र पूर्वंत्रयोदश्यां सुस्नातः सुकृताह्निकः ।
अनुज्ञाप्य स्वमाचार्यं सम्पूज्य प्रणिपत्य च ॥ ४

पूर्वं वैशेषिकीं कृत्वा शुक्लाम्बरधरः स्वयम् ।
शुक्लभस्मानुलिप्ताङ्गः शुक्लमाल्यानुलेपनः ॥ ५

दर्भासने समासीनो दर्भमुष्टिं प्रगृह्य च ।
प्राणायामत्रयं कृत्वा प्राङ्मुखो वाप्युदङ्मुखः ॥ ६

ध्यात्वा देवं च देवीं च तद्विज्ञापनवर्त्मना ।
व्रतमेतत्करोमीति भवेत्सङ्कल्प्य दीक्षितः ॥ ७

यावच्छरीरपातं वा द्वादशाब्दमथापि वा ।
तदर्धं वा तदर्धं वा मासद्वादशकं पुनः ॥ ८

तदर्धं वा तदर्धं वा मासमेकमथापि वा ।
दिनद्वादशकं वाथ [1] व्रतसङ्कल्पनावधि ॥ ९

अग्निमाधाय विधिवद्विरजाहोमकारणात् ।
हुत्वाज्येन समिद्भिश्च चरुणा च यथाक्रमम् ॥ १०

पूर्णायां पुरतो भूयः तत्वानां शुद्धिमादिशन् ।
जुहुयान्मूलमन्त्रेण तैरेव समिदादिभिः ॥ ११

तत्वान्येतानि मद्देहे शुध्यन्तामित्यनुस्मरन् ।
पञ्चभूतानि तन्मात्रापञ्चकं चेन्द्रियाणि च ॥ १२

---

[1] व्रतं संकल्प—पा.

ज्ञानकर्मविभागेन पञ्च पञ्च विभागशः ।
त्वगादिधातवः सप्त पञ्च प्राणादिवायवः ॥ १३

मनश्चाहंकृतिः ख्यातिर्गुणाः प्रकृतिपूरुषौ ।
रागो विद्या कला चैव नियतिः काल एव च ॥ १४

माया च शुद्धविद्या च महेश्वरसदाशिवौ ।
शक्तिश्च शिवतत्त्वं च तत्त्वानि क्रमशो विदुः ॥ १५

मन्त्रैस्तु वैरजैर्हुत्वा होतासौ विरजो भवेत् ।
अथ गोमयमादाय पिण्डीकृत्याभिमन्त्र्य च ॥ १६

न्यस्याग्नौ तं च संरक्ष्य दिने तस्मिन् हविष्यभुक् ।
प्रभाते च चतुर्दश्यां कृत्वा सर्वं पुरोदितम् ॥ १७

दिने तस्मिन्निराहारः कालशेषं समापयेत् ।
प्रातः पर्वणि चाप्येवं कृत्वा होमावसानतः ॥ १८

उपसङ्गृह्य रुद्राग्निं गृह्णीयाद्भस्म यत्नतः ।
ततस्तु जटिलो मुण्डी शिखैकजट एव वा ॥ १९

भूत्वा स्नात्वा पुनर्वीतलज्जश्चेत्स्याद्दिगम्बरः ।
अन्यः काषायवसनश्चर्मी चीनाम्बरोऽथ वा ॥ २०

एकाम्बरो वल्कली वा भवेद्दण्डी च मेखली ।
प्रक्षाल्य चरणौ पश्चाद्द्विराचम्यात्मनस्तनुम् ॥ २१

सकलीकृत्य तद्भस्म विरजानलसंभवम् ।
'अग्निरित्यादिभिः' मन्त्रैः षड्भिराथर्वणैः क्रमात् ॥ २९

विमृज्याङ्गानि मूर्धादिचरणान्तं च तैः स्पृशेत् ।
ततस्तेन क्रमेणैव समुद्धूल्य च भस्मना ॥ २३

सर्वाङ्गोद्धूलनं कुर्यात् प्रणवेन शिवेन वा ।
ततस्त्रिपुण्ड्रं रचयेत्त्रियायुषसमाह्वयम् ॥ २४

शिवभावं समागम्य शिवाचारं समाचरेत् ।
कुर्यात्त्रिसन्ध्यमप्येवमेतत् पाशुपतं व्रतम् ॥ २५

भुक्तिमुक्तिप्रदं चैतत् पशुत्वं विनिवर्तयेत् ।
तत्पशुत्वं परित्यज्य कृत्वा पाशुपतं व्रतम् ॥ २६

पूजनीयो महादेवो लिङ्गमूर्तिः सनातनः।
पद्ममष्टदलं हैमं नवरत्नैरलङ्कृतम् ॥ २७

कर्णिकाकेसरोपेतमासनं परिकल्पयेत्।
विभवे, तदभावे तु रक्तं सितमथापि वा ॥ २८

पद्मं तस्याप्यभावे तु केवलं भावनामयम्।
तत्पद्मकर्णिकामध्ये कृत्वा लिङ्गं [1] तनीयसि ॥ २९

स्फाटिकं पीठिकोपेतं पूजयेद्विस्तृतं क्रमात्।
प्रतिष्ठाप्य विधानेन तल्लिङ्गं कृतशोभनम् ॥ ३०

परिकल्प्यासनं मूर्तिं पञ्चवक्त्रप्रकारतः।
पञ्चगव्यादिभिः पुण्यैः यथाविभवसंहृतैः ॥ ३१

स्नापयेत् कलशैर्दिव्यैः सहस्रादिषु [2] संभृतैः।
गन्धद्रव्यैः सकर्पूरैश्चन्दनाद्यैः सकुङ्कुमैः ॥ ३२

सवेदिकं समालिप्य लिङ्गं भूषणभूषितम्।
विल्वपत्रैश्च पद्मैश्च रक्तैः श्वेतैरथोत्पलैः ॥ ३३

नीलोत्पलैस्तथान्यैश्च पुष्पैस्तैस्तैः सुगन्धिभिः।
पुण्यैः प्रशस्तैश्चित्रैश्च दूर्वाक्षतसुमादिभिः ॥ ३४

समभ्यर्च्य यथालाभं महापूजाविधानतः।
धूपं दीपं तथा चार्घ्यं नैवेद्यं च विशेषतः ॥ ३५

निवेदयित्वा विभवे कल्याणं च समाचरेत्।
इष्टानि तु विशिष्टानि न्यायेनोपार्जितानि तु ॥ ३६

सर्वद्रव्याणि देयानि भूते त्वस्मिन् विशेषतः।
श्रीपद्मोत्पलपत्राणां सङ्ख्या साहस्रिकी मता ॥ ३७

प्रत्येकमपरा सङ्ख्या शतमष्टोत्तरं तथा।
तत्रापि च विशेषेण न त्यजेद्विल्वपत्रकम् ॥ ३८

हैममेकं परं प्राहुः पद्मपत्रसहस्रकात्।
नीलोत्पलादिष्वप्येतत्समानं विल्वपत्रकम् ॥ ३९

---

[1] कनीयसं–पा. [2] संभवैः–पा.

पुष्पान्तरे न नियमो यथालाभं प्रपूजयेत् ।
अष्टाङ्गमर्घ्यमुत्कृष्टं धूपालेपौ विशेषतः ॥ ४०

कृष्णागरुमघोराख्ये वक्त्रे सद्ये मनश्शिलाम् ।
चन्दनं वामदेवाख्ये हरितालं च पौरुषे ॥ ४१

ऐशाने भसितं केचिदालेपनमितीदृशम् ।
न धूप इति मन्यन्ते धूपान्तरविधानतः ॥ ४२

सितागरुमघोराख्ये मुखे कृष्णागरुं पुनः ।
पौरुषे गुग्गुलं सद्ये सौम्ये सौगन्धिकं मुखे ॥ ४३

ईशानेऽपि तु शीतारिं दद्याद्धूपं विशेषतः ।
शर्करामधुकर्पूरकपिलाघृतसंयुतम् ॥ ४४

चन्दनागरुकोष्ठाद्यं वामास्ये सम्प्रचक्षते ।
कर्पूरवर्तिराज्याढ्या देया दीपावलिस्तथा ॥ ४५

अर्घ्यमाचमनं देयं प्रतिवक्त्रमतः परम् ।
प्रथमावरणे पूज्यौ क्रमाद्धेरम्बषण्मुखौ ॥ ४६

ब्रह्माङ्गानि ततश्चैवं प्रथमावरणेऽर्चिते ।
द्वितीयावरणे पूज्या विद्येशाश्चक्रवर्तिनः ॥ ४७

तृतीयावरणे पश्चाद्भवाद्याश्चाष्टमूर्तयः ।
महादेवादयस्तत्र तथैकादश मूर्तयः ॥ ४८

चतुर्थावरणे पूज्याः सर्वे एव गणेश्वराः ।
बहिरेव तु पद्मस्य पञ्चमावरणे क्रमात् ॥ ४९

दश दिक्पतयः पूज्याः सास्त्राः सानुचरास्तथा ।
ब्रह्मणो मानसाः पुत्राः सर्वेषां ज्योतिषां गणाः ॥ ५०

सर्वे देवाश्च देव्यश्च सर्वाः सर्वेऽपि खेचराः ।
पातालवासिनश्चान्ये सर्वे मुनिगणा अपि ॥ ५१

योगिनो गुरवः सर्वे पञ्चगोमातरस्तथा ।
क्षेत्रपालश्च सगणः सर्वं चैतच्चराचरम् ॥ ५२

अथावरणपूजान्ते सम्पूज्य परमेश्वरम् ।
साज्यं सव्यञ्जनं हृद्यं हविर्भक्त्या निवेदयेत् ॥ ५३

मुखवासादिकं दत्वा ताम्बूलं सोपदंशकम् ।
अलङ्कृत्य च भूयोऽपि नानापुष्पविभूषणैः ॥ ५४

नीराजनान्तं विस्तीर्य पूजाशेषं समापयेत् ।
चषकं सोपहारं च शयनं च समर्पयेत् ॥ ५५

यद्यन्नृपोचितं द्रव्यं तत्सर्वमनुरूपतः ।
कृत्वा च कारयित्वा च कृत्वा च प्रतिपूजनम् ॥ ५६

स्तोत्रं पापहरं जप्त्वा विद्यां पञ्चाक्षरीं जपेत् ।
प्रदक्षिणं प्रणामं च कृत्वात्मानं समर्पयेत् ॥ ५७

ततः पुरस्ताद्देवस्य गुरुविंद्ये च पूजयेत् ।
दत्वार्घ्यमष्टौ पुष्पाणि देवमावाह्य लिङ्गके ॥ ५८

अग्नेश्चाग्निं च सम्पूज्य (अ) यथोद्वास्य तमप्युत ।
प्रत्यहं जनयित्वैवं कुर्यात्सर्वं पुरोदितम् ॥ ५९

ततस्तत्साम्बुजं लिङ्गं सर्वोपकरणान्वितम् ।
समर्पयेत्स्वगेहे वा तथैव च शिवालये ॥ ६०

सम्पूज्य च गुरूनन्यात् व्रतिनश्च विशेषतः ।
भक्तांश्चरांश्च शक्तश्चेद्दीनानाथांश्च तोषयेत् ॥ ६१

स्वयं चानशनप्रायः फलमूलाशनोऽपि वा ।
पयोव्रती वा भिक्षाशी भवेदेकाशनस्तथा ॥ ६२

नक्तं युक्ताशनो नित्यं भूशयो विरतःशुचिः ।
भस्मशायी तृणे शायी चीराजिनशयोऽथवा ॥ ६३

ब्रह्मचर्यरतो नित्यं व्रतमेतत्समाचरेत् ।
अर्कवारे तथार्द्रायां पञ्चदश्यां च पक्षयोः ॥ ६४

अष्टम्यां च चतुर्दश्यां शक्तावुपवसेदपि ।
पाषण्डपतितोदक्यासूतिकान्त्यजपूर्वकान् ॥ ६५

वर्जयेत् सर्वयत्नेन मनसा कर्मणा गिरा ।
क्षमा दान दयासत्याहिंसाशीलः सदा भवेत् ॥ ६६

सन्तुष्टश्च प्रशान्तश्च जपध्यानरतस्तथा ।
कुर्यात्त्रिषवणस्नानं भस्मस्नानमथापि वा ॥ ६७

पूजां वैशेषिकीं चैव कर्मणा मनसापि वा।
बहुनात्र किमुक्तेन नाचरेदशिवं व्रती ॥ ६८

प्रमादात्तु तदाचारे निरूप्य गुरुलाघवम्।
उचितां निष्कृतिं कुर्यात् पूजाहोमजपादिभिः ॥ ६९

आसमाप्तेर्व्रतस्यैवमाचरेन्न प्रमादतः।
गोदानं च वृषोत्सर्गं कुर्यात् पूजां स संसदाम् ॥ ७०

सामान्यमेतत् कथितं व्रतस्यास्य समासतः।
प्रतिमासं विशेषं च प्रवदामि यथाक्रमम् ॥ ७१

वैशाखे वज्रलिङ्गं तु ज्येष्ठे मरकतं शुभम्।
आषाढे मौक्तिकं विद्याच्छ्रावणे नीलनिर्मितम् ॥ ७२

मासे भाद्रपदे चैव पद्मरागमयं वरम्।
आश्वयुज्यां च विधिवद्गोमेधकमयं शुभम् ॥ ८३

कार्तिक्यां वैद्रुमं लिङ्गं वैडूर्यं मार्गशीर्षके।
पुष्यरागमयं पुष्ये माघे तु मणिजं रवेः ॥ ७४

फाल्गुन्यां चन्द्रकान्तोत्थं माघे तद्व्यत्ययोऽथवा।
सर्वमासेषु रत्नानामभावे हैममेव वा ॥ ७५

हेमाभावे राजतं वा ताम्रजं शैलमेव वा।
मृण्मयं वा यथालाभं क्षणिकं वान्यदेव वा ॥ ७६

सर्वगन्धमयं वाथ लिङ्गं कुर्याद्यथारुचि।
व्रतावसानसमये समाचरितनैत्यिकः ॥ ७७

कृत्वा वैशेषिकीं पूजां हुत्वा चैव यथा पुरा।
सम्पूज्य पूज्यानाचार्यान् व्रतिनश्च विशेषतः ॥ ७८

देशिकेनाभ्यनुज्ञातः प्राङ्मुखो वाप्युदङ्मुखः।
दर्भासनो दर्भपाणिः प्राणापानौ नियम्य च ॥ ७९

जपित्वा शक्तितो मूलं ध्यात्वा साम्बं त्रियम्बकम्।
अनुज्ञाप्य यथापूर्वं प्राणापानौ नियम्य च ॥ ८०

अनुज्ञाप्य बुधान् सर्वान् नमस्कृत्वा कृताञ्जलिः।
समुत्सृजामि भगवन् व्रतमेतत्त्वदाज्ञया ॥ ८१

इत्युक्त्वोदीर्य मूलं तु दर्भानुत्तरतस्त्यजेत् ।
ततो दण्डजटाचीरमेखलाद्यपि चोत्सृजेत् ॥ ८२

पुनराचम्य विधिवत् पञ्चाक्षरमुदीरयेत् ।
यः कृत्वात्यन्तिकीं दीक्षामादेहान्तमनाकुलः ॥ ८३

व्रतमेतत् प्रकुर्वीत स तु वै नैष्ठिकः स्मृतः ।
सोऽत्याश्रमीति विज्ञेयो महापाशुपतस्तथा ॥ ८४

स एव तपतां श्रेष्ठः स एव तु महाव्रती ।
न तेन सदृशः कश्चित् कृतकृत्यो मुमुक्षुषु ॥ ८५

यतिश्चेन्नैष्ठिको जातस्तमाहुर्नैष्ठिकोत्तमम् ।
यो विरक्तो द्वादशाहं व्रतमेतत् समाचरेत् ॥ ८६

सोऽपि नैष्ठिकतुल्यः स्यात्तीव्रव्रतसमाह्वयात् ।
घृताक्तो यश्चरेदेतद्व्रतं व्रतपरायणः ॥ ८७

द्वित्र्येकदिवसं वापि स तु कश्चन नैष्ठिकः ।
कृतमित्येव निष्कामो यश्चरेद्व्रतमुत्तमम् ॥ ८८

शिवार्पितात्मा सततं न तेन सदृशः क्वचित् ।
भस्मच्छन्नो द्विजो विद्वान् महापातकसंभवैः ॥ ८९

पापैर्विमुच्यते सद्यो मुच्यते न हि संशयः ।
रुद्राग्नेर्यत् परं वीर्यं तद्भस्म परिकीर्तितम् ॥ ९०

तस्मात् सर्वेषु लोकेषु वीर्यवान् भस्मसंयुतः ।
भस्मनिष्ठस्य दह्यन्ते दोषा भस्माग्निसङ्गमात् ॥ ९१

भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ।
भस्मसन्दिग्धसर्वाङ्गो भस्मदीप्तत्रिपुण्ड्रकः ॥ ९२

भस्मशायी च पुरुषो भस्मनिष्ठ इति स्मृतः ।
भूतप्रेतपिशाचाद्या रोगाद्याश्चातिदुस्सहाः ॥ ९३

भस्मनिष्ठस्य सान्निध्याद्विद्रवन्ति न संशयः ।
भासनाद्भासितं प्रोक्तं भस्म कल्मषभक्षणात् ॥ ९४

भूतिर्भूतिकरी पुंसां रक्षा रक्षाकरी परम् ।
किमन्यदिह वक्तव्यं भस्ममाहात्म्यकारणम् ॥ ९५

व्रती च भस्मना स्नातः स्वयं देवो महेश्वरः ।
परमास्त्रं च शैवानां भस्मैतत्पारमेश्वरम् ॥ ९६

धौम्याग्रजस्य तपसि व्यापादो यन्निवारितः ।
तस्मात्सर्वप्रयत्नेन कृत्वा पाशुपतं व्रतम् ॥ ९७

धनवद्भस्म सङ्गृह्य भस्मस्नानरतो भवेत् ।

कौर्मे पञ्चविंशाध्याये पुत्रमुद्दिश्य परमेश्वरप्रसादार्थं तपः कर्तुमागतं श्रीकृष्णं प्रत्युपमन्युः—

स्वागतं ते हृषीकेश ! तपांसि सफलानि नः ॥ ९८

इत्यादिना श्रीकृष्णं स्तुत्वा अनन्तरं पाशुपतयोगमुक्तवान् ।

एवमुक्त्वा ददौ ज्ञानमुपमन्युर्महामुनिः ।
व्रतं पाशुपतं योगं कृष्णायाक्लिष्टकर्मणे ॥ ९९

स तेन मुनिवर्येण [1] व्याहृतो मधुसूदनः ।
तथैव तपसा देवो रुद्रमाराधयन् प्रभुम् ॥ १००

भस्मोद्धूलितसर्वाङ्गो जटावल्कलसंयुतः ।
जजाप रुद्रमीशानं शिवैकाहितमानसः ॥ १०१

इति । अत्रैव च पूर्वं चतुर्दशाध्याये—

शिखण्डिनोऽभवत्पुत्रः सुशील इति विश्रुतः ।
धार्मिको रूपसम्पन्नो वेदवेदाङ्गपारगः ॥ १०२

सोऽधीत्य विविधान् वेदान् धर्मेण तपसि स्थितः ।
मतिं चक्रे भाग्ययोगात् सन्यासं प्रति धर्मवित् ॥ १०३

स कृत्वा तीर्थसंसेवां स्वाध्याये तपसि स्थितः ।
जगाम हिमवत्पृष्ठं कदाचित् सिद्धसेवितम् ॥ १०४

तत्र धर्मवनं नाम धर्मसिद्धिप्रदं वनम् ।
अपश्यद्योगिनां गम्यमगम्यं ब्रह्मविद्विषाम् ॥ १०५

तत्र मन्दाकिनी नाम सुपुण्या निर्मला नदी ।
पद्मोत्पलवनोपेता सिद्धाश्रमविभूषिता ॥ १०६

---

[1] व्यावृतो—पा.

स तस्या दक्षिणे तीरे मुनीन्द्रैर्योगिभिर्युतम् ।
सुपुण्यमाश्रमं रम्यमपश्यत्प्रीतिसंयुतः ॥ १०७

मन्दाकिनीजले स्नात्वा सन्तर्प्य पितृदेवताः ।
अर्चयित्वा महादेवं पुष्पैः पद्मोत्पलादिभिः ॥ १०८

ध्यात्वार्कस्थितमीशानं शिरस्याधाय चाञ्जलीन् ।
संप्रेक्षमाणो भास्वन्तं तुष्टाव परमेश्वरम् ॥ १०९

रुद्राध्यायी गिरीशस्य रुद्रस्य चरितेन च ।
अन्यैश्च विविधैः स्तोत्रैश्छान्दसैर्वेदसंभवैः ॥ ११०

अथास्मिन्नन्तरेऽपश्यत् समायातं महामुनिः ।
श्वेताश्वतरनामानं महापाशुपतोत्तमम् ॥ १११

भस्मना दिग्धसर्वाङ्गं कौपीनाच्छादनान्वितम् ।
तपसा कर्शितात्मानं रुद्राक्षस्रगलङ्कृतम् ॥ ११२

समाप्य संस्तवं शम्भोरानन्दाश्रुविलोचनः ।
ववन्दे शिरसा पादौ प्राञ्जलिर्वाक्यमब्रवीत् ॥ ११३

धन्योस्म्यनुगृहीतोऽस्मि यन्मे साक्षान्मुनीश्वरः ।
योगीश्वरोऽद्य दृष्टोऽसौ योगी योगविदां वरः ॥ ११४

अहो मे सुमहद्भाग्यं तपांसि सफलानि मे ।
किं करिष्यामि शिष्योऽहं तवाहं [1] पालयानघ ! ॥ ११५

सोऽनुगृह्याथ राजानं सुशीलं शीलसंयुतम् ।
शिष्यत्वे परिजग्राह तपसा क्षीणकल्मषम् ॥ ११६

अत्याश्रमविधिं कृत्स्नं कारयित्वा विचक्षणः ।
ददौ [2] तस्यैश्वरं ज्ञानं स्वशाखाभिहितं परम् ॥ ११७

अशेषवेदसारं तत् पशुपाशविमोचनम् ।
अत्याश्रममिति ख्यातं ब्रह्मादिभिरनुष्ठितम् ॥ इति ॥ ११८

नतस्त्वमपि राजेन्द्र ! तपोयोगसमन्वितः ।
आस्व नित्यं मया सार्धं ततः सिद्धिमवाप्स्यसि ॥ ११९

---

[1] पालयेऽनघ–पा. [2] तदैश्वरं ज्ञानं–पा.

एवमाभाष्य विप्रेन्द्रो देवं ध्यात्वा पिनाकिनम् ।
आचचक्षे महामन्त्रं यथावत् स्वार्थसिद्धये ॥ १२०

सर्वपापोपशमनं वेदसारं विमुक्तिदम् ।
'अग्निरित्यादिकं' पुण्यं ऋषिभिः संप्रवर्तितम् ॥ १२१

सोऽपि तद्वचनाद्राजा सुशीलः श्रद्धयान्वितः ।
साक्षात् पाशुपतो भूत्वा योगाभ्यासरतोऽभवत् ॥ १२२

भस्मोद्धूलितसर्वाङ्गः कन्दमूलफलाशनः ।
शान्तो दान्तो जितक्रोधःअत्याश्रमविधौ युतः ॥ इति च ॥ १२३

अत्र "अत्याश्रमविधिं कृत्स्नं कारयित्वा विचक्षणः" इत्यादिवचनेन शिष्यत्वेन परिगृहीतस्य सुशीलस्य राज्ञो ज्ञानसाधनत्वेन विहितपाशुपतात्याश्रमादिशब्दवाच्यं भस्मधारणरूपं व्रतं तद्भूताङ्गत्वेन तदर्थभस्मोत्पादकत्वेन च श्वेताश्वतरनामा ऋषिः विरजाहोमादिकं कारयित्वा तं राजानं प्रति विभूतिधारणाङ्गमन्त्रान् "अग्निरित्यादिकान्" अप्युपदिष्टवानिति प्रतीयते । ननु कथमत्याश्रमविधिशब्देन विरजाहोमः प्रतीयते ? अत्याश्रमदीक्षाकाले तदङ्गत्वेन प्रसिद्धविभूत्युत्पादनसमये विरजाहोमस्यावश्यकत्वादिति ब्रूमः ॥

ननु वीरशैवानां कथं होमादावधिकार इति चेन्न; अत्याश्रमिणामेव मुख्यतया प्रतिपादितत्वात् । यतीनामिव होमाद्यभावेऽपि पाशुपतव्रतानुष्ठानोपपत्तेः ॥

नन्वेवं सति होमप्रतिपादकशास्त्रवैयर्थ्यापत्तिः विनापि होमं पाशुपतव्रतानुष्ठानोपपत्तेरिति चेन्न ; जन्मान्तरीयहोमव्रतानुष्ठानादिना मनश्शुद्धेः सिद्धत्वात् । यद्वा "मन्त्रोच्चारणमर्थवत्' इति संभवदर्थव्यतिरिक्तकर्मणि मन्त्रादेवानुष्ठानफलनियमस्य पूर्वतन्त्रे स्थितत्वात्तदनुरोधेन पाशुपतव्रतोपयुक्तमन्त्रोच्चारणादेवार्थसिद्धेः सुवचत्वात् । मन्त्रप्रकाशितार्थानां विरजत्वविपाप्मत्वादिरूपत्वेन तस्यान्तःकरणसाध्यत्वात् तत्र च वीरशैवमतनियामकशास्त्रस्यैव तादृशार्थोपपादकत्वात् । तत्रैव प्राशितं नैवाप्राशितमित्यवघ्राणमात्रेणार्थसिद्धेर्वैदिकेषु दृष्टत्वात् । मन्त्रो-

च्चारणेन कृतहोम अकृतहोमत्वाच्च न वीरशैवविरोध इति। 'तुल्यबलविरोधे विकल्पः' इति न्यायेन विकल्प इति सिद्धान्तः॥

वस्तुतस्तु सकलवेदलयाधारत्वेन स्थूलपञ्चाक्षरावृत्त्यैव कर्मनिर्वाहस्य प्रकरणारम्भ एव प्रतिपादित्वादिति सर्वं समञ्जसम्॥

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञ-
श्री नीलकण्ठशिवाचार्यकृते निगमागमसारसङ्ग्रहे
क्रियासारे षष्ठोपदेशः॥

---

## अथ सप्तमोपदेशः

सप्तमे तूपदेशेऽस्मिन् भस्मधारणमुच्यते।
नानागमपुराणानां वचनैरुदितक्रमैः॥ १

अथ जनको वैदेहो याज्ञवल्क्यमुपसमेत्योवाच। भगवन्! त्रिपुण्ड्रविधिं नो ब्रूहीति। स होवाच याज्ञवल्क्यः प्रमाणमस्य त्रिधा चाललाटादाचक्षुषश्चाभ्रुवोर्मध्यतः। अथ जनको ह वैदेहः स होवाच। भगवन्! यद्द्रव्यं तदाग्नेयं भस्म सद्यो जातादि-पञ्चब्रह्ममन्त्रैः परिगृह्य अग्निरिति भस्मेत्यभिमन्त्र्य मानस्तोक इति सप्तभिर्मन्त्रैः शिरोललाट वक्षः स्कन्धेषु धारयित्वा पूतो भवति। मोक्षी भवति। दशशतरुद्रजापी यत्फलमवाप्नोति तत्फलमश्नुते। स एष भस्मज्योतिः स एष भस्मज्योतिरिति स याज्ञवल्क्यः॥

अथ जनको ह वैदेहः स होवाच याज्ञवल्क्यं भस्मधारणात् किं फलमश्नुत इति? स होवाच याज्ञवल्क्यः तद्भस्मधारणा-देव मुक्तिर्भवति तद्भस्मधारणादेव सायुज्यमवाप्नोति। न स पुनरावर्तते। न स पुनरावर्तते। स एष भस्म ज्योतिरिति याज्ञवल्क्यः॥

जनको ह वैदेहः स होवाच याज्ञवल्क्यं भस्मधारणात् किं फलमश्नुते? न वेति। तत्र परमहंसाः संवर्तकारुणिश्वेतकेतुदूर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकभुसुण्डप्रभृतयोऽपि विभूतिधारणादेव मुक्ताः स्युः स एव भस्मज्योतिरिति वै याज्ञवल्क्यः॥

जनको ह वैदेहः। स होवाच याज्ञवल्क्यं भस्मस्नानेन किं जायत? इति। यस्य कस्यचिच्छरीरे यावन्तो रोमकूपास्तावन्ति लिङ्गानि भूत्वा तिष्ठन्ति इति। ब्राह्मणो वा क्षत्रियो वा वैश्यो वा शूद्रो वा तद्धारणादेतच्छब्दस्य रूपं यस्यां तस्यां ह्येवावतिष्ठते॥

अथ जनको ह वैदेहः पैप्पलादेन सह प्रजापतेर्लोकं जगाम। तं गत्वोवाच। भो भो प्रजापते! त्रिपुण्ड्रस्य विधिं ब्रूहीति। तं प्रजापतिरब्रवीत्। यथेश्वरस्य माहात्म्यं तथैव त्रिपुण्ड्रस्य माहात्म्यं तं होवाच प्रजापतिः॥

अथ पैप्पलादो वैकुण्ठं जगाम। भो भो विष्णो त्रिपुण्ड्रस्य विधिं ब्रूहीति। स होवाच। यथेश्वरस्य माहात्म्यं तथैव त्रिपुण्ड्रस्य माहात्म्यमिति होवाच विष्णुः॥

अथ पैप्पलादो भगवन्तं कालाग्निरुद्रमुपसमेत्योवाच। अधीहि भगवांस्त्रिपुण्ड्रविधिमिति। अथ कालाग्निरुद्रस्त्रिपुण्ड्रविधानं ब्रवीमीति होवाच। ततो दूर्वासभृगुनिदाघजडभरतदत्तात्रेयप्रभृतयोऽपि भुसुण्डं परिसमेत्योचुः। रैवतको महामुनिर्भुसुण्डमब्रवीत् त्रिपुण्ड्रविधिमनुब्रूहीति। भुसुण्डः स होवाच त्रिपुण्ड्रविधिर्न मया वक्तुं शक्यः सत्यमिति होवाच। अनन्तरमृषीन् त्रिर्नमस्कृत्य तानृषीन् वदति क्षमध्वमिति। सर्वे ऋषय इति॥

अथ भगवन्तं कालाग्निरुद्रं श्वेतकेतुश्च जाबालश्च परिसमेत्योचतुः। हरिश्चन्द्रश्च प्रजापतिश्च कालाग्निरुद्रं परिसमेत्योचतुः। अथ देवाश्चर्षयो ह परस्परानुकूल्या मेलयित्वा कालाग्निरुद्रं पृच्छाम इति॥

अथ कालाग्निरुद्रस्त्रिपुण्ड्रविधानं ब्रवीमीति होवाच। देवाश्चर्षयः शृण्वन्ति। अथ भस्मच्छन्नः सन् संसारान्मुच्यते। भस्मश-

ध्यायां शयानः सन् तच्छिवगोचरः सायुज्यमेति रुद्राध्यायी सन्नमृतत्वं गच्छति । स एष भस्मज्योतिरिति ॥

विभूतिधारणात् कैवल्यमश्नुते । संसारसागरं तरति । विभूतिधारणादेव सर्वतीर्थेषु स्नातो भवति । अथ वाराणस्यामथ त्रिस्थाने यत् फलमवाप्नोति तत्फलमश्नुते । स एष भस्म ज्योतिः । यस्य कस्यचिच्छरीरे त्रिपुण्ड्रलक्ष्म वर्तते । प्रथमः प्रजापतिः । द्वितीयो विष्णुः । तृतीयः सदाशिव इति । स एष भस्मज्योतिः । यस्य कस्यचिच्छरीरे यावन्तो रोमकूपास्तावन्तो रोमा वाराणस्यां लिङ्गानि भूत्वा ज्योतिर्मयत्वं च गच्छन्ति । स एष भस्मज्योतिः । भस्ममननादेव पापं भस्मसात्करोति । भस्ममननादेव किल किल्बिषादीनि नश्यन्ति । भस्ममननादेव पापं भस्मसात्करोति । भस्ममननादेव संसारोत्तारणं करोति । स एष भस्मज्योतिः । भस्मध्यानादीश्वरो ध्यातो भवति । भस्मध्यानात् पञ्चाक्षरस्मरणं भवति । भस्मध्य।नात् स्थाणुत्वं गच्छति । स एष भस्मज्योतिः ॥

अथैतं पैप्पलादोऽङ्गिराः सनत्कुमारश्च भगवन्तं कालाग्निरुद्रं पप्रच्छुः विभूतिधारणात्फलमाहेति किं भविष्यतीति । अथ कालाग्निरुद्रः सर्वोपनिषत्सारं ब्रवीमीति होवाच । सर्वेश्वरः एष सर्वज्ञ एषोऽन्तर्यामी एष योनिः सर्वस्य प्रभवाप्ययो हि भूतानाम् । न बहिः प्रज्ञं नान्तः प्रज्ञं नोभयतः प्रज्ञं । नाप्रज्ञं न प्रज्ञानघनमदृश्यमव्यवहार्यमलक्ष्यमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवं तुरीयं मन्यन्ते । मृत्युं ज्वलन्तं भीषणं यस्मात्स्वभक्तानाममृत एव मृत्यु मृत्युत्वं च तारयति । य आत्मदा बलदा यस्य विश्व उपासते । प्रशिषं यस्य देवाः यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेमहीति स्वस्मात्स्वमहिम्नः सर्वान् नृपान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि स्वतेजसा ज्वलयति । ज्वाल्यते ज्वालयते सविता प्रसविता दीप्तो दीपवद्दीप्यमानः ज्वलन् ज्वलिता तपस्वी तपन् सन्तपन् रोचनो रोचमानः शोभनः शोभमानः कल्याणः । स्वस्मात्स्वस्य स्वरूपं दृष्ट्वा सर्वे देवाः सर्वाणि भूतानि भीत्या पलायन्ते । स्वयं यतः कुतश्चिन्न बिभेति ।

भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति। महतीं श्रियमश्नुते। मीमांसन्ते ब्रह्मवादिनः। यदिदं भस्मजाबालं ब्राह्मणः क्षत्रियो वाधीते। अश्रोत्रियः श्रोत्रियो भवति। अनुपनीत उपनीतो भवति। सोऽग्निपूतो भवति। स वायुपूतो भवति। स सत्यपूतो भवति। स सर्वपूतो भवति। सर्वैर्देवैर्ज्ञातो भवति। सर्वैर्देवैरनुध्यातो भवति। स सर्वेषु वेदेष्वधीतो भवति। तद्भस्मोद्धूलनात्सर्वेषु तीर्थेषु स्नातो भवति। तेन सर्वैः क्रतुभिरिष्टं भवति। प्रणवानामयुतं जप्तं भवति। अचक्षुषः पङ्क्तिं च पुनाति। आसप्तमात् पुरुषयुगात् पुनातीत्याह भगवान्। कालाग्निरुद्रः प्रोवाच। योगध्यानानां शिव एको ध्येयः शिवङ्करः। सर्वमन्यत्परित्यज्यैतामधीत्य द्विजो वात्याश्रमी वा विरक्तो वा साम्राज्याधिपतिर्वा गर्भवासाद्विमृज्यत इति ओं सत्यों सत्यमित्यों सत्यम्। अथ कालाग्निरुद्रः प्रोवाच। सकृज्जप्त्वा शुचिः पूतः कर्मण्यो भवति। द्वितीयं जप्त्वा गाणापत्यमाप्नोति। तृतीयं जप्त्वा देवमेव प्रविशति इत्यों सत्यम्। इति ऋग्वेदभस्मजाबालोपनिषत् समाप्ता॥

अग्निहोत्रसमुद्भूतमौपासनसमुद्भवं विरजानलजं अन्यद्वा भस्मोत्पादनभस्मव्यवस्थाप्रकरणद्वये निरूपितम्। यद्यस्योचितं तद्भस्म गृहीत्वा शुद्धपात्रे स्थापयित्वा पादप्रक्षालनं हस्तप्रक्षालनं च कृत्वा द्विराचम्य प्राणायामत्रयं कृत्वा पात्रे सद्योजातादिपञ्चब्रह्ममन्त्रैर्दक्षिणहस्तेन गृहीत्वा वामहस्ते निक्षिप्य दक्षिणहस्तेन स्पृष्ट्वा "अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म भस्मेति भस्म सर्वं ह वा इदं भस्म मन इत्येतानि चक्षूंषि भस्मानि" इति त्रिवारं जपेत्। अनन्तरं शुद्धपात्रस्थं जलं दक्षिणकरेण स्पृष्ट्वा "आपो वा इदꣳ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दाꣳस्यापो ज्योतीꣳष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवःस्वराप ओं। ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्वरों" इति मन्त्रद्वयं जपित्वा, तज्जलं विष्णुरूपेण विभाव्य तज्जलं भस्मनि निक्षिप्य "मानस्तोक" इति मन्त्रेण मिश्रणं कृत्वा पिण्डरूपेण कृत्वा, तद्भस्म साम्बरूपेण ध्यात्वा तदर्धं गृहीत्वा दक्षिण-

जानुनि निधाय, पुनर्वामकरे विद्यमानमर्धं षोढा कृत्वा, तत्रैकं गृहीत्वा ईशानमन्त्रेण शिरसि प्रादक्षिण्येन लेपनं कुर्यात्। पुन-र्भागान्तरं गृहीत्वा तत्पुरुषमन्त्रेण मुखे लेपनम्। पुनर्भागान्तरं गृहीत्वा अघोरमन्त्रेण उरोदेशं बाहुद्वयं च लेपयेत्। भागान्तरं गृहीत्वा वाममन्त्रेण नाभेरधः कटिप्रदेशं च लेपयेत्। भागान्तरं गृहीत्वा सद्योजातमन्त्रेण दक्षिणोत्तरपादद्वयं लेपयेत्। अनन्तर-मवशिष्टभागं गृहीत्वा, हस्ताभ्यामालोडयित्वा प्रणवेन सर्वाङ्गं लेपयेत्। हस्तौ प्रक्षाल्याचमनद्वयं कृत्वा, जानुनि विद्यमानभस्म गृहीत्वा, तेन साम्बशिवरूपतया भावितेन हस्ताभ्यां लोडितेन भस्मना तर्जनीमध्यमानामिकाङ्गुलित्रयेण वा तर्जन्यनामिकाङ्गुष्ठेन वा अनुलोमप्रतिलोमेन त्रिपुण्ड्रं ब्रह्मविष्णुरुद्रात्मकं कालाग्निरुद्रो-पनिषदुक्तप्रकारेण गार्हपत्याद्याकारात्मकं च भावयित्वा, अथ शिरोललाटवक्षःस्कन्धेषु त्रियायुषेण त्रियम्बकेन षडक्षरेण चावृत्त्या, त्रिपुण्ड्रधारणं कुर्यात् ॥

एवं कालत्रयेऽपि कुर्यात्। त्रिपुण्ड्रधारणान्तेऽपि हस्त-प्रक्षालनं कृत्वा तर्जन्यन्तरं कर्मान्तरं कुर्यात्। अथोद्धूलनस्य स्नान-रूपत्वादाचमनकरणम् ॥

उक्तञ्च शिवराघवसंवादे—

उद्धूलयेत् समस्ताङ्गे प्रणवेन विचक्षणः।
प्रक्षाल्य हस्तावाचम्य दर्भपाणिः समाहितः ॥
नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः।
प्रक्षाल्य च ततो हस्तौ क्रमानुष्ठानमाचरेत् ॥

इति। ब्रह्मचारिणां त्रिपुण्ड्रधारणसमये "मेधावी" इत्यादिमन्त्रा-म्नायः। मेधावी तेजस्वी वर्चस्वी ब्रह्मवर्चस्वी आयुष्मान् भूयासं स्वस्ति। परमहंसस्य तु जलमिश्रणं विना उद्धूलनत्रिपुण्ड्रधारण-समये "ओं ओं ओं हंसहंस" इति मन्त्रः सर्वत्र ॥

कालाग्निरुद्रोपनिषदि—

अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ। अधीहि भगवंस्त्रिपुण्ड्रविधिं सतत्वम्। किं द्रव्यं? कियत्स्थानं? किं

तत्त्वम् ? किं प्रमाणं ? का रेखा ? के मन्त्राः ? का शक्तिः ? कः कर्ता ? किं दैवतं ? किं फलम् ? इति । तं होवाच भगवान् कालाग्निरुद्रः । यद्द्रव्यं तदाग्नेयं भस्म । सद्योजातादिपञ्चब्रह्ममन्त्रैः परिगृह्याग्निरित्यनया ऋचाभिमन्त्र्य मा नस्तोक इति मन्त्रेण समुद्धृत्य मा नो महान्तमिति जलेन संसृज्य त्रियायुषमिति शिरोललाटवक्षःस्कन्धेषु त्रियायुषैस्त्र्यम्बकैस्त्रिशक्तिभिस्तिर्यक् तिस्रो रेखाः प्रकुर्वीत । व्रतमेतच्छाम्भवं सर्ववेदेषु वेदवादिभिरुक्तं भवति । तस्मात्तत्समाचरेन्मुमुक्षुरपुनर्भवाय ॥

अथ सनत्कुमारः पप्रच्छ प्रमाणमस्य त्रिपुण्ड्रधारणस्य त्रिधा विधाय रेखा आललाटादाचक्षुष आभ्रुवोरामूर्ध्नो मध्यतश्च । याऽस्य प्रथमा रेखा स गार्हपत्याग्निरकारो, रजो भूलोकश्चात्मा, क्रियाशक्तिः, ऋग्वेदः, प्रातस्सवनं महेश्वरी देवतेति । याऽस्य द्वितीया रेखा सा दक्षिणाग्निरुकारः, सत्वमन्तरिक्षमन्तरात्मा, इच्छाशक्तिर्यजुर्वेदो, माध्यन्दिनं सवनं सदाशिवो देवतेति । याऽस्य तृतीया रेखा स आहवनीयो, मकारस्तमो द्यौर्लोकः, परमात्मा, ज्ञानशक्तिः, सामवेदस्तृतीयं सवनं (महादेवो) देवतेति ॥

बृहज्जाबालोपनिषदि—

ईशानेन शिरोदेशं मुखं तत्पुरुषेण तु ।
उरोदेशमघोरेण गुह्यं वामेन धूलयेत् ॥
सद्योजातेन पादौ च सर्वाङ्गं प्रणवेन तु ।

अत्रैते श्लोकाः—

भस्ममुष्टिं समादाय संहितामन्त्रमन्त्रितम् ।
मस्तकात् पादपर्यन्तं भस्मस्नानं पुरोदितम् ॥ १

तन्मन्त्रेणैव कर्तव्यं विधिस्नानं समाचरेत् ।
ईशेन पञ्चधा भस्म विकिरेन्मूर्ध्नि यत्नतः ॥ २

मुखे चतस्रः तत्पुरुषेणाघोरेणाष्टधा हृदि ।
वामेन गुह्यदेशे तु त्रिदश स्थानभेदतः ॥ ३

अष्टधा सद्यमन्त्रेण पादमुध्दूल्य यत्नतः ।
सर्वाङ्गोध्दूलनं कुर्याद्राजन्यस्य यथाविधि ॥ ४

मुखं विना च तत्सर्वमुध्दूल्य क्रमयोगतः ।
सन्ध्यात्रये निशीथे च तथा पूर्वावसानयोः ॥ ५

सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ।
स्त्रियं नपुंसकं वृद्धमित्यादि किल वर्ण्यते ॥ ६

देवाग्निगुरुविप्राणां समीपे त्याज्यदर्शने ।
अशुध्दभूतले मार्गे कुर्यान्नोद्धूलनं व्रती ॥ ७

शङ्खतोयेन मूलेन भस्मना मिश्रणं भवेत् ।
योजितं चन्दनेनापि वारिणा संयुतं तु वा ॥ ८

चन्दनेन समं लिप्येज्ज्ञानार्थी चूर्णमेव तत् ।
मध्याह्नात् प्राग्जलैर्युक्तं तोयं तदनु वर्जयेत् ॥ ९

अथ भुसुण्ढो भगवन्तं कालाग्निरुद्रं त्रिपुण्ड्रविधिं पप्रच्छ। तत्रैते श्लोकाः—

त्रिपुण्ड्रं कारयेत् पश्चाद्ब्रह्मविष्णुशिवात्मकम् ।
मध्याङ्गुलिभिरादाय तिसृभिर्मूलमन्त्रतः ॥ १०

अनामामध्यमाङ्गुष्ठैरथवा स्यात्त्रिपुण्ड्रकम् ।
उद्धूलयेन्मुखं विप्रः क्षत्रियस्तु शिरोऽभितः ॥ ११

द्वात्रिंशत्स्थानके चाथ षोडश स्थानकेऽथवा ।
अष्टस्थाने तथा चैवं पञ्चस्थाने च योजयेत् ॥ १२

उत्तमाङ्गे ललाटे च कर्णयोर्नेत्रयोस्तथा ।
नासावक्त्रगले चैवमंसद्वयमनन्तरम् ॥ १३

कूर्परे मणिबन्धे च हृदये पार्श्वयोर्द्वयोः ।
नाभौ गुह्यद्वये चैवमूर्वोः स्फिक्बिम्बजानुषु ॥ १४

जङ्घाद्वये च पादे च द्वात्रिंशत्स्थानमुत्तमम् ।
अष्टमूर्त्यष्टविद्येशान् दिक्पालवसुभिः सह ॥ १५

धरो ध्रुवश्च सोमश्च आपश्चैवानलोऽनिलः ।
प्रत्यूषश्च प्रभातश्च वसवोऽष्टावुदीरिताः ॥ १६

एतेषां नाममन्त्रेण त्रिपुण्ड्रं धारयेद्बुधः ।
विदध्यात् षोडशस्थाने त्रिपुण्ड्रं च समाहितः ॥ १७

शीर्षके च ललाटे च कर्णे चांसद्वयेऽपि च ।
कूर्परे मणिबन्धे च हृदये नाभिपार्श्वयोः ॥ १८

पृष्ठे चैवं प्रतिष्ठायां जपेत्तत्राधिदैवतम् ।
शिवं शक्तिं च सादाख्यमीशं रुद्राख्यमेव च ॥ १९

वामादिनव शक्तीश्च एताः षोडश देवताः ।
नासत्यो दस्रकश्चैवमश्विनौ द्वौ समीरितौ ॥ २०

अथवा मूर्ध्नि केशे च कर्णयोः श्वसने तथा ।
बाहुद्वये च हृदये नाभ्यामूर्वोर्युगे तथा ॥ २१

जानुद्वये च पदयोः पृष्ठभागे च षोडश ।
[1]शिवश्चेन्द्रश्च चन्द्राकौं विघ्नेशो विष्णुरेव च ॥ २२

श्रीश्चैव हृदये तद्वत्तथा नाभौ प्रजापतिः ।
नागाश्च नागकन्याश्च [2]उभये ऋषिकन्यकाः ॥ २३

पादयोश्च समुद्राश्च तीर्थं पृष्ठेऽपि च स्मृताः ।
एवं वा षोडशस्थानमष्टस्थानमथोच्यते ॥ २४

गुरुस्थानं ललाटं च कर्णद्वयमनन्तरम् ।
अंसयुग्मं च हृदयं नाभिरित्यष्टमं भवेत् ॥ २५

ब्रह्मा चर्षयः सप्तदेवताश्च प्रकीर्तिताः ।
अथवा मस्तकं बाहू हृदयं नाभिरेव च ॥ २६

पञ्चस्थानान्यमून्याहुर्भस्मतत्त्वविदो जनाः ।
यथासंभवतः कुर्याद्देशकालाद्यपेक्षया ॥ २७

उद्धूलनेऽप्यशक्तश्चेत्त्रिपुण्ड्रादीनि कारयेत् ।
ललाटे हृदये नाभौ गले च मणिबन्धयोः ॥ २८

बाहुमध्ये बाहुमूले पृष्ठे चैव च शीर्षके ।

ललाटे ब्रह्मणे नमः । हृदये हव्यवाहनाय नमः । नाभौ स्कन्दाय नमः । गले पूष्णे नमः । दक्षिणबाहुमूले रुद्राय नमः । मध्ये आदित्याय नमः । मणिबन्धे शचीपतये नमः । वामबाहु-

---

[1] शिवः स्कन्दश्च–पा. [2] उभया–पा.

मूले वामदेवाय नमः। मध्ये प्रभञ्जनाय नमः । मणिबन्धे वसुभ्यो नमः। पृष्ठे हराय नमः। शिरसि परमात्मने नमः । इत्यादिभिर्मन्त्रैरेवं द्वादशस्थानेषु त्रिपुण्ड्रं धारयेत् ॥

त्रिणेत्रं त्रिगुणाधारं त्रयाणां जनकं शुभम् ॥ २९

स्मरन्नमः शिवायेति ललाटे तु त्रिपुण्ड्रकम् ।
कूर्पराधः पितृभ्यां तु उमेशाभ्यां तथोपरि ॥ ३०

ईशाभ्यां नम इत्युक्त्वा पार्श्वयोश्च त्रिपुण्ड्रकम् ।
बीजाभ्यां नम इत्युक्त्वा धारयेच्च प्रकोष्ठयोः ॥ ३१

भीमायेति ततः पृष्ठे शिवाय पिठरे तथा ।
नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः ॥ ३२

मानस्तोकेति मन्त्रेण मन्त्रितं भस्म धारयेत् ।
ऊर्ध्वपुण्ड्रं भवेत् साम मध्यपुण्ड्रं यजूंषि च ॥ ३३

अधःपुण्ड्रमृचः साक्षात्तस्मात् पुण्ड्रं त्रियायुषम् ।
त्रियायुषाणि कुरुते ललाटे च भुजद्वये ॥ ३४

नाभौ शिरसि हृत्पार्श्वे ब्राह्मणाः क्षत्रियास्तथा ।

जाबालोपनिषदि—

अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेदिति । [1]तथोपरि तिर्यक् त्रिपुण्ड्रं धारयेदिति च ॥

अथर्वशिरसि—

अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् । तस्माद्व्रतमेतत् पाशुपतं पशुपाशविमोक्षायेति ॥

अत्र जाबालोपनिषदादीनामुपबृंहणवचनानि सूतसंहितायाम्—

अग्निरित्यादिभिर्मन्त्रैर्जाबालोपनिषद्गतैः ।
सर्वैरुद्धूलनं कार्यं भस्मना सजलेन च ॥

---

[1] यस्माद्व्रतमिदं पाशुपतं यद्भस्मनाङ्गानि संस्पृशेत्तस्माद्ब्रह्म तदेतत्पाशुपतं पशुपाशविमोक्षणाय । इत्युपनिषत्पाठः ॥

त्रियायुषेण मन्त्रेण बुधैस्तियक्त्रिपुण्ड्रकम् ।
धार्यं प्रोक्तं द्विजश्रेष्ठ धार्मिकैर्वेदपारगैः ॥

मेधावीत्यादिना वापि ब्रह्मचारी दिने दिने ।
भस्मना सजलेनैव धारयेच्च त्रिपुण्ड्रकम् ॥

त्रियम्बकेण मन्त्रेण प्रणवेन शिवेन च ।
गृहस्थश्च वनस्थश्च धारयेच्च त्रिपुण्ड्रकम् ॥

ओंकारेण त्रिरुक्तेन सहंसेन त्रिपुण्ड्रकम् ।
धारयेद्भिक्षुको नित्यमिति जाबालिकी श्रुतिः ॥

ललाटे चैव दोर्द्वन्द्वे तथैवोरसि बुद्धिमान् ।
त्रिपुण्ड्रं धारयेन्नित्यं भुक्तिमुक्तिफलप्रदम् ॥

[1] मन्त्राणामाश्रमाणां च मन्त्रतोऽमन्त्रतोऽपि वा ।
त्रिपुण्ड्रोध्दूलनं प्रोक्तं जाबालैरादरेण तु ॥

श्रीबोधायनसूत्रे—

अथ तद्भस्मादायाभिमन्त्रयेत् । ईशानादिव्युत्क्रमेण पुनः सद्योजातादि पञ्चक्रमेण चाभिमन्त्र्य 'मानस्तोके तनये' इति मध्यमानामिकाङ्गुष्ठैः समादाय, तूष्णीमद्भिः संयोज्य, त्रियायुषमिति त्रिपुण्ड्रं धारयेत् ॥

अथाप्युदाहरन्ति—

मध्यमानामिकाङ्गुष्ठैस्त्रिपुण्ड्रं भस्मना कृतम् ।
तत्त्रिपुण्ड्रं भवेच्छस्तं................ ............... ॥ इति ।

अथाप्युदाहरन्ति—

ललाटे हृदि दोर्द्वन्द्वे गले कुक्षौ शिरस्यथ ।
धारयेच्चैव तद्भस्म द्विजो नित्यमतन्द्रितः ॥

'भूत्यै न प्रमदितव्यमिति विज्ञायत' इति । अथ त्र्यम्बकमिति सर्वाङ्गं सम्मृजेत् पूतो भवतीति ॥

---

[1] वर्णानामिति स्यात्.

बोधायनस्मृतौ—

स्नानमीशानमन्त्रेण कुर्यान्मूर्धादि पादतः। इति॥

भारद्वाजस्मृतौ—

प्राङ्मुखश्चरणौ हस्तौ प्रक्षाल्याचम्य पूर्ववत्।
प्राणानायम्य सङ्कल्प्य भस्मस्नानं समाचरेत्॥

आदाय भसितं श्वेतमग्निहोत्रसमुद्भवम्।
ईशानेन तु मन्त्रेण स्वमूर्धनि विनिक्षिपेत्॥

तत आदाय तद्भस्म मुखे तत्पुरुषेण तु।
अघोराख्येन हृदये गुह्ये वामाह्वयेन च॥

सद्योजाताभिधानेन भस्म पादद्वये क्षिपेत्।
सर्वाङ्गं प्रणवेनैव मन्त्रेणोद्धूलयेत्ततः॥

एतदाग्नेयकं स्नानमुदितं परमर्षिभिः।
सर्वकर्मसमृध्यर्थं कुर्यादादाविदं बुधः॥

ततः प्रक्षाल्य हस्तादीनुपस्पृश्य यथाविधि।
तिर्यक्त्रिपुण्ड्रविधिना ललाटे हृदये गले॥

पञ्चभिर्ब्रह्मभिर्वापि ततोऽग्निरिति मन्त्रतः। इति।

स्मृत्यन्तरे च—

मानस्तोकेति मन्त्रेण मन्त्रितं भस्म धारयेत्॥

वायुपुराणे—

ततस्त्रिपुण्ड्रं रचयेत् त्र्यायुषसमाह्वयम्। इति।

तैत्तिरीयश्रुतौ च शिवशासने—

'सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्'। इत्यादि। अत्र भूतिशब्दस्य भस्मार्थकत्वं बोधायनेनोक्तम्। अथातो द्विजातीनां त्रिपुण्ड्रधारणविधिं व्याख्यास्यामो भूत्यै न प्रमदितव्यमिति विज्ञायत इत्युपक्रम्य, दश पूर्वान् दशापरान् आत्मानं चैकविंशतिं पङ्क्तिं च पुनाति। ब्रह्मणः सायुज्यं सलोकतामाप्नोती-

त्याह भगवान् बोधायन इति। ये न त्रिपुण्ड्रधारिणस्तेषां ब्राह्मण्य-मेव नास्तीति स्पष्टमेव। अथ उपबृंहणानि स्मृतिपुराणवचनानि लिख्यन्ते—

उपबृंहणं च लोकाक्षिस्मृतावभिहितम्—

भस्मनोध्दूलनं तिर्यक्त्रिपुण्ड्रं नित्यसाधनम्।
प्रत्याख्यानं प्रमाणस्य श्रूयते तैत्तिरीयके॥

महाभारतेऽपि—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। इति।

स्कांदेऽपि—

पुराणैरेव विस्पष्टो वेदार्थो ज्ञायते खलु।
बिभेति मानवाद्वेदः पुराणाभ्यासवर्जितात्॥

सूतसंहितायामपि—

अनन्तशाखासापेक्षे वेदार्थानां विनिर्णये।
स्वबुद्धिकल्पितान्नथायाद्गरीयो ह्युपबृंहणम्॥ इति।

सुदर्शचनाचार्योऽपि—

वेदार्थनिर्णयविधौ हि पुराणमङ्गं
निर्णीतवेदविषयाः स्मृतयो भवन्ति। इति।

मानवपुराणेऽपि श्रुत्युपबृंहणं दृश्यते—

सत्यान्न प्रमदितव्यं वै धर्माच्च कुशलाच्च न।
भूत्या अग्निसमुत्थायास्ततो देहावकुण्ठनम्॥
ललाटे हृदि दोर्द्वन्द्वे त्रिपुण्ड्रस्य च धारणात्।
नवा प्रमदितव्यं वै भ्रमाद्वापि कदाचन॥
स्वाध्यायाध्ययनं नित्यं कुरु प्रवचनं तथा। इति

सूतसंहितायामपि—

सत्याद्धर्माच्च कुशलाद्भस्मनोध्दूलनादपि।
त्रिपुण्ड्रधारणाच्चैव स्वाध्यायाध्ययनादपि॥

दैवाच्च पित्र्यात्सत्कार्यान्मातापित्रादिपूजनात् । इति ।

भाष्यकारेण यद्यपि भूतिशब्द ऐश्वर्यपरतया व्याख्यातः। तथापि बोधायनेन ' भूत्यै न प्रमदितव्यं ' इत्यस्याः श्रुतेर्भस्मत्रिपुण्ड्रप्रमाणतयोदाहृतत्वादुपबृंहणस्मृतिपुराणवाक्यानां च सत्वात् भूतिशब्दस्य भस्मपरत्वमेव युक्तम् ॥

नन्वत्र भूतिशब्दस्य नानार्थत्वेनार्थान्तरत्वं भवत्विति चेन्न; ' इतिहासपुराणाभ्यां श्रुत्यर्थमुपबृंहयेत् ' इति न्यायेन तस्माद्भूत्यै न प्रमदितव्यमिति विज्ञायत इति बोधायनसूत्रस्य विरोधः स्यात्। किं च—

सत्याद्धर्माच्च कुशलाद्भस्मनोद्धूलनादपि । इति विद्यारण्योक्तवेदभाष्यवचनाच्च तैत्तिरीयोपनिषत्स्थस्य भस्मपरत्वमेव ॥

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
प्रमादादपि मोक्षार्थी न त्यजेदितिहि श्रुतिः ॥

इति सूतसंहितायामुक्तत्वात् भूतिशब्दस्य भस्मपरत्वमेव। भूतिशब्दस्य नानार्थत्वेनैश्वर्यपरतया व्याख्यानेऽपि नेह कश्चिद्विरोधः। उपबृंहणस्य सत्वे तदपि व्याख्यातव्यमस्तु। बोधायनः- अथातो भूतिसंपादनधारणविधिं व्याख्यास्यामः। शुचिर्भूत्वा विकटाङ्गामुन्मत्तामशिवां हीनातिरिक्ताङ्गां वन्ध्यां अस्थिचेलभक्षिणीं इत्यादिसर्वं प्रतिपादितवान् ॥

पराशरस्मृतौ—

ब्राह्मणो विधिनोत्पन्नं त्रिपुण्ड्रं भस्मनैव तु ।
ललाटे धारयेन्नित्यं तिर्यग्भस्मावकुण्ठनम् ॥

श्रुतिसारसमुच्चये—

अशक्तः समयाचारे [1]मनसा पापमाचरन् ।
शुचिरेव भवेन्नित्यं त्रिपुण्ड्रस्य च धारणात् ॥

---

[1]भस्मना स्नानमाचरन्–इति स्यात्.

महाभारते आनुशासनिके पर्वणि—

अहं पशुपतिर्नाम मद्भक्ता ये च मानवाः ।
सर्वे पाशुपता ज्ञेया भस्मदिग्धतनूरुहाः ॥
रक्षार्थं मङ्गलार्थं च पवित्रार्थं च . . . ।

इत्यादि। साङ्ख्यायनगृह्येऽपि—

त्र्यायुषमिति पञ्चभिर्मन्त्रैर्ललाटे हृदये च दक्षिणस्कन्धे वामे च ततः पृष्ठे च पञ्चसु भस्मना त्रिपुण्ड्रं करोति। एषां देवानामेकं द्वौ त्रीन् सर्वानथ इति ॥

माध्यन्दिनगृह्येऽपि—

भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदि च त्र्यायुषमिति ॥
प्रतिमन्त्रमिति

आदित्यपुराणे—

त्रिपुण्ड्रधारी सततं ब्राह्मणः सर्वकर्मसु ।
भस्मनैवाग्निहोत्रस्य शिवाग्निजनितेन वा ॥

वासिष्ठलैङ्गे वसिष्ठं प्रति महादेवः—

भस्म विद्धि परं ब्रह्म सत्यबोधसुखावहम् ।
भस्म तद्वेदनाल्लभ्यं मुख्यं तदपरं बुधः ॥
आग्नेयं गौणमज्ञानध्वंसकज्ञानसाधनम् ।
गौणं नानाविधं विद्धि ब्रह्मन् ब्रह्मविदां वर ॥
अग्निहोत्रादिजं तद्वद्विरजानलजं मुने ।
औपासनसमुत्पन्नं समिदग्निसमुद्भवम् ॥
त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवम् ।
विरजानलजं चैव कार्यं भस्म महामुने ! ॥
औपासनसमुत्पन्नं गृहस्थानां विशेषतः ।
समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणाम् ॥
शूद्राणां श्रोत्रियागारे पचनाग्निसमुद्भवम् ।
अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम् ॥

अग्निरित्यादिभिर्मन्त्रैः षड्भिराथर्वणैस्तथा ।
जाबालैस्सप्तभिर्वापि गौणेनैव तु भस्मना ॥
उद्धूलयेत् स्वकं देहं पापपुञ्जभयापहम् ।
त्रियायुषेण मन्त्रेण मेधावीत्यादिनाथवा ॥
गौणेन भस्मना धार्यं त्रिपुण्ड्रं ब्रह्मचारिणा ।
त्रियम्बकेन मन्त्रेण सतारेण तथैव च ॥
पञ्चाक्षरेण मन्त्रेण प्रणवेन युतेन च ।
ललाटे हृदये चैव दोर्द्वन्द्वे च महामुने ! ॥
त्रिपुण्ड्रं धारयेन्नित्यं गृहस्थश्च वनाश्रमी ।
आत्ममन्त्रेण हंसेन प्रणवेन समाहितः ॥
त्रिपुण्ड्रं धारयेन्नित्यं सन्यासाश्रममाश्रितः ।
नमोऽन्तेन शिवेनैव शूद्रः शुश्रूषणप्रियः ॥
उद्धूलनं त्रिपुण्ड्रं च नित्यं भक्त्या समाचरेत् ।
अन्येषामपि सर्वेषां विना मन्त्रेण सुव्रत ॥
उद्धूलनं त्रिपुण्ड्रं च कर्तव्यं भक्तितो मुने ॥ इति ।

ब्रह्मचारिणां धारणप्रकारमाह बोधायनः—

यस्मिन्नग्नौ कर्म कृत्वोपतिष्ठते तस्मात् पूर्णं भस्म आदाय तूष्णीमभिमन्त्र्याभिमृश्य मानस्तोक इति मन्त्रेणादाय धारयेन्नियमेन च । ललाटे तेजस्वीति । दक्षिणबाह्वोर्वर्चस्वीति । सव्ये ब्रह्मवर्चस्वीति । हृदयदेशे आयुष्मानिति । [1] कण्ठे भूयासं स्वस्तीति सर्वत्रानुषजतीति ॥

गारुडे—

उद्धूलनं त्रिपुण्ड्रं च मनसापि न लङ्घयेत् ।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् ॥

मानवोपपुराणे—

त्रिपुण्ड्रधारणं भूत्या तथा देहावकुण्ठनम् ।
यो न कुर्यात्तु मन्त्रेण स सद्यः पतितो भवेत् ॥

---

[1] कण्ठे स्वस्तीति । भूयासमिति सर्वत्रानुषज्यते इति स्यात् ।

सूतसंहितायाम्--

भस्मनोद्धूलनं चैव तथा कुर्यात्त्रिपुण्ड्रकम् ।
प्रमादादपि मोक्षार्थी न त्यजेदिति हि श्रुतिः ॥

पराशरोपपुराणे—

[1] आदौ ब्राह्मण [2] भूतेन त्रिपुण्ड्रं भस्मना धृतम् ।
यतस्तदेव विप्रस्तु त्रिपुण्ड्रं धारयेत् सदा ॥

भस्मना वेदसिद्धेन त्रिपुण्ड्रं देहकुण्ठनम् ।
रुद्रलिङ्गार्चनं चापि हतो वापि न सन्त्यजेत् ॥

ब्राह्मणानामयं धर्मस्त्रिपुण्ड्रस्य च धारणम् ।
आश्रमाणां च सर्वेषां धर्मत्वेनाहुरास्तिकाः ॥

सनत्कुमारसंहितायाम्—

त्रिपुण्ड्रं धारयेन्नित्यं गृहस्थाश्रममास्थितः ।
धारयेद्भिक्षुको नित्यमिति जाबालिकी श्रुतिः ॥

धारयेद्ब्राह्मणो विद्वान् सर्वदैव त्रिपुण्ड्रकम् ।
त्रिपुण्ड्रं धारयेन्नित्यं मनसाऽपि न लङ्घयेत् ॥

श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् ।

पराशरे—

श्रौतधर्मैकनिष्ठानां लिङ्गं तु श्रौतमेव हि ।

इत्यादि लिखितम् ॥

लैङ्गे—

त्रिपुण्ड्रं सुरविप्राणां वर्तुलं नृपवैश्ययोः ।
अर्धचन्द्रं तु शूद्राणामन्येषामूर्ध्वपुण्ड्रकम् ॥

अश्रौतमूर्ध्वपुण्ड्रादि ललाटे श्रद्धया सह ।
धारयिष्यन्ति मोहेन युगान्ते समुपस्थिते ॥

---

[1] आदि–पा. [2] रूपेण–पा.

स्मृत्यन्तरे —

यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि वै ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥

भविष्यत्पुराणे—

पापानामपि बाहुल्याद्दधीचस्य च शापतः ।
गौतमस्य मुनेः शापात् श्रौतलिङ्गं न रोचते ॥

आदित्यपुराणे—

दुर्वाससो मुनेः शापात् कुपितस्य महात्मनः ।
कण्वशापाद्भृगोः शापादुपमन्योश्च शापतः ॥
दधीचस्य मुनेः शापाद्गौतमस्य च शापतः ।
विप्राणां दाक्षिणात्यानां पापोपहतचेतसाम् ॥
शिवे भस्मनि रुद्राक्षे किंचिच्छ्रद्धा न विद्यते ॥ इति ।

मानवे च—

ब्राह्मणैश्च पुरा सर्वैर्गौतमेन सुरक्षितैः ।
विचार्य कार्यं संभूय स्वदेशगमनोद्यतैः ॥
गौर्हता गौतमेनेति निर्घृणैः पुरुषाधमैः ।
कृतो मिथ्याभिशापस्तु महामोहवशेन तु ॥
तच्छ्रुत्वा स मुनिः श्रीमान् गौतमो मुनिसत्तमः ।
महाक्रोधेन संयुक्तः शशाप ब्राह्मणाधमान् ॥
यद्यत्तु रुद्रसम्बन्धि तत्र तत्रातिदुर्जनाः ।
भवतानुन्मुखा यूयं सर्वथा ब्राह्मणाधमाः ॥
स्वाध्याये च जपे चैव तथा प्रवचनेपि च ।
भवतानुन्मुखा यूयं सर्वथा ब्राह्मणाधमाः ॥
श्रुतिस्मृतिपुराणोक्तेष्वर्थेषु सकलेषु च ।
भवतानुन्मुखा यूयं सर्वथा ब्राह्मणाधमाः ॥
शङ्खचक्रगदापद्मदण्डपाशाङ्कुशादिभिः ।
अङ्किताः श्रद्धया यूयं भवत ब्राह्मणाधमाः ॥

वर्तुलाश्वत्थपत्रार्धचन्द्रशूलादिलिङ्गिनः ।
भवत श्रद्धया युक्ताः सर्वथा ब्राह्मणाधमाः ॥
अश्वत्थपत्रलिङ्गं च बौद्धधर्ममुपाश्रिताः ।
पाञ्चरात्रे च कापाले तथा कालामुखेऽपि च ॥
शाक्ते च दीक्षिता यूयं भवत ब्राह्मणाधमाः ।
चार्वाके च मते यूयं तथा पाषण्डकेऽपि च ॥
वैष्णवे दीक्षिता यूयं भवत ब्राह्मणाधमाः ।
दुर्मतेषु तथाऽन्येषु मार्गेष्वश्रौतकेषु च ।
श्रद्धया दीक्षिता यूयं भवत ब्राह्मणाधमाः ॥ इत्यादि ।

कौर्मे—

सृष्ट्वा च कामतोऽन्यानि वेदवाक्यानि पापिनः ।
निर्माय च पुराणानि भवत ब्राह्मणाधमाः ॥
दोर्मूले तप्तमुद्रादिधारिणः पापचेतसः ।
वेदमार्गपरिभ्रष्टा भवत ब्राह्मणाधमाः ॥
विष्णुमेव पुरस्कृत्य शिवमार्गविदूषकाः ।
नारकायातना यूयं भवत ब्राह्मणाधमाः ॥
सन्मार्गनिन्दका दुष्टमार्गैकपरिमोहिनः ।
पापोपदेशनिरता भवत ब्राह्मणाधमाः ॥
मोक्षमार्गं परित्यज्य वक्रमार्गैकगामिनः ।
वेदनिन्दापरा यूयं भवत ब्राह्मणाधमाः ॥
अग्निष्टोमादिकर्माणि विसृज्य श्रुतिनिन्दकाः ।
वाय्वादिदेवताभक्ता भवत ब्राह्मणाधमाः ॥
वीरशैवादिशैवानि मोक्षैकफलदान्यपि ।
तन्निन्दकाः पापिनश्च भवत ब्राह्मणाधमाः ॥
चक्राङ्किताः शैवमार्गनिन्दका स्वात्मदूषकाः ।
धर्माध्वप्रतिकूलाश्च भवत ब्राह्मणाधमाः ॥

भारतादौ प्रकल्प्यापि वचनानि स्वबुद्धितः ।
कपोलकल्पितार्थज्ञा भवत ब्राह्मणाधमाः ॥

इत्यादि (शाप) पराहतत्वादूर्ध्वपुण्ड्रादौ प्रमाणत्वेनोपकल्पितवचनान्यस्मरणीयानि । किमनया अप्रस्तुतप्रशंसयेत्यास्तां विस्तरः ॥

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञश्रीनीलकण्ठशिवाचार्यकृते निगमागमसारसंग्रहे क्रियासारे विभूतिधारणतत्प्रमाणोपन्यासो नाम सप्तमोपदेशः

---

## अष्टमोपदेशः

अथाष्टमे चोपदेशे प्रशंसां भस्मनः पराम् ।
वर्णये वर्णसाङ्कार्यहेतुतामूर्ध्वपुण्ड्रके ॥ १

तन्त्रोक्तमन्त्रतश्चक्राद्यङ्कपुण्ड्रान्तरं गताः ।
यन्मायोत्तरणाशक्तास्तं भजे साम्बमीश्वरम् ॥ २

श्रुतिस्मृतिपुराणेतिहासतन्त्रप्रकाशितम् ।
भस्मधारणमाहात्म्यं प्रवक्ष्यामि समासतः ॥ ३

मुमुक्षुर्वा बुभुक्षुर्वा द्विजेन्द्रः शुद्धवैदिकः ।
धारयेत् सादरं नित्यं भस्म वेदोक्तमार्गतः ॥ ४

वेदोक्तेनैव मन्त्रेण सितं भस्माग्निहोत्रजम् ।
धारये[1]द्वैदिकं प्राज्ञस्त्रिपुण्ड्रोद्धूलनात्मना ॥ ५

तिर्यक् त्रिपुण्ड्रं मुक्त्वैकं पुरुषार्थैकसाधनम् ।
पुण्ड्रान्तरं भ्रमाद्वापि वैदिको नैव धारयेत् ॥ ६

पुण्ड्रान्तरं कदाचिद्वाप्यश्रौतं शुद्धवैदिकः ।
धारयेद्यदि मोहेन पतत्येव न संशयः ॥ ७

---

[1] वैदिकः.

मृदोर्ध्वपुण्ड्रो विहितः स्मृत्यादिषु यतस्ततः।
तद्धारकस्य पातित्यकथनं नहि युक्तिमत्॥ ८

व्यासेन वेदशास्त्रार्थवित्तमेन महात्मना।
ऊर्ध्वपुण्ड्रस्य महात्म्यमुक्तं सत्यव्रतेन च॥ ९

जाह्नवीतीरसंभूतां मृद मूर्ध्नि बिभर्ति यः।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय वै स्मृतम्॥ १०

ऊर्ध्वपुण्ड्रो मृदा शुद्धो ललाटे यस्य दृश्यते।
स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः॥ ११

श्रीमद्बृहन्नारदीये सर्वप्राणिमनोहरे।
ऊर्ध्वपुण्ड्रस्य माहात्म्यं तत्र तत्र प्रदर्शितम्॥ १२

ऊर्ध्वपुण्ड्रं यः करोति तुलसीमूलमृत्तिकाम्।
तत्रैव नेत्रं तस्य स्यान्मूर्ध्नीन्दोर्विभूयात्कलाम्॥ १३

यज्ञो दानं तपो होमः स्वाध्यायः पितृतर्पणम्।
वृथा भवति विप्रेन्द्र ऊर्ध्वपुण्ड्रविनाकृतम्॥ १४

ऊर्ध्वपुण्ड्रस्य महात्म्यं सविधानं कृपाबलात्।
ब्रह्माण्डाख्यपुराणे तु ब्रह्मणो भवतेरितम्॥ १५

ऊर्ध्वपुण्ड्रप्रमाणानि द्रव्याण्यङ्गुलिभेदतः।
वर्णानि मन्त्रदेशांश्च प्रवक्ष्यामि फलानि च॥ १६

पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः।
सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिते॥ १७

मृद एतास्तु सङ्ग्राह्या वर्जयेदन्यमृत्तिकाः।
श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत्॥ १८

श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते।
अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत्॥ १९

अनामिका सदा नित्यं मुक्तिदा च प्रदेशिनी।
एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशेत्॥ २०

वर्तिदीपाकृतिं वापि वेणुपत्राकृतिं तथा।
पद्मस्य मुकुलाकारं तथैव कुमुदस्य च॥ २१

मत्स्यकूर्माकृतिं वापि शङ्खाकारं ततः परम् ।
दशाङ्गुलप्रमाणं तदुत्तमोत्तममुच्यते ॥ २२

नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम् ।
सप्तषट्पञ्चभिः [1]पुण्ड्रं मध्यमं त्रिविधं स्मृतम् ॥ २३

चतुस्त्रिद्व्यङ्गुलैःपुण्ड्रं कनिष्ठं त्रिविधं भवेत् ।
ललाटे केशवं विद्यान्नारायणमथापि वा ॥ २४

माधवं हृदि विन्यस्य गोविन्दं कर्णकूर्परे ।
उदरे दक्षिणे पार्श्वे विष्णुरित्यभिधीयते ॥ २५

तत्पार्श्वे बाहुमध्ये तु मधुसूदनमेव च ।
त्रिविक्रमं कण्ठदेशे वामे कुक्षौ तु वामनम् ॥ २६

श्रीधरं बाहुके वामे हृषीकेशं तु कण्ठके ।
पृष्ठे तु पद्मनाभं [2]कुकुदि दामोदरं स्मरेत् ॥ २७

द्वादशैतानि नामानि वासुदेवस्य मूर्धनि ।
पूजाकाले च होमे च सायं प्रातः समाहितः ॥ २८

नामान्युच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रकम् ।
अशुचिर्वाप्यनाचारो मनसा पापमाचरन् ॥ २९

शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्राङ्कितो नरः ।
ऊर्ध्वपुण्ड्रधरो मर्त्यो म्रियते यत्र कुत्रचित् ॥ ३०

श्वपाकोऽपि विजानीध्वं मम लोके महीयते ।
तस्मादेभ्यश्चेद्दशेभ्यो वचनेभ्योऽविशङ्कया ॥ ३१

वैदिकेनाप्यूर्ध्वपुण्ड्रं धार्यमेव मृदेति चेत् ।
वेदैक[3]निष्ठस्य श्रौतमूर्ध्वपुण्ड्रं द्विजस्य तु ॥ ३२

विहितत्वेन वदतस्ते विद्वत्ता महत्तरा ।
प्रत्यक्षश्रुत्य[4]भावाद्धि श्रौतं चेदूर्ध्वपुण्ड्रकम् ॥ ३३

[5]तर्हि श्रौतं कथं वा न भवेदेकादशीव्रतम् ।
एकादशीव्रतस्यास्ति श्रुतिस्तेऽनुमितेति चेत् ॥ ३४

---

[1] पूर्ण–पा. [2] ककुद्दामोदरं–पा. [3] निष्ठसश्रौत–पा. [4] भावादश्रौतं–पा.
[5] तर्ह्यश्रौतं इति स्यात्.

ऊर्ध्वपुण्ड्रस्यानुमिता श्रुतिः कस्मान्न विद्यते।
एकादशीव्रतं कस्मात् कुत्रापि न निषेधितम्॥ ३५

तस्मादनुमितास्त्येव श्रुतिस्तस्य न संशयः।
ऊर्ध्वपुण्ड्रं पुराणेषु बहुशस्तु निषेधितम्॥ ३६

ततोऽस्यानुमिता नास्ति श्रुतिर्नैवात्र संशयः।
सर्वशास्त्रजसन्देहसमुद्रवडबानले॥ ३७

पाराशरे साङ्कनं पुण्ड्रान्तरं सुनिराकृतम्।
ऊर्ध्वपुण्ड्रं त्रिशूलं च वर्तुलं चतुरश्रकम्॥ ३८

अर्धचन्द्राकृतिं चैव वेदनिष्ठो न धारयेत्।
जन्मना लब्धजातिस्तु वेदपन्थानमाश्रितः॥ ३९

पुण्ड्रान्तरं भ्रमाद्वापि ललाटे नैव धारयेत्।
ख्यातिलाभादिसिद्ध्यर्थमपि विष्णवागमादिषु॥ ४०

स्थितं पुण्ड्रान्तरं नैव धारयेद्वैदिको जनः।
तिर्यक्त्रिपुण्ड्रं सन्त्यज्य श्रौतं पुण्ड्रान्तरं भ्रमात्॥ ४१

ललाटे [1]धारयेन्मर्त्यः पतत्येव न संशयः।
न दाहयेद्द्विजश्रेष्ठं न दहेच्छ्रा[2]स्त्रपूर्वकैः॥ ४२

अङ्कितो यः स्वदेशात्तं राजा शीघ्रं प्रवासयेत्।
अतीव पतितानां हि [3]श्वपदाद्यङ्कनं नृणाम्॥ ४३

अधीयते न शुद्धानामतः शुद्धं नचाङ्कयेत्।
अध्यापने चाध्ययने श्रौतस्मार्तेषु कर्मसु॥ ४४

संभाषणे च सम्बन्धे नाधिकारी च लाञ्छितः।
अन्यत्राप्यूर्ध्वपुण्ड्रादिधारणं वैदिकस्य तु॥ ४५

पातित्यकारणमिति परिहाराय कीर्तितम्।
तिर्यक्पुण्ड्रं परित्यज्य श्रौतं पुण्ड्रान्तरं सदा॥ ४६

धारयेद्यदि मोहाद्वा पतत्येव न संशयः।
सन्तप्तशङ्खचक्राद्यैः सम्यगङ्कितविग्रहम्॥ ४७

---

[1] धारयन् इति स्यात्. [2] शस्त्रपूर्वकैः–पा. [3] स्वपद–पा.

पश्यतो नरकप्राप्तिर्नारदीये प्रदर्शिता ।
यस्तु सन्तप्तशङ्खादिचक्राङ्किततनुर्नरः ॥ ४८

स सर्वयातनाभोगी चण्डालः कोटिजन्मसु ।
द्विजः सन्तप्तशङ्खादिचक्राङ्किततनुं नरम् ॥ ४९

संभाष्य रौरवं याति यावदिन्द्राश्चतुर्दश ।
चक्राङ्किततनुर्यत्र तत्र कोऽपि न संवसेत् ॥ ५०

यदि तिष्ठेन्महापापी सहस्रब्रह्महा भवेत् ।
गङ्गास्नानरतो वापि चाश्वमेधरतोऽपि वा ॥ ५१

चक्राङ्कितं तनुं दृष्ट्वा पश्येत् सूर्यं जपेन्नरः ।
जनेश पौरुषं सूक्तमन्यथा [1] रौरवं व्रजेत् ॥ ५२

चक्राङ्किततनुं दृष्ट्वा पश्येत् सूर्यं जपेन्नरः ।
जनेश शतरूद्रीयमन्यथा पतितो भवेत् ॥ ५३

ब्राह्मणस्य तनुर्ज्ञेया सर्वदेवसमाश्रया ।
सा चेत् सन्तापिता राजन् किं वक्ष्यामि महैनसः ॥ ५४

चक्राङ्किततनुर्वापि राजन् शङ्खाङ्कितोऽपि वा ।
नाधिकारी परिज्ञेयः श्रौतस्मार्तेषु कर्मसु ॥ ५५

स्वसंहितायां सूतेन तत्र तत्र कृपालुना ।
ऊर्ध्वपुण्ड्रादयः पुण्ड्राः साङ्कनाश्च निषेधिताः ॥ ५६

ललाटे भस्मना तिर्यक्त्रिपुण्ड्रस्य च धारणम् ।
विना पुण्ड्रान्तरं मोहाद्धारयन् पतितो भवेत् ॥ ५७

वेदमार्गैकनिष्ठस्तु मोहेनाप्यङ्कितो यदि ।
पतत्येव न सन्देहस्तथा पुण्ड्रान्तरादपि ॥ ५८

[2] नाङ्कितं विग्रहं कुर्याद्वेदपन्थानमाश्रितः ।
पुण्ड्रान्तरं भ्रमाद्वापि ललाटे नैव धारयेत् ॥ ५९

देवानां च मनुष्याणां तथान्येषां च लाञ्छनम् ।
न कुर्यान्मोहतो वापि यदि कुर्यात् पतत्यधः ॥ ६०

---

[1] नरकं—पा. [2] नाङ्कनं विग्रहे कुर्यात्—पा.

कस्यचिल्लाञ्छितो मर्त्यो न साक्षी सर्वथा भवेत् ।
श्रौतस्मार्तसमाचारे नाधिकारी च लाञ्छितः ॥ ६१

लाञ्छिताश्च न संभाष्या न स्पृश्याश्च कदाचन ।
न दर्शनीयास्तान् राजा देशाच्छीघ्रं प्रवासयेत् ॥ ६२

वेदोक्तेनैव मार्गेण भस्मनैव त्रिपुण्ड्रकम् ।
धूलनं नाचरिष्यन्ति पाषण्डोपहता जनाः ॥ ६३

ऊर्ध्वपुण्ड्रं ललाटे तु वर्तुलं चार्धचन्द्रकम् ।
धारयिष्यन्ति मोहेन पाषण्डोपहता जनाः ॥ ६४

शङ्खचक्रगदापद्मैरङ्कनं विग्रहे स्वके ।
मोहेनैव करिष्यन्ति पाषण्डोपहता जनाः ॥ ६५

मनुष्याणां तु नाम्ना च तेषामाकारतोऽपि वा ।
लाञ्छिताश्च भविष्यन्ति पाषण्डोपहता जनाः ॥ ६६

इत्येतैरीदृशैश्चान्यैः पुराणवचनैस्तथा ।
निरस्तत्वान्न साङ्कोर्ध्वपुण्ड्रस्यानुमिता श्रुतिः ॥ ६७

निषिद्धत्वेऽप्यनुमितोर्ध्वपुण्ड्रस्यास्ति चेच्छ्रुतिः ।
चैत्यवन्दनकेशोल्लुञ्छनादीनां कुतो न सा ॥ ६८

तेषां स्मृतिपुराणादौ कुत्राप्यकथितत्वतः ।
श्रुतीना[1]मप्यकथितानामभावस्तु युज्यते ॥ ६९

स्मृत्यादिषूर्ध्वपुण्ड्रस्य प्रोक्तत्वादन्यधर्मवत् ।
श्रुत्यभावो न युक्तोऽतः सास्त्येवानुमितेति चेत् ॥ ७०

स्मृत्याद्युक्तत्वमात्रेण स्मृत्याद्युक्तान्यधर्मवत् ।
ऊर्ध्वपुण्ड्रं प्रवदतो विद्वत्ता भाति ते तराम् ॥ ७१

पुरवासाद्गजोऽश्वो वा भवेत् किं नाम गर्दभः ।
शूद्रो ब्राह्मणवीथीस्थोऽथवा किं ब्राह्मणो भवेत् ॥ ७२

अश्रौतश्चेदूर्ध्वपुण्ड्रः स्मृत्यादिष्वीरितः कुतः ।
इति चेद्वद साङ्ख्योक्ता सृष्टिरत्रेरिता कुतः ॥ ७३

---

[1] मप्यनुमितानाा—इति भवितव्यम्.

साङ्ख्यानुद्दिश्य तत्सृष्टिः स्मृत्यादिष्वीरितेति चेत् ।
तद्वदूर्ध्वपुण्ड्रोऽप्यत्रोक्तस्तान्त्रिकान् वैष्णवान् प्रति ॥ ७४

मृदोर्ध्वपुण्ड्रचक्रादिलाञ्छने वैष्णवान् प्रति ।
पाञ्चरात्रे भगवता तत्र तत्र प्रकीर्तिते ॥ ७५

पुराणेष्वप्यूर्ध्वपुण्ड्रं वैष्णवानामितीरितम् ।
तद्दृष्ट्वैव मया प्रोक्तं स्वधीकल्पनया न तु ॥ ७६

विष्ण्वागमोक्तमार्गेण श्रद्धया सह दीक्षिताः ।
एकान्त्याद्या बहुविधा वैष्णवाः परिकीर्तिताः ॥ ७७

सच्छिद्रमिति चाच्छिद्रं द्विविधं चोर्ध्वपुण्ड्रकम् ।
उच्यते दृश्यते चैतच्छास्त्रेऽप्यनुभवेऽपि च ॥ ७८

त्रिशूलाभं हरिपदाकारं चेति पुनर्द्विधा ।
सच्छिद्रस्य त्रिशूलस्य मध्ये रेखा हरिद्रया ॥ ७९

सच्छिद्रमुक्तमैकान्तिपरमैकान्तिनः प्रति ।
पाञ्चरात्रे भगवता च्छिद्रं प्रत्यन्यवैष्णवान् ॥ ८०

एकान्तिनो महाभागा मत्स्वरूपविदोऽमलाः ।
सान्तरालान् प्रकुर्वीरन् पुण्ड्रान् मम पदाकृतीन् ॥ ८१

परमैकान्तिनोऽप्येवं मत्पादैकपरायणाः ।
हरिद्राचूर्णसंयुक्ताञ्छूलाकारांस्तु वामलान् ॥ ८२

अन्येऽपि वैष्णवाः पुण्ड्रानच्छिद्रानपि भक्तितः ।
प्रकुर्वीरन् दीपशिखावेणुपत्रोपमाकृतीन् ॥ ८३

अच्छिद्रान्वाथ सच्छिद्रान् कुर्युः केवलवैष्णवाः ।
अच्छिद्रकरणे तेषां प्रत्यवायो न विद्यते ॥ ८४

एकान्तिनां प्रपन्नानां परमैकान्तिनामपि ।
अच्छिद्रपुण्ड्रकरणे प्रत्यवायो महान् भवेत् ॥ ८५

ऊर्ध्वपुण्ड्रं द्विजः कुर्याद्दण्डाकारं तु शोभनम् ।
मध्ये छिद्रं वैष्णवस्तु नमोऽन्तैः केशवादिभिः ॥ ८६

सान्तरालमृजुं सौम्यं सुपार्श्वं सुमनोहरम् ।
यः करोत्यूर्ध्वपुण्ड्रं स ममातीव प्रियो भवेत् ॥ ८७

विमलान्यूर्ध्वपुण्ड्राणि सान्तरालानि यो नरः ।
करोति विपुलं तत्र मन्दिरं मे करोति सः ॥ ८८

ऊर्ध्वपुण्ड्रस्य मध्ये तु विशालेऽतिमनोहरे ।
लक्ष्म्या सार्धं समासीनो रमेऽहं तत्र [1]निर्वृतः ॥ ८९

निरन्तरालं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः ।
स हि तत्र स्थितं विष्णुं श्रियं चैव व्यपोहति ॥ ९०

अच्छिद्रमूर्ध्वपुण्ड्रं तु यः करोति विमूढधीः ।
स पर्यायेण तेनेति नरकानेकविंशतिम् ॥ ९१

ऋजूनि स्फुटपार्श्वानि सान्तरालानि विन्यसेत् ।
ऊर्ध्वपुण्ड्राणि दण्डाब्जदीपमत्स्यनिभानि च ॥ ९२

बहुना किं प्रलापेन हृद्यं सौम्यं सुदर्शनम् ।
ऋजुं सुपार्श्वमूर्ध्वाग्रं कुर्यादत्यच्छमध्यमम् ॥ ९३

शिखोपवीतवद्धार्यमूर्ध्वपुण्ड्रं [2] द्विजन्मना ।
विकृताश्चेद्धि विफलाः क्रियाः सर्वा महामुने ॥ ९४

तस्मात् सर्वेषु कार्येषु धार्यं विप्रस्य धीमतः ।
रक्षाकरं दुर्ग्रहणासारग्रहविनाशनम् ॥ ९५

ऊर्ध्वपुण्ड्रात् परं नान्यद्दृष्टं ज्ञातं श्रुतं मया ।
धारयेदूर्ध्वपुण्ड्रांश्च विष्णोः प्रियकरांस्तथा ॥ ९६

जपहोमार्चनध्यानदानादिषु विशेषतः ।
नश्यन्ति सकलाः क्लेशा नराणां पापसंभवाः ॥ ९७

अभीष्टान्यखिलानि स्युरूर्ध्वपुण्ड्रस्य धारणात् ।
त्रयोदश द्वादश वा ह्यूर्ध्वपुण्ड्राणि धारयेत् ॥ ९८

एकं चत्वारि षट् चाष्टावपि वाञ्छन्ति केचन ।
प्रणवेन तथा [3] मन्त्रैः षडष्टद्वादशाक्षरैः ॥ ९९

पुण्य [4] तीर्थाहृतश्वेतमृत्स्नाविरचितैः शुभैः ।
ऊर्ध्वपुण्ड्रैर्द्वादशभिः सौम्यैरावृतविग्रहम् ॥ १००

---

[1] निर्मितः–पा. [2] द्विजन्मानाम्–पा. [3] व्यूहैः–पा. [4] तीर्थोध्दृतश्वेत–प.

स्वस्थानविधृताशेषपञ्चायुधविभूषितम् ।
गाधिसूनुं महात्मानं विश्वामित्रं तपोनिधिम् ॥ १०१

अभ्येत्य काश्यपो नामा कदाचिद्दषिसत्तमः ।
प्रणम्योपान्तिके तस्थौ शिरस्याधाय चाञ्जलिम् ॥ १०२

धृतोर्ध्वपुण्ड्रः सततं शस्तया श्वेतमृत्स्नया ।
शङ्खचक्रादिभिश्चिह्नैः स्वेषु स्थानेषु लाञ्छितः ॥ १०३

एवं लक्षणसंयुक्तो यः स आचार्य उच्यते ।
धृतोर्ध्वपुण्ड्रतिलकः सदा द्वादशनामभिः ॥ १०४

प्रशस्तोज्वलवेषश्च शङ्खचक्रादिलाञ्छितः ।
एवमादिगुणैर्युक्तः स्थिरधीः शिष्य उच्यते ॥ १०५

प्रशस्तवैष्णवक्षेत्रजातया श्वेतमृत्स्नया ।
मूर्तीनां केशवादीनां नामोच्चारणपूर्वकम् ॥ १०६

ललाटादिषु यद्गात्र ऊर्ध्वपुण्ड्रस्य धारणम् ।
तत्पार्थिवं भवेत् स्नानं योगिवर्यैर्निवेषितम् ॥ १०७

पवित्राण्यब्जबीजानि शङ्खचक्राङ्कनं तथा ।
धारयन्नोपहन्येत कदाचित् किङ्करादिभिः ॥ १०८

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो नारी तथेतरः ।
चक्राद्यैरङ्कयेद्गात्रमात्मनः परया मुदा ॥ १०९

अनिष्टानां निवृत्त्यर्थमैकान्त्याय जगत्पतौ ।
सिध्द्यर्थं कर्मणां चैव धार्यं चक्रादिलाञ्छनम् ॥ ११०

शङ्खचक्रोर्ध्वपुण्ड्राद्यैश्चिह्नैः प्रियतमैर्हरेः ।
सहितः सर्वधर्मेभ्यः अच्युतो नैन आप्नुयात् ॥ १११

दासभूतं यदात्मानं वुध्यते स परात्मनः ।
तदैव गात्रं कुर्वीत शङ्खचक्रादिलाञ्छितम् ॥ ११२

अङ्कितः क्वचिदप्यङ्गे चक्रेणैकेन केवलम् ।
अनिष्टानां तु भूतानां न तावद्वशगो भवेत् ॥ ११३

विष्णोरायतनाग्नौ वा गुरोरात्मन एव वा ।
हुते होमादिभिस्तत्तत्स्वरूपैरर्चितैःक्रमात् ॥ ११४

चक्राम्बुजगदाशार्ङ्गखड्गैर्मन्त्रेण धारयेत् ।
अङ्कितः शङ्खचक्राभ्यां सर्वैरङ्कित एव वा ॥ ११५

शङ्खचक्रप्रधानं हि सर्वमन्यद्गदादिकम् ।
[1]अग्निष्टोमौ हि चक्राब्जे सर्व एव तदात्मकाः ॥ ११६

दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥ ११७

सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ ।
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ॥ ११८

भगवन् सर्वविजय सहस्रारापराजित ।
शरणं त्वां प्रपन्नोऽस्मि श्रीकरं श्रीसुदर्शनम् ॥ ११९

पाञ्चजन्य निजध्वानध्वस्तपातकसञ्चय ।
पाहि मां पापिनं घोरसंसारार्णवपातिनम् ॥ १२०

त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
नमितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तुते ॥ १२१

ऊर्ध्वपुण्ड्रो वैष्णवानामत्र वैखानसेऽपि च ।
[2]भस्मना च ततो भिन्नतन्त्रत्वाद्भिन्नमन्त्रतः ॥ १२२

हुतभस्म समादाय सितमष्टाक्षरेण तु ।
ऊर्ध्वपुण्ड्रं तु [3]विन्यस्येद्बध्वा प्रतिसरं करे ॥ १२३

दक्षिणे चास्त्रमन्त्रेण प्राशयेत् पञ्चगव्यकम् ।
समिद्भिर्गोघृतैश्चैव हवने विहिते सति ॥ १२४

तद्भस्म सङ्गृह्य करे मन्त्रेणैवाभिमन्त्र्य च ।
यदूर्ध्वपुण्ड्रकरणमाग्नेयं स्नानमेव तत् ॥ १२५

"भूतिर्भस्मे" ति भस्म गृहीत्वा ललाटहृदयबाहुकण्ठादीनादित्यः सोमो नम इत्यूर्ध्वाग्रमालिप्य "आपो हिष्ठा" इति प्रोक्ष्य "यत्ते अग्ने तेजस्तेन" इत्यग्निं उद्वयं इत्यादिभिरादित्यं चोपतिष्ठेत ॥

---

[1] अग्नीषोमा इति स्यात्. [2] भस्म नाचरितो भिन्न–पा. [3] विन्यस्य बध्वा–पा.

[1]भूतिस्नाने लभते नित्यं सर्वयज्ञकृतं भवेत् । अग्निमारुत-योर्भूतिरादित्यः सोमो नमः ।

[2]अङ्कनं पुण्ड्रान्तरं च तान्त्रिकाणां क्रमेण तु ॥ १२६

उपकारकमित्युक्तं [3]सूतेन करुणालुना ।

विष्णवागमादितन्त्रेषु दीक्षितानां विधीयते ॥ १२७

शङ्खचक्रगदापूर्वैरङ्कनं नान्यदेहिनाम् ।

दीक्षितानां तु तन्त्रेषु नराणामङ्कनं बुधाः ॥ १२८

उपकारकमेवोक्तं क्रमेण मुनिपुङ्गवाः ।

पुण्ड्रान्तरस्य [4]तन्त्रेषु धारणं दीक्षितस्य तु ॥ १२९

उपकारकमेवोक्तं क्रमेण मुनिपुङ्गवाः ।

ऊर्ध्वपुण्ड्रं मृदा धार्यं विप्रेण ब्रह्मवादिना ॥ १३०

उद्धृतासीति मन्त्रेण वैष्णवेन विशेषतः ।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो नारी तथेतरः ॥ १३१

चक्राद्यैरङ्कयेद्गात्रमात्मनः परया मुदा ।

इत्यादिवचनैः प्राधान्येन पुण्ड्रान्तराङ्कनम् ॥ १३२

वर्णानामाश्रमवतामेवं प्रोक्तं न को वदेत् ।

सर्वज्ञो भगवान् सूतः स्वगीतायां कृपावलात् ॥ १३३

वर्णाश्रमास्तान्त्रिकाणामपि सन्तीति चोक्तवान् ।

श्रुतिपथगलितानां मानुषाणां तु तन्त्रं
[5]गुरुरखिलसुरेशः सर्ववित् प्राह शम्भुः ।
श्रुतिपथनिरतानामस्ति तन्त्रं न किंचित्
सुखकरमिह सर्वं पुष्कलं सत्यमुक्तम् ॥ १३४

श्रुतिरपि मनुजानां वर्णधर्मान् बभाषे
परगुरुरखिलेषु प्राह तन्त्रेषु तद्वत् ।
श्रुतिपथगलितानां वर्णधर्मान् घृणाब्धिः
श्रुतिपथनिरतानां नैव तत्सेवनीयः ॥ १३५

---

[1] एवमेव सर्वत्र पाठो दृश्यते. [2] अङ्कनं चोर्ध्वपुण्ड्रं च. [3] सूतेन च कृपालुना— इति स्यात्. [4] सर्वेषु-पा. [5] गुरुगुरुरखिलेशः-पा.

श्रुतिपथनिरतानामाश्रमा यद्वदुक्ताः
परगुरुरखिलेशस्तद्वदाद्याश्रमांश्च ।
श्रुतिपथगलितानां मानुषाणां तु [1]तं तं
हरिरपि मुनिमुख्याः प्राह तन्त्रे स्वकीये ॥ १३६

विधिरपि मनुजानामाह वर्णाश्रमांश्च
श्रुतिपथगलितानामेव तन्त्रे स्वकीये ।
श्रुतिपथनिरतानां [2]नैव तत्सेवनीयं
श्रुतिपथसममार्गौ नैव सत्यं मयोक्तम् ॥ १३७

अधुना वैखानसोक्तोर्ध्वपुण्ड्रो वैदिकस्य न ।
श्रुत्युक्तमन्त्रादितरमन्त्रेण विहितत्वतः ॥ १३८

अधिकृद्भेदतो भेदः श्रुतितन्त्रोक्तमार्गयोः ।
[3](साहंसतार त्रियम्बकादि भेदो यथा तथा)
भूत्या [4]समन्त्रोऽमन्त्रोर्ध्वपुण्ड्रो धार्यो न वैदिकैः ॥ १३९

तानेवोद्दिश्य शास्त्रेषु पुण्ड्रान्तरनिषेधतः ।
विशेषेणाप्यूर्ध्व[5]पुण्ड्रो भस्मनैव निषेधतः ॥ १४०

तिर्यक्पुण्ड्रो मृत्तिकाभिश्चैव स्मृत्यन्तरे स्फुटम् ।
भस्मनैवोर्ध्वपुण्ड्रश्च तिर्यक्पुण्ड्रो मृदा तथा ॥ १४१

ब्रह्महत्यासमः प्रोक्तो मुनिभिर्वेदपारगैः ।
वैदिकैर्मन्त्ररहितं चन्दनागरुकुङ्कुमम् ॥ १४२

तिर्यक्पुण्ड्रात्मना धार्यं कान्तिसौख्याभिलाषिभिः ।
पुण्ड्रो धृतश्चन्दनाद्यैरिति भस्म न सन्त्यजेत् ॥ १४३

दह्येत भस्मसन्त्यागी श्रुतिजक्रोधवह्निना ।
चन्दनाद्युपरि प्राज्ञो धारयेद्भस्म वैदिकम् ॥ १४४

लौकिकं चन्दनाद्यं तु भस्मोपरि न धारयेत् ।
भस्मवच्चन्दनादीनां त्यागेऽनर्थो न विद्यते ॥ १४५

---

[1] तन्त्रं इति सर्वत्र वर्तते. [2] नैव ते सेवनीयाः इति साधुः । [3] इदमधिकं कुत्रचिद् दृश्यते । [4] स्वमन्त्रमाप्यूर्ध्वं इति यावत्–पा. [5] पुण्ड्रो भस्मनैषतिपेधकः–पा. पुण्ड्रं भस्मनैष निषेधति इति स्यात.

चन्दनादीन्यतो लौकिकान्येवात्र न संशयः ।
दृष्टकान्त्याद्यर्थचन्दनादेरुपरि भस्मनि ॥ १४६

धृते किंचिच्चन्दनादेर्धारणस्य फलं न चेत् ।
उपरिष्टाच्चन्दनादेर्धृते वै सितभस्मनि ॥ १४७

चन्दनाद्यर्थभस्मार्थफलाप्तेः को निवारकः ।
गोपीमलिनधारी तु शिवं स्पृशति यो द्विजः ॥ १४८

सस्वैकविंशतिकुलं सोऽक्षय्यं नरकं व्रजेत् ।
भस्मनैव लिखेत् पुण्ड्रं न लिखेन्मृत्तिकादिभिः ॥ १४९

श्रौतभस्माद्यभावे भस्माहरेल्लौकिकाग्नितः ।
इति गोपीचन्दनमृच्चन्दनादिनिषेधतः ॥ १५०

कौर्मे कथं चन्दनादिधारणं वैदिकस्य चेत् ।
कौर्मे स्थितो यो निषेधो गोपीचन्दनमृत्स्नयोः ॥ १५१

अविशेषेणैव सोऽयमशेषाश्रमगोचरः ।
चन्दनादिनिषेधस्तु गृहस्थविषयो नहि ॥ १५२

किं तु यत्यादिविषयस्तच्च स्मृत्यन्तरे स्फुटम् ।
ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनम् ॥ १५३

कृत्वा चोपवसेद्भिक्षुः स्रग्गन्धादिविभूषणः ।
श्रौतत्वादनिषिद्धत्वाद्धार्यं तिर्यक्त्रिपुण्ड्रकम् ॥ १५४

अश्रौतत्वान्निषिद्धत्वात्त्याज्यं पुण्ड्रान्तरं द्विजैः ।
किमत्र बहुनोक्तेन प्रमादेनापि वैदिकः ॥ १५५

त्रिपुण्ड्रेतरपुण्ड्रं तु [1] धारयेद्यः पतत्यधः ।
पुण्ड्रान्तरनिषेधो यो वेदमार्गैकवर्तिनः ॥ १५६
स समानस्तान्त्रिकस्य शैवस्यापि न संशयः ।

पुराणे वायवीयादौ शैवाचारप्रकाशके ॥
शिवस्य शासनत्वेन वर्तुलाद्याः प्रकीर्तिताः ॥ १५७

पुरो न्यस्तकारो [2] मन्त्रैस्त्रिपुण्ड्रं भस्मना लिखेत् ।
अवक्रमायतं व्यक्तं ललाटे गन्धवारिणा ॥ १५८

---

[1] धारयेच्चेत् पत—इति स्यात्. [2] मन्त्री त्रिपुण्ड्रं—पा.

वृत्तं वा चतुरश्रं वा बिन्दुमर्धेन्दुमेव वा ।
ललाटे यादृशं पुण्ड्रं लिखितं सितभस्मना ॥ १५९

तादृशं भुजयोर्मूर्ध्नि स्तनयोश्चान्तरे लिखेत् ।
लिङ्गदीपार्धचन्द्राभं चतुरश्रं च वर्तुलम् ॥ १६०

त्रिपुण्ड्रं चेति कथितं षड्विधं शिवशासनम् ।
तस्माच्छैवस्य वेदैकनिष्ठस्याद्यं न विद्यते ॥ १६१

इति चैन्नाजातिलिङ्गमीशशासनमीरितम् ।
ब्रह्मविष्णुमहादेवनामभेदविवक्षया ॥ १६२

वर्तुलाद्यखिलं लिङ्गं शिवशासनमीरितम् ।
वर्तुलं ब्रह्मभक्तानां लिङ्गं बिन्दुस्तथैव च ॥ १६३

वैष्णवानां लिङ्गदीपचतुरश्रार्धचन्द्रकम् ।
भस्मना शिवभक्तानां लिङ्गंतिर्यक्त्रिपुण्ड्रकम् ॥ १६४

[1] सन्देहसागरागस्त्ये सन्निधाने पराशरे ।
देवानां च तदीयानां लिङ्गमुक्तं पृथक् पृथक् ॥ १६५

स्कान्दे पराशरे कौर्मे नारदीये च गारुडे ।
शिवधर्मे च वासिष्ठलैङ्गे कालोत्तरेऽपि च ॥ १६६

प्राजापत्ये मानवीयसंहितायां तथैव च ।
शिवराघवसंवादे [2] (वायवीये च मानवे ॥ १६७

लैङ्गे शिवरहस्ये च) मात्स्ये बोधायनेऽपि च ।
तत्प्रणीतस्मृतौ चैव भरद्वाजस्मृतौ तथा ॥ १६८

स्मृतिरत्नावलीनाम्नि धर्मसारसुधानिधौ ।
श्रुतिभास्करसंज्ञे च स्मृतिसारसमुच्चये ॥ १६९

भारते नारदीयायां स्मृतौ लोकाक्षिभाषिते ।
भस्मधारणमाहात्म्यं सर्वत्रापि प्रकीर्तितम् ॥ १७०

मध्ये मध्येऽत्र सर्वत्र ज्ञानादिफलकीर्तनम् ।
भस्मधारण[3]काम्यत्वसाधकं श्रूयते स्फुटम् ॥ १७१

---

[1] सन्देहनाश–पाठ. [2] अयं पाठः क्वाचित्कः. [3] कार्यत्व–पा.

ललाटे चैव दोर्द्वन्द्वे गले शिरसि वक्षसि ।
त्रिपुण्ड्रं धारयेन्नित्यं भुक्तिमुक्तिफलप्रदम् ॥ १७२

वर्णानामाश्रमाणां च मन्त्रतोऽमन्त्रतोऽपि वा ।
त्रिपुण्ड्रोद्धूलनं प्रोक्तं जाबाले बादरेण तु ॥ १७३

उद्धूलनं त्रिपुण्ड्रं च ज्ञानाङ्गत्वेन [1]साधनम् ।
आमनन्ति मुनिश्रेष्ठाः श्वेताश्वतरशाखिनः ॥ १७४

अयमत्याश्रमो धर्मो यैः समाचरितो मुदा ।
तेषामेव शिवज्ञानं संसारोच्छेदकारणम् ॥ १७५

उध्दूलनं त्रिपुण्ड्रं च मायापाशनिवृत्तये ।
आमनन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थिताः ॥ १७६

व्रतं पाशुपतं येन सम्यगाचरितं बुधाः ।
तस्य ज्ञानं विजायेत तेन पाशविमोचनम् ॥ १७७

उद्धूलनं त्रिपुण्ड्रं च ज्ञानाङ्गत्वेन केवलम् ।
आमनन्ति मुनिश्रेष्ठाः साक्षात्कैवल्यशाखिनः ॥ १७८

अतोऽपि पाशविच्छेदलाभाय ज्ञानसिद्धये ।
उद्धूलनं त्रिपुण्ड्रं च मुमक्षुः सम्यगाचरेत् ॥ १७९

सत्यादिभ्यः परा भूतिस्ततस्तिर्यक्त्रिपुण्ड्कम् ।
उद्धूलनं चरेदेतन्मुमुक्षुर्ज्ञानसिद्धये ॥ १८०

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
प्रमादादपि मोक्षार्थी न त्यजेदिति हि श्रुतिः ॥ १८१

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
महापातकनाशाय विधत्ते वैदिकी श्रुतिः ॥ १८२

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
रक्षार्थं सर्वभूतानां विधत्ते वैदिकी श्रुतिः ॥ १८३

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
मङ्गलार्थं च सर्वेषां विधत्ते वैदिकी श्रुतिः ॥ १८४

---

[1] सादरम्–पा.

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
पवित्रार्थं च सर्वेषां विधत्ते वैदिकी श्रुतिः ॥ १८५

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
माहेश्वराणां लिङ्गार्थं विधत्ते वैदिकी श्रुतिः ॥ १८६

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
विज्ञानार्थं च सर्वेषां विधत्ते वैदिकी श्रुतिः ॥ १८७

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
व्रतत्वेनैव सर्वेषां विधत्ते वैदिकी श्रुतिः ॥ १८८

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
दानत्वेनैव सर्वेषां विधत्ते वैदिकी श्रुतिः ॥ १८९

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
तपस्त्वेनैव सर्वेषां विधत्ते वैदिकी श्रुतिः ॥ १९०

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
यज्ञत्वेनैव सर्वेषां विधत्ते वैदिकी श्रुतिः ॥ १९१

भस्मनोद्धूलनं चैव तथा तिर्यक्त्रिपुण्ड्रकम् ।
सर्वधर्मतया पुंसां विधत्ते वैदिकी श्रुतिः ॥ १९२

शिवेन विष्णुना चैव ब्रह्मणा वज्रिणा तथा ।
देवताभिर्धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना ॥ १९३

उमादेव्या च लक्ष्म्या च वाण्या चान्याभिरेव च ।
सर्वस्त्रीभिर्धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना ॥ १९४

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरपि च सङ्करैः ।
अपभ्रंशैर्धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना ॥ १९५

उद्धूलनं त्रिपुण्ड्रं च यैः समाचरितं मुदा ।
त एव शिष्टा विद्वांसो नतरे मुनिपुङ्गवाः ॥ १९६

उद्धूलनं त्रिपुण्ड्रं च श्रद्धया नाचरन्ति ये ।
तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिः ॥ १९७

उद्धूलनं त्रिपुण्ड्रं च श्रद्धया नाचरन्ति ये ।
तेषां नास्ति शिवज्ञानं कल्पकोटिशतैरपि ॥ १९८

भस्मधारणमाहात्म्यं मया वक्तुं न शक्यते ।
गुरुणापि च मे विप्राः कल्पकोटिशतैरपि ॥ १९९

ब्रह्मणा विष्णुना चैव रुद्रेणापि मुनीश्वराः ।
भस्मधारणमाहात्म्यं न शक्यं परिभाषितुम् ॥ २००

अहो मोहस्य माहात्म्यं मुनीन्द्रा ब्रह्मवादिनः ।
यन्नरा ब्रह्म सन्त्यज्य कुर्वन्त्यन्यत्समीहितम् ॥ २०१

शिवलिङ्गं मणिः साक्षान्मन्त्रं पञ्चाक्षरं तथा ।
भूतिरेवौषधं पुंसां मुक्तिस्त्रीवश्यकर्मणि ॥ २०२

यत्र भुञ्जीत भस्माङ्गी मूर्खो वा पण्डितोऽपि वा ।
तत्र भुङ्क्ते महादेवः सपत्नीको वृषध्वजः ॥ २०३

सौरसंहितायां—

भस्मसञ्छन्नसर्वाङ्गमनुगच्छति यः पुमान् ।
सर्वपातकयुक्तोऽपि स सद्यः पूयते नरः ॥

[1] प्राजापत्यो यथा सर्वपुराणेषु शुभः स्मृतः ।
यथा पुरीषु सर्वासु पुरी वाराणसी शुभा ॥

तथा शुभं त्रिपुण्ड्रं च सर्वपुण्ड्रेषु कथ्यते ।
यथा विश्वाधिको रुद्रः सर्ववेदेषु गीयते ॥

तथा सर्वपुराणेषु त्रिपुण्ड्रमपि गीयते ।
त्रिपुण्ड्रधारिणः पादौ प्रक्षालयति यः पुमान् ॥

सर्वपातकयुक्तोऽपि स सद्यः पूयते नरः ।
त्रिपुण्ड्रधारिणो भिक्षाप्रदानेन हि केवलम् ॥

सर्वपातकयुक्तोऽपि पूयते मानवोऽचिरात् ।
तेनाधीनं श्रुतं तेन तेन सर्वमनुष्ठितम् ॥

---

[1] प्राजापत्ये—

यथा सर्वपुराणेषु पुरी वाराणसी शुभा ।
तथा शुभ्रास्त्रिपुण्ड्रं च . . . . ॥

इत्येव लिखितकोशे ब्याडगिमठीये दृश्यते ।

येन विप्रेन शिरसि त्रिपुण्ड्रं भस्मना धृतम् ।
कृतं स्यादकृतं तेन श्रुतं स्यादश्रुतं भवेत् ॥

अधीतमनधीतं च त्रिपुण्ड्रं येन वा धृतम् ।
वृथा वेदा वृथा यज्ञा वृथा दानं वृथा तपः ॥

वृथा व्रतोपवासौ तु त्रिपुण्ड्रं यो न धारयेत् ।
सत्यं शौचं तथा यज्ञस्तीर्थं देवादिपूजनम् ॥

सर्वमेतद्धवेद्व्यर्थं यस्त्रिपुण्ड्रं न धारयेत् ।
कीकटेष्वपि देशेषु यत्र भूतिविभूषणः ॥

मानवस्तु वसेन्नित्यं काशीक्षेत्रसमं हि तत् ।
दुश्शीलः शीलयुक्तो वा यो वा को वाप्यलक्षणः ॥

भूतिशासनसंयुक्तः स पूज्यो राजपुत्रवत् ।
छद्मनापि च यो धत्ते भूतिशासनमैश्वरम् ॥

सोऽपि यां गतिमप्नोति न तां यज्ञशतैरपि ।
सम्पर्काल्लीलया वापि भयाद्वा धारयेत्तु यः ॥

विधियुक्तविभूतिं तु स च पूज्यो यथा ह्यहम् ।
भस्मना वेदमन्त्रेण त्रिपुड्रं चावकुण्ठनम् ॥

यस्य सिध्येत् प्रयत्नेन ब्राह्मण्यं तस्य पुष्कलम् ।
वेदवेदान्तनिष्ठानां भस्मनैव त्रिपुण्ड्रकम् ॥

सम्यग्ज्ञानप्रदं शीघ्रं सत्यमुक्तं न संशयः ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य तु धारणम् ॥

महापातकसङ्घाततमसश्चण्डभास्करः ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य तु धारणम् ॥

सर्वपापहरं प्रोक्तं सत्यमेव न संशयः ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य तु धारणम् ॥

शिवस्य विष्णोर्देवानां ब्रह्मणस्तृप्तिकारणम् ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य तु धारणम् ॥

पार्वत्याश्च महालक्ष्म्या भारत्यास्तृप्तिकारणम् ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य तु धारणम् ॥

विना मुक्तिर्मनुष्याणां देवानां च न सिध्यति ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य तु धारणम् ॥
विना वेदान्तविज्ञानं जायते नैव कस्यचित् ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य तु धारणम् ॥
सतां मार्गतया प्राज्ञाः प्रवदन्ति महर्षयः ।
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य तु धारणम् ॥
रक्षार्थं मङ्गलार्थं च प्रवदन्ति महर्षयः ।
त्रिपुण्ड्रधारणं मुक्त्वा मुक्तिमिच्छति यः पुमान् ॥
विषपानेन नित्यत्वं कुरुते ह्यात्मनो हि सः ।
वेदोदितेन मार्गेण भस्मनोध्दूलनेन च ॥
त्रिपुण्ड्रधारणेनैव ज्ञानं सम्यग्विजायते ।
ब्राह्मणेनात्मभूतेन शिवेन परमात्मना ॥
आदरेण धृतं भस्म त्रिपुण्ड्रोध्दूलनात्मना ।
आदिब्राह्मणभूतस्य धर्मं तिर्यक्त्रिपुण्ड्रकम् ॥
ब्राह्मणो धारयेन्नित्यं भुक्तिमुक्तिफलप्रदम् ।
वेदसिद्धेषु मार्गेषु त्रिपुण्ड्रं भस्मकुण्ठनम् ॥
रुद्रलिङ्गार्चनं चैव मुखमाहुर्मनीषिणः ।
सर्वागमेषु निष्ठानां त्रिपुण्ड्रं भस्मकुण्ठम् ॥
वरिष्ठं सर्वलिङ्गेभ्य इति सत्यं मयोदितम् ।
भस्म श्रेयोऽर्थिभिः सर्वैर्जन्मना लब्धजातिभिः ॥
धार्यं त्रिपुण्ड्ररूपेण भस्मना चावकुण्ठनम् ।
ब्राह्मणो यः सितेनैव भस्मना चावकुण्ठितः ॥
त्रिपुण्ड्रवलिभिर्दीप्तं तं राजा परिरक्षयेत् ।
भस्मसञ्छन्नसर्वाङ्गं त्रिपुण्ड्राङ्कितमस्तकम् ॥
ये निन्दन्ति नरा राजा हन्यात्तानविचारयन् ।
वैणवं धारयेन्नित्यं सोदकं च कमण्डलुम् ॥
पवित्रमुपवीतं च त्रिपुण्ड्रोद्धूलनं द्विजाः ।
एतादृशानि लिङ्गानि यस्य सन्ति द्विजन्मनः ॥

सत्यमेव मया प्रोक्तं सफलं तस्य जीवितम् ।
उद्धूलनं त्रिपुण्ड्रं च येन नाचरितं मुदा ॥

न तस्य ब्रह्मविज्ञानं जायते जन्मकोटिभिः ।
उद्धूलनं त्रिपुण्ड्रं च येनैवाचरितं मुदा ॥

तस्यैव ब्रह्मविज्ञानं जायते ह्यचिरेण तु ।
तस्मान्मुमुक्षुः सततं शान्तिदान्त्यादिभिः सह ॥

उद्धूलनं त्रिपुण्ड्रं च श्रौतं नित्यं समाचरेत् ।
महानदीषु शुद्धासु तटाके वा यथाविधि ॥

स्नायात् पापविशुद्ध्यर्थं भस्मना वा सितेन तु ।
अग्निरित्यादिभिर्मन्त्रैर्जाबालोक्तैश्च सप्तभिः ॥

त्रिपुण्ड्रधारणं चापि तिर्यक्कुर्याल्ललाटके ।
शान्तिदान्त्यादिभिः [1] पुंसः सम्पन्ना अपि सत्तमाः ॥

त्रिपुण्ड्रधारणाहीना न भविष्यन्ति सर्वथा ।
यथा विशिष्टे मानुष्ये ब्राह्मण्ये पशुविग्रहे ॥

यज्ञदानाद्यनुष्ठानं दुर्लभं सर्वदेहिनाम् ।
तथा श्रौतेषु धर्मेषु त्रिपुण्ड्रं भस्मकुण्ठनम् ॥

रुद्रलिङ्गार्चनं चापि दुर्लभं हि शरीरिणाम् ।
त्रिपुण्ड्रधारणं तिर्यक् भस्मनैवावकुण्ठनम् ॥

सुदुर्लभमिति ज्ञात्वा खलु सर्वेश्वरोऽकरोत् ।
निर्दुःखो निर्मलः साक्षान्नित्यानन्दो जगत्पतिः ॥

किमर्थमकरोद्ब्रूहि शिवः साक्षान्निरामयः ।
अनियोज्यः सदा कर्ता सदा भोक्ता महेश्वरः ॥

किमर्थमकरोद्ब्रूहि साधकस्योदितं मुनेः ।
तस्मात् सुदुर्लभं नृणामिति ज्ञात्वा महेश्वरः ॥

त्रिपुण्ड्रधारणं भस्मकुण्ठनं चाकरोत्सदा ।
अनिष्पन्नस्य कर्तव्यं त्रिपुण्ड्रादेस्तु धारणम् ॥

---

[1] पुमांस इत्यर्थः.

विशेषेण स्वलाभाय नान्यलाभाय सत्तम ।
स्वलाभमन्तरेणापि [1] परापत्त्यर्थमास्तिक ॥

निष्पन्नेनापि कर्तव्यं यथा सर्वेश्वरेण तु ।

कौर्मे—

स्रष्टा सृष्टिच्छलेनाह त्रिपुण्ड्रस्य प्रशस्तताम् ॥

ससर्ज स ललाटं हि तिर्यङ्नोर्ध्वं न वर्तुलम् ।
तिर्यग्रेखाः प्रकाशन्ते ललाटे सर्वदेहिनाम् ॥

तथापि मानवा मूर्खा न कुर्वन्ति त्रिपुण्ड्रकम् ।
न तद्ध्यानं न तद्दानं न तज्ज्ञानं न तत्तपः ॥

विना तिर्यक् त्रिपुण्ड्राङ्कं विप्रेण यदनुष्ठितम् ।
वेदस्याध्ययने शूद्रो नाधिकारी यथा भवेत् ॥

त्रिपुण्ड्रेण विना विप्रो नाधिकारी शिवार्चने ।
न दानेन न यज्ञेन न तपोभिः सुदुष्करैः ॥

न तीर्थयात्रया पुण्यं यत्त्रिपुण्ड्रेण लभ्यते ।
दानं यज्ञश्च धर्मश्च तीर्थयात्रा च नारद ॥

ध्यानं तपस्त्रिपुण्ड्रस्य कलां नार्हति षोडशीम् ।
यथा [2] राजा स्वचिह्नाङ्कं स्वजनं मन्यते सदा ॥

तथा शिवस्त्रिपुण्ड्राङ्कधरं स्वमिव मन्यते ।
द्विजातिर्वान्त्यजातिर्वा सितशुद्धेन भस्मना ॥

धारयेद्यः त्रिपुण्ड्राङ्कं रुद्रस्तेन वशीकृतः ।
त्यक्तवर्णाश्रमाचारो लुप्तसर्वक्रियोऽपि वा ॥

सकृत्तिर्यक्त्रिपुण्ड्राङ्कं धारयेत्सोऽपि पूज्यते ।
नास्मिन् ज्ञानं परीक्षेत न कुलं न व्रतं तथा ॥

त्रिपुण्ड्राङ्कितफालो यः पूज्य एव स नारद ।
श्रीभूतिमात्रमाहात्म्यं वक्तुं ब्रह्मा न शक्नुयात् ॥

---

[1] परे इदमवश्यं कुर्वन्त्विति बुद्ध्येत्यर्थः. [2] नरः–पा.

किं पुनः संस्कृतान्नयुत्थभूतिं वक्तुं समुत्सहेत् ।
शिवमन्त्रात्परो मन्त्रस्तत्त्वं चापि शिवात्परम् ॥

शिवार्चनात्परं पुण्यं न हि तीर्थं च भस्मतः ।
रुद्राक्षैर्यत्परं वीर्यं तद्भस्म परिकीर्तितम् ॥

ध्वंसनं सर्वदुःखानां सर्वपापविशोधनम् ।
अन्त्यजो वाधमो वापि मूर्खो वा पण्डितोऽपि वा ॥

यस्मिन् देशे वसेन्नित्यं भूतिशासनसंयुतः ।
तस्मिन् सदा शिवस्सोमः सर्वभूतगणैर्वृतः ॥

सर्वतीर्थैश्च संयुक्तः सान्निध्यं कुरुते सदा ।
यस्मिन् देशे वसेन्नित्यं भूतिशासनसंयुतः ॥

सोऽपि देशो भवेत्पूतः किं पुनस्तस्य मन्दिरम् ।

एतानि तानि शिवमन्त्रपवित्रितानि
भस्मानि कामदहनाङ्गविभूषितानि ।
त्रैपुण्ड्रकानि रचितानि ललाटपट्टे
[1] लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥

नारदीये—

शिवप्रियाः शिवे भक्ताः शिवपादार्चने रताः ।
त्रिपुण्ड्रधारिणो ये च ते वै भागवतोत्तमाः ॥

गारुडे—

भस्मदिग्धशरीराय यो ददाति धनं मुदा ।
तस्य सर्वाणि पापानि विनश्यन्ति न संशयः ॥

श्रुतयः स्मृतयः सर्वाः पुराणान्यखिलान्यपि ।
वदन्ति भूतिमाहात्म्यं ततस्तां धारयेद्द्विजः ॥

शिवधर्मे—

सितेन भस्मना कुर्यात्त्रिसन्ध्यं यस्त्रिपुण्ड्रकम् ।
स सर्वपापनिर्मुक्तः शिवलोके महीयते ॥

---

[1] कम्पन्ति—पा.

रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम् ।
ध्वंसनं सर्वदुःखानां सर्वपापविशोधनम् ॥

यो हि सर्वाङ्गकं स्नानमापादतलमस्तकम् ।
त्रिसन्ध्यमाचरेन्नित्यमाग्नेयं संयतेन्द्रियः ॥

कुलैकविंशमुत्तार्य स गच्छेत्परमां गतिम् ।
भस्मस्नानं जलस्नानादसङ्ख्येयगुणान्वितम् ॥

तस्माद्वारुणमुत्सृज्य स्नानमाग्नेयमाचरेत् ।
सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ॥

तत्फलं लभते सर्वं भस्मस्नानान्न संशयः ।
महापातकयुक्तो वा युक्तो वा चोपपातकैः ॥

भस्मस्नानेन तत्सर्वं दहत्यग्निरिवेन्धनम् ।
भस्मस्नानात्परं स्नानं पवित्रं नैव विद्यते ॥

उक्त्वैवं मुनिदेवेभ्यः स्नातो देवः शिवः स्वयम् ।
तदाप्रभृति ब्रह्माद्या मुनयश्च शिवार्थिनः ॥

सर्वकर्मसु यत्नेन भस्मस्नानं प्रचक्रिरे ।
तस्मादेतच्छिवस्नानमाग्नेयं यःसमाचरेत् ॥

अनेनैव शरीरेण स रुद्रो नात्र संशयः ।
दुश्शीलः शीलयुक्तो वा यो वा को वा [1]फलार्थिनः ॥

भूतिशासनसंयुक्तः स पूज्यो राजपुत्रवत् ।

वासिष्ठलैङ्गे—

एवं भस्म धृतं येन तस्य पुण्यफलं श्रुणु ॥

महापातकसङ्घाश्च पातकान्यपराण्यपि ।
नश्यन्ति मुनिशार्दूल सत्यं सत्यं न चान्यथा ॥

ब्रह्मचर्याश्रमस्थानां स्वाध्यायप्रदमेव च ।
गृहस्थानां च सर्वेषां सर्वसम्पत्प्रदं मुने ॥

---

[1] फलार्थिकः—पा.

शूद्राणां पुण्यदं नित्यमन्येषां पापनाशनम् ।
येन भस्मोक्तमार्गेण न धृतं मुनिपुङ्गवाः ॥

तस्य विद्धि मुने जन्म निष्फलं [1]सौकरेर्यथा ।
ये भस्मधारिणं दृष्ट्वा परितुष्टा भवन्ति ते ॥

देवासुरमुनीन्द्रैश्च पूज्या नित्यमसंशयः ।
भस्मसञ्छन्नसर्वाङ्गं दृष्ट्वा [2]तिष्ठति यः पुमान् ॥

तं दृष्ट्वा देवराजोऽपि [3]वन्दनं तु करिष्यति ।
अभक्ष्यभक्षणं येषां भस्मधारणपूर्वकम् ॥

तेषां तद्भक्ष्यमेव स्यान्मुने नात्र विचारणा ।
यः स्नाति भस्मना नित्यं जलैः स्नात्वा ततः परम् ॥

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवादरात् ।
सर्वपापविनिर्मुक्तः स याति परमां गतिम् ॥

आग्नेयं भस्मना स्नानं यतिभ्यस्तु विधीयते ।
आर्द्रस्नानाद्वरं [4]भस्मैवार्द्राज्जन्मत्रधो [5]ध्रुवम् ॥

आर्द्रं तु प्रकृतिं विद्यात् प्रकृतिं बन्धनं विदुः ।
प्रकृतेस्तु प्रहाणार्थं भस्मना स्नानमिष्यते ॥

अहो मोहस्य माहात्म्यं मया वक्तुं न शक्यते ।
यन्नरा [6]भस्म सोपायं त्यक्त्वान्यत्र विचेष्टते ॥

बहुनोक्तेन किं भस्मधारणं मोहसादनम् ।
भस्मना नित्ययुक्तस्य ज्ञानमुत्पद्यतेऽचिरात् ॥

पातकी पातकान्मुक्तो भविष्यति न संशयः ।
भस्मना सदृशं ब्रह्म नास्ति लोकत्रयेष्वपि ॥

रक्षार्थं मङ्गलार्थं च पवित्रार्थं मया पुरा ।
भस्म सृष्टं मुने श्रौतं दत्तं देव्याः प्रियेण तु ॥

---

[1] सूकरो यथा—पाठ. [2] कुप्यति—पाठ. [3] दण्डनं—पाठ. [4] भस्मत्वार्द्र-जन्म—पाठ. [5] बन्धवध इति स्यात्. [6] भस्मसूपायं—पाठ.

कालोत्तरे—

तस्मादेतच्छिवज्ञानमाग्नेयं यः समाचरेत् ।
भवपाशैश्च निर्मुक्तः शिवलोके महीयते ॥

ज्वररक्षःपिशाचाश्चाप्यसुरा यातुधानकाः ।
कुमारग्रहभूताश्च कूश्माण्डा डाकिनीगणाः ॥

ब्रह्मराक्षसमुख्याश्च पूतनाकुष्ठगुल्मकाः ।
भगन्दराणि सर्वाणि ह्यशीतिर्वातरोगकाः ॥

चतुष्षष्टिः पित्तरोगाः श्लेष्मसप्ततिपञ्चकाः ।
व्याघ्रसर्पभयं चैवाप्यन्ये दुष्टमृगा अपि ॥

भस्मस्नानेन नश्यन्ति सिंहेनेव मृगादयः ।

वायवीये—

शुद्धशीतजलेनैव भस्मना च त्रिपुण्ड्रकम् ॥
यो धारयेत्परं ब्रह्म स प्राप्नोति न संशयः ।
येषां वपुर्मनुष्याणां त्रिपुण्ड्रेण विना स्थितम् ॥

श्मशानसदृशं तस्मान्न प्रेक्ष्यं पुण्यकृज्जनैः ।
धिग्भस्मरहितं भालं धिग्ग्राममशिवालयम् ॥

धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयाम् ।
त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते ॥

धारयन्ति च ये भक्त्या धारयन्ति शिवं च ते ।
किमत्र बहुनोक्तेन वर्ण्यते च पुनः पुनः ॥

मुक्त्वा त्रिपुण्ड्रं मोक्षस्य साधनं न हि विद्यते ।
यथा कृशानुरहितस्त्वध्वरो न विराजते ॥

अशेषसाधनोपेतं भस्महीनं शिवार्चनम् ।

मानवीयसंहितायाम्—

प्रातःकाले च मध्याह्ने सायाह्ने च त्रिपुण्ड्रकम् ॥
सितेन भस्मना कुर्यात्स रुद्रो नात्र संशयः ।

शिवराघवसंवादे—

यथाविधि ललाटे वै वह्निवीर्यप्रधारणात् ॥
नाशयेल्लिखितं वेधं पटस्थमिव हव्यभुक् ।
कण्ठोपरि कृतं पापं नष्टं [1]स्याच्छङ्खधारणात् ॥

कण्ठे च धारणात्कण्ठभागादिकृतपातकम् ।
बाह्वोर्बाहुकृतं पापं [2]वक्षसो मनसा कृतम् ॥

नाभ्यां [3]पृष्ठकृतं पापं पृष्ठे गुदकृतं हरेत् ।
पार्श्वयोर्धारणाद्राम परस्त्र्यालिङ्गनादिजम् ॥

तद्भस्मधारणं शस्तं सर्वं तद्वत्रिलिङ्गकम् ।
ब्रह्मविष्णुमहेशानां [4]त्रेताग्नीनां च धारणम् ॥

गुणलोकत्रयाणां च धारणं तेन वै कृतम् ।
भस्मासना भस्मशय्या भस्मोध्दूलितविग्रहाः ॥

भस्मस्नानात्सदा पापैर्मुच्यन्ते नात्र संशयः ।

अन्यत्र—

दधीचिमन्दिरं प्राप्य मृत्योरास्यगतोऽपि सः ॥

तस्य भित्तिसमीपे तु भस्मास्त्येवाभिमन्त्रितम् ।
भस्मनि श्वा पपातास्मिन्मार च गतो मृतम् ॥

यमः सम्पूज्यावनतो भवान् पुण्यतमो मुनिः ।
मद्गेहे भवतस्स्थानं न योग्यं गम्यतां बहिः ॥

इत्युक्तवानथ बहिर्गत्वा तस्थौ स कुक्कुरः ।
नारदः शङ्करायैतद्विज्ञाप्यानीय तत्र तम् ॥

भक्त्या प्रणम्य देवेशं देवायाथ व्यजिज्ञपत् ।
अयं माहेश्वरो देव कुरुष्वैनं गणाधिपम् ॥

तथेति च शिवः प्राह गणः श्वानमुखोऽभवत् ।

---

[1] स्याद्भस्मधारणादिति स्यात्. [2] वक्षसि इत्यर्थः. [3] गृह्येन्द्रियकृतं पापमित्यर्थः.

[4] त्र्यग्नीनां चैव—पा.

वायवीये—

भस्मच्छन्नो द्विजो विद्वान्सर्वपातकसंभवैः ॥
दोषैर्विमुच्यते सद्यो मुच्यते नात्र संशयः ।
तस्मात्सर्वेषु लोकेषु वीर्यवान् भस्मसंयुतः ॥
रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम् ।
भस्मनिष्ठस्य दह्यन्ते दोषास्तस्याग्निसङ्गमात् ॥
भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ।
भस्मना दिग्धसर्वाङ्गो भस्मदीप्तत्रिपुण्ड्रकः ॥
भस्मशायी च पुरुषो भस्मनिष्ठ इति स्मृतः ।
भूतप्रेतपिशाचाश्च रोगाश्चातीव दुस्सहाः ॥
भस्मनिष्ठस्य सान्निध्याद्विद्रवन्ति न संशयः ।
भासनाद्भसितं प्रोक्तं भस्म कल्मषभक्षणात् ॥
भूतिर्भूतिकरी पुंसां रक्षा रक्षाकरं परम् ।
किमन्यदिति वक्तव्यं भस्ममाहात्म्यकारणम् ॥
अतीव भस्मना स्नानात्स्वयं देवो महेश्वरः ।
परमास्त्रं च शैवानां भस्म तत्पारमेश्वरम् ॥
धौम्याग्रजस्य तपसि व्यापादो यन्निवारितः ।

मानवे—

त्रिपुण्ड्रधारिणं दृष्ट्वा भूतप्रेतपुरस्सराः ॥
भीताः प्रकम्पिताः शीघ्रं गच्छन्त्येव न संशयः ।

लैङ्गे—

स्मरणादेव रुद्रस्य यथा पापं प्रणश्यति ॥
तथास्य धारणादेव सर्वपापं प्रणश्यति ।
यद्यत्कार्यसहस्राणि कृत्वा यः स्नाति भस्मना ॥
तत्सर्वं दहते भस्म यथाग्निस्तेजसा वनम् ।
कृत्वापि चातुलं पापं मृत्युकालेऽपि यो द्विजः ॥

भस्मस्नायी भवेत्किञ्चित् क्षिप्रं पापैः प्रमुच्यते ।
भस्मस्नानविशुद्धात्मा जितक्रोधो जितेन्द्रियः ॥
मत्समीपं समागत्य न भूयो विनिवर्तते ।

शिवरहस्ये—

समस्ततीर्थौघमयी च काशी
विश्वेश्वरः सर्वसुरोत्तमः स्यात् ।
समस्ततत्त्वैकरसा विभूति-
स्तथैव पुण्ड्रोऽयमयं त्रिपुण्ड्रः ॥

कश्चित् कण्ठगतप्राणः कालप्राप्तो मृतोपमः ।
शेते श्मशाने विवशो दस्युशस्त्रनिषूदितः ॥
अथ सेनापुलिन्दानां श्वानुगः कश्चिदेव हि ।
धावन्वेगात्तदन्तस्थभस्मपुञ्ज इतस्ततः ॥
तच्छयानललाटाग्रन्यस्ताङ्घ्रिश्च ततो ययौ ।
एतस्मिन्नन्तरे नेतुं कालमृत्युयमानुगाः ॥
आगत्य मुच्यमानासुं प्रत्युपसर्पन्नसुं यदा ।
तदानीमेव गणपा नानाप्रहरणोद्यताः ॥
विमानेऽप्सरसां बृन्दैस्तत्र तं पर्यवारयन् ।
ततस्ते धर्मराट्प्रेष्या दृष्ट्वा भस्माङ्ककारणम् ॥
शम्भोः श्मशानं तत्स्मृत्वा हित्वा त्रस्ताश्च लिङ्गिनम् ।
प्रदुद्रुवुर्दिशस्ते तं निन्युः शिवपुरं गणाः ॥

मात्स्ये—

किं यज्ञैः किमनेकतीर्थकलहैः किं वेदपाठश्रमैः ।
किं घोरैर्विविधैस्तपोभिरमलैः किं मन्त्रतन्त्रैर्जपैः ॥
किं ध्यानैः किमनेकदाननिकरैः किं साङ्ख्ययोगश्रमैः ।
मोक्षार्थी सितभस्मना च निपुणः कुर्यात्त्रिपुण्ड्रं बुधः ॥

बोधायनसूत्रे—

"भूत्यै न प्रमदितव्यमि" ति विज्ञायते। तथाप्युदाहरन्ति ।

मध्यमानामिकाङ्गुष्ठैस्त्रिपुण्ड्रं भस्मना कृतम् ।
तत्त्रिपुण्ड्रं [1]भवेच्छ्वेतं महापातकनाशनम् ॥ इति

अथ त्रियम्बकमिति सर्वाङ्गं संमृजेत् । पूतो भवति । दश पूर्वान् दशापरानात्मानं चैकविंशतिं पङ्क्तिं च पुनाति । ब्रह्मणः सायुज्यं सलोकतामाप्नोतीत्याह भगवान् बोधायनः ।

बोधायनस्मृतौ—

सद्येन गोशकृद्ग्राह्यं वामेन त्वभिमन्त्रयेत् ।
अघोरेण दहेत्पिण्डं ग्राह्यं तत्पुरुषेण तु ॥

स्नानमीशानमंत्रेण कुर्याच्चूडादिपादतः ।
आचम्य चतुरासीनः शिवो भूत्वा शिवं जपेत् ॥

भरद्वाजः—

प्राङ्मुखश्चरणौ हस्तौ प्रक्षाल्याचम्य पूर्ववत् ।
प्राणानायम्य सङ्कल्प्य भस्मस्नानं समाचरेत् ॥

आदाय भसितं श्वेतमग्निहोत्रसमुद्भवम् ।
ईशानेन तु मन्त्रेण स्वमूर्धनि विनिक्षिपेत् ॥

तत आदाय तद्भस्म मुखे तत्पुरुषेण तु ।
अघोराख्येन हृदये गुह्ये वामाह्वयेन च ॥

सद्योजाताभिधानेन भस्म पादद्वये क्षिपेत् ।
सर्वाङ्गं प्रणवेनैव मन्त्रेणोद्धूलयेत्ततः ।

एतदाग्नेयकं स्नानमुदितं परमर्षिभिः ।
सर्वकर्मसमृध्यर्थं कुर्यादादाविदं बुधः ॥

ततः प्रक्षाल्य हस्तादीनुपस्पृश्य यथाविधि ।
तिर्यक्त्रिपुण्ड्रविधिना ललाटे हृदये गले ॥

धृत्वाग्निहोत्रजेनैव भस्मना तु प्रसन्नधीः ।
पञ्चभिर्ब्रह्मभिर्वापि कृतेन भसितेन च ॥

---

[1] भवेदेत्–पा.

धृतमेतत्त्रिपुण्ड्रं स्यात्सर्वकर्मसु पावनम् ।
त्रिपुण्ड्रं धारयेन्नित्यं सर्वपापविशुद्धये ॥

शूद्रहस्तस्थितं भस्म नहि धार्यं द्विजादिभिः ।
शूद्रैरन्त्यजहस्तस्थं न धार्यं भस्म जातुचित् ॥

अतोऽग्निहोत्रजेनैव भस्मना तु त्रिपुण्ड्रकम् ।
नित्यं द्विजोऽप्रमादेन कुर्यात्कर्मविवृद्धये ॥

अन्यथा सर्वकर्माणि न फलन्ति कदाचन ।

स्मृतिरत्नावल्याम्—

मध्यमानामिकाङ्गुष्ठैर्ललाटे यत्त्रिपुण्ड्रकम् ।
तत्त्रिपुण्ड्रं भवेच्छस्तं महापातकनाशनम् ॥

धर्मसारसुधानिधौ—

त्रिपुण्ड्रकं सदा कुर्यान्मन्त्रपूतेन भस्मना ।
वेदोक्तेन विधानेन शिवसायुज्यमाप्नुयात् ॥

स्मृतिभास्करे—

वनस्पतिगते सोमे भस्मोद्धूलितविग्रहः ।
अर्चितं शङ्करं दृष्ट्वा सर्वपापैः प्रमुच्यते ॥

भासनाद्भासितं प्रोक्तं भस्म कल्मषभक्षणात् ।
भूतिर्भूतिकरी पुंसां रक्षा रक्षाकरी [1]परम् ॥

श्रुतिसारसमुच्चये—

अशुचिर्वाप्यनाचारो मनसा पापमा[2]चरेत् ।
शुचिरेव भवेन्नित्यं त्रिपुण्ड्रस्य च धारणात् ॥

श्रीमहाभारते—

आयुष्कामो यथा राजन् भूतिकामोऽथवा नरः ।
नित्यं वै धारयेद्भस्म मोक्षकामी च वै द्विजः ॥

---

[1] वरम्–पा. [2] चरन्.

नारदीयस्मृतौ—

त्रिपुण्ड्रं परमं पुण्यं ब्रह्मविष्णुशिवात्मकम् ।
ये घोरा राक्षसाः प्रेता ये चान्ये क्षुद्रजन्तवः ॥
त्रिपुण्ड्रधारिणं दृष्ट्वा पलायन्ते न संशयः ।
मद्यं पीत्वा गुरुदारांश्च गत्वा
स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ।
भस्मच्छन्नो भस्मशय्याशयानो
रुद्राध्यायी मुच्यते पातकेभ्यः ॥
सत्यं शौचं जपो होमस्तीर्थं देवादिपूजनम् ।
तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत् ॥

लोकाक्षिस्मृतौ—

मध्यमानामिकाङ्गुष्ठैर्ललाटे भस्मना कृतः ।
स त्रिपुण्ड्रो भवेच्छस्तो महापातकनाशनः ॥
त्रिपुण्ड्रं धारयेद्यस्तु शिवप्रणतमानसः ।
भूर्भुवः स्वस्त्रयो लोका धृतास्तेन महात्मना ॥
त्रिपुण्ड्रधृग्विप्रवरो यो रुद्राक्षधरः शुचिः ।
स हन्ति रोगदुरितव्याधिदुर्भिक्षतस्करान् ॥
प्रयाति परमं ब्रह्म यतो नावर्तते पुनः ।
स पङ्क्तिपावनः शुद्धः पूज्यो विप्रैः सुरैरपि ॥

कात्यायनः—

श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने ।
धृतत्रिपुण्ड्रः पूतात्मा मृत्युं जयति मानवः ॥
त्रिपुण्ड्रं यद्यधृत्वा तु कुर्याद्यत्कर्म [1]तद्वृथा ।
भस्मनोद्धूलनं तिर्यक्त्रिपुण्ड्रं नित्यसाधनम् ॥
प्रत्याख्यानं प्रमादस्य श्रूयते तैत्तिरीयके ।
भूत्यै न प्रमदितव्यम् ।

---

[1] तद्वृथाः–पा.

स्वसंहितायां वेदार्थ[1]वित्तमो रोमहर्षणः ।
भस्मनिष्ठाग्रणीर्भूतिशब्दार्थं स्पष्टमुक्तवान् ॥

सत्याद्धर्माच्च कुशलाद्भस्मनोद्धूलनादपि ।
त्रिपुण्ड्रधारणाच्चैव स्वाध्यायाध्ययनादपि ॥

दैवाच्च पित्र्यात्कार्या[2]न्मातृपित्रादिपूजनात् ।
तथान्येभ्यश्च सर्वेभ्यः कर्मभ्यश्च तथैव च ॥

स्मार्तेभ्यश्च मुमुक्षुश्चेत्सदा न प्रच्युतो भवेत् ।
उक्तसाधनसम्पन्नः स्नानाद्भस्माद्धि गच्छति ॥

शिवस्वरूपं परमं भासनाद्भस्म संस्मृतम् ।
तदेव स्वीयमायोत्थप्रपञ्चे जलसूर्यवत् ॥

अनुप्रविष्टं तद्रूपं भस्म शैवमुदाहृतम् ।
तेन लेशेन देवेशः प्रतिबिम्बेन भस्मना ॥

स्वतन्त्रो बिम्बभूतस्तु सदैवोद्धूलितः शिवः ।
स देवः पूजनीयस्तु ब्रह्मविष्णुसुरोत्तमैः ॥

भस्मधारणकाम्यत्वसाधकं फलकीर्तनम् ।
श्रूयतेऽथर्वशिरसि भस्मद्वितयभासके ॥

कालाग्निरुद्रोपनिषद्यप्येतच्छ्रूयते स्फुटम् ।
अग्निरित्यादिना भस्म निमृज्याङ्गानि संस्पृशेत् ॥

व्रतमेतत्पाशुपतं पशुपाशविमोक्षणम् ।
जाबालोपनिषत्साक्षादिदमुक्तवती तदा ॥

अग्निरित्यादिना भस्म निमृज्याङ्गानि संस्पृशेत् ।
तथोपरि च वै तिर्यक्त्रिपुण्ड्रं धारयेत् बुधः ।

कैवल्योपनिषद्यत्याश्रमशब्देन सादरम् ।
ज्ञानस्य साधनत्वेन विहितं भस्मधारणम् ॥

विविक्तदेशे च सुखासनस्थः
शुचिः समग्रीवशिरश्शरीरः ।

---

[1] विक्रमो—पा. [2] मातापित्रोश्च पूजनात्—पा.

अत्याश्रमस्थः सकलेन्द्रियाणि
निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥

श्वेताश्वतरशाखायामप्यत्याश्रमशब्दतः ।
ज्ञानस्य साधनत्वेन विहितं भस्मधारणम् ॥

तपः प्रभावाद्देवप्रसादाच्च ब्रह्म ह
श्वेताश्वतरोऽथ विद्वान् । अत्याश्रमिभ्यः परमं पवित्रं
प्रोवाच सम्यगृषिसङ्घजुष्टम् ।
स्वल्पभस्म महाभस्मनिष्ठेन परमेष्ठिना ।
अत्याश्रम[1]पदस्यार्थः संहितायामुदीरितः ॥

अग्निरित्यादिभिर्मन्त्रैर्भस्मनोद्धूलनं तथा ।
त्रिपुण्ड्रधारणं चैव वदन्त्यत्याश्रमं बुधाः ॥

भस्मना प्रतिबिम्बेन चैशेनोद्धूलितं सदा ।
महाभस्माभिधं साम्बं बिम्बितं तं शिवं भजे ॥

षण्मुनीन्द्रकृतात्युग्रशापपापामयौषधे ।
अस्मिन् ग्रन्थे तृतीयांशे तृतीयोऽध्याय ईरितः ॥

अविमुक्ताधीश्वराय शिवाय परमात्मने ।
मोचकायोन्मयाध्यायमर्पयाम्यन्तरात्मने ॥

यज्ज्ञानसाधनत्वेनं व्रतं पाशुपताभिधम् ।
अथर्वशिरसि प्रोक्तं तं भजे भूतिभूषणम् ॥

श्रौतपाशुपता[2]ख्याग्रथपूर्णानुष्ठानसिद्धये ।
विभूतिधारणं विद्धि प्रवक्ष्यामि समासतः ॥

भस्माग्निहोत्रजं वाथ विरजाग्निसमुद्भवम् ।
औपासनाग्निजं वाथ समिदग्निसमुद्भवम् ॥

आदरेण समादाय शुद्धे पात्रे निधाय तत् ।
प्रक्षाल्य पादौ हस्तौ च द्विराचम्य समाहितः ॥

गृहीत्वा भस्म तत्पञ्चब्रह्ममन्त्रैः शनैः करे ।
प्राणायामत्रयं कृत्वाथाग्निरित्यभिमन्त्रितः ॥

---

[1] वरस्यार्थः—पा. [2] ख्यग्रथ—पा.

तैरेव सप्तभिमन्त्रैस्त्रिवारमभिमन्त्र्य तत् ।
ओमापो ज्योतिरित्युक्त्वा ध्यात्वा विष्णुं जलाधिपम् ॥
संयोज्य भस्मना तोयमग्निरित्यादिभिः पुनः ।
निमृज्य साम्बं ध्यात्वा समुद्धूल्यापादमस्तकम् ॥
तेन भावनया ब्रह्मभूतेन सितभस्मना ।
ललाटवक्षः स्कन्धेषु स्वा[1]श्रमोदितमन्त्रतः ॥
मध्यमानामिकाङ्गुष्ठैरनुलोमविलोमतः ।
त्रिपुण्ड्रं धारयेन्नित्यं त्रिकालेष्वपि भक्तितः ॥
होमदण्डजटाहीनमेतत्पाशुपतं व्रतम् ।
उद्धूलनस्य स्नानत्वाद्धस्तौ प्रक्षाल्य तत्परम् ॥
द्विराचामेत्त्रिपुण्ड्रस्य धारणान्ते तथैव च ।
भस्मनोद्धूलनस्यान्ते त्रिपुड्रान्ते तथैव च ॥
शिवराघवसंवादे प्रोक्तमाचमनं स्फुटम् ।
उद्धूलयेत्समस्ताङ्गं प्रणवेन विचक्षणः ॥
प्रक्षाल्य हस्तावाचम्य दर्भपाणिः समाहितः ।
नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः ॥
प्रक्षाल्य च ततो हस्तौ क्रमानुष्ठानमाचरेत् ।
अत्याश्रमं पाशुपतं शाम्भवं चेति यद्व्रतम् ॥
कैवल्याथर्वकालाग्निरुद्रोपनिषदीरितम् ।
यद्व्रतं विरजाहोमजटादण्डादिसंयुतम् ॥
[2]तद्धीनं चेति वेदार्थविद्भिर्द्विविधमुच्यते ।
अश्रौताङ्कनपुण्ड्रान्तराद्याचारपरिग्रहे ॥
त्यागे च श्रौतभस्मादेः कारणं किं वदेति चेत् ।
पापमुत्पत्तिसाङ्कर्यं [3]मुनिशापाच्च विग्रहः ॥
विष्णुरोषोत्थाब्जयोनिशापश्चाप्यत्र कारणम् ।
विद्धद्भृत्कमलादित्ये सर्वमेतत्पराशरे ॥

---

[1] श्रमोचित-पा. [2] तद्व्रतं-पा. [3] शापश्च-पा.

पराशराख्यमुनिना सर्वज्ञेन प्रदर्शितम् ।
महापापवतां नृणां वेदसिद्धे महेश्वरे ।
त्रिपुण्ड्रोद्धूलनादौ च प्रद्वेषश्च प्रजायते ॥
रुद्राधिक्यमविज्ञाय ब्रह्मनारायणौ पुरा ।
अहं ब्रह्म त्वहं चेति विभ्रान्त्या कुरुतां रणम् ॥
क्रोधेन महता युक्तो ब्रह्मा सर्वजगत्पतिः ।
शशाप विष्णुं गर्भस्थो भवेत्यतिविमोहितः ॥
त्वद्भक्ता ब्राह्मणाः साक्षात्त्रिपुण्ड्रे भस्मकुण्ठने ।
भवेयुर्विमुखा नित्यं वेदसिद्धे महेश्वरे ॥
त्रिशूले चतुरश्रे वा वेणुपत्रोपमे तथा ।
पुण्ड्रान्तरे रता नित्यं भवेयुस्तान्त्रिका द्विजाः ॥
आयुधैः शङ्खचक्राद्यैः स्वकीयैरङ्किता द्विजाः ॥
अङ्कितास्तैर्महामोहाद्भवेयुः स्वांसयोर्द्वयोः ।

एवमादायो बहवः शापा सन्ति । अथर्वशिखोपनिषदि षष्ठाध्यायो लिख्यते । तदेतद्रुद्रचरितम् । एष हि देवः प्रदिशो नु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः । स एव जातः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतो मुखः । विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः । तदेतदुपासितव्यम् । वग्वदन्ति तदन्तर्ग्रहणम् । अयं पन्था वितत उत्तरेण येन देवा येन ऋषयो येन पितरः प्राप्नुवन्ति परमप(दं)रं परायणं चेति ।

वालाग्रमात्रं हृदयस्य मध्ये
विश्वं वेदं जातवेदं वरेण्यम् ।
तमात्मानं(स्थं) येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥
यो योनिं योनिमधितिष्ठत्येको
येनेदं पूर्णं [1]पुरुषेण च सर्वम् ।
तमीशानं वरदं देवमीड्यं
[2]निदिध्यायात्तारं शान्तिमत्यन्तमेति ॥

---

[1] यस्मिन्निदं संचविचैति सर्वम्. [2] निचाय्येमां शान्ति—उपनिषत्पाठः.

प्राणेष्वन्तर्मनसो लिङ्गमाहु-
र्यस्मिन् क्रोधो या च तृष्णा [1]क्षुधा च ॥
तृष्णां हित्वा हेतुजालस्य मूलं
बुध्या संश्चितं स्थापयित्वा तु रुद्रे ॥

रुद्र एकत्वमाहु रुद्रो हि शाश्वतोन वै पुराणेनेषमूर्जेन तपसा नियन्ता ! व्रतमेतत् पाशुपतम् । अग्निरिति भस्म (वायुरिति भस्म) जलमिति भस्म, स्थलमिति भस्म, व्योमेति भस्म, सर्वं ह वा इदं भस्म, मन इत्येतानि चक्षूंषि भस्मानि । अग्निरित्यादिना भस्म गृहीत्वा निमृज्याङ्गानि संस्पृशेत् । तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय । योऽथर्वशिरसं ब्राह्मणो-(नित्यम)धीते सोऽग्निपूतो भवति । स वायुपूतो भवति । (स) आदित्यपूतो भवति । स सोमपूतो भवति । स सर्वपूतो भवति । स सत्यपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । स सर्वेषु वेदेष्वधीतो भवति । स सर्वैर्ध्यातो भवति । स [2]सर्ववेदव्रतचर्यासु चरितो भवति । स सर्वयज्ञ क्रतुभिरिष्टवान् भवति । तेनेतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति । गायत्र्याः शतसहस्रं जप्तं भवति । प्रणवानामयुतं जप्तं भवति । रूपे रूपे दश पुर्वान् पूनाति । दशोत्तरानाचक्षुषः पङ्क्तिं पुनातीत्याह भगवानथर्वशिरोऽथर्वशिरः । सकृज्जप्त्वा शुचिः पूतः कर्मण्यो भवति । द्वितीयं जप्त्वा गाणपत्यमाप्नोति । तृतीयं जप्त्वा देवमेवानुप्रविशत्यों सत्यम् । यो रुद्रो अग्नौ यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश । य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्तु । [3]अद्य मूर्धानमस्य [4]संशीर्योऽथर्वा हृदयं च यन्मस्तिष्कादूर्ध्वं प्रेरयन् [5]पवमानोऽथर्वशीर्ष्णः तदथर्वशिरो वेदकोशः [6]समत्थितः । तत्प्राणोऽभिरक्षतु । श्रियमन्नमथो मनः श्रियमन्नमथो मनः । विद्यामन्नमथो विद्यामन्नमथो मनः मोक्षमन्नमथो मनो मोक्षमन्नमथो मनः । लिङ्गम-

---

[1] क्षमा–पा. [2] सर्ववेदेषु व्रतचर्यासुचरितो–पा. [3] आद्य–पा.
[4] संविद्याथर्वा–पा. [5] पवमानेतिशीर्षं तद्वा–पा. [6] समुत्पन्नं.

न्नमथो मनो लिङ्गमन्नमथो मनः। इत्यों सत्यमित्युपनिषत्। अथर्वशिरोपनिषत् समाप्ता।

अथ कालग्निरुद्रोपनिषदः संवर्तकोऽग्निर्ऋषिः। अनुष्टुप् छन्दः। श्री विश्वरूपी रुद्रो देवता। रुद्रप्रीत्यर्थे जपे विनियोगः। अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ। अधीहि भगवन् त्रिपुण्ड्राविधिं सतत्त्वं किं द्रव्यं किं स्थानं कियत्प्रमाणं का रेखाः का शक्तिः किं दैवं कः कर्ता किं फलमिति। तं होवाच भगवान् कालाग्निरुद्रः यद्द्रव्यं तदाग्नेयं भस्म सद्योजातादिपञ्चब्रह्ममन्त्रैः परिगृह्याग्निरिति भस्मेत्यनेन वाभिमन्त्र्य मानस्तोकेति समुद्धृत्य जलेन संसृज्य त्रियायुषमिति शिरो ललाटवक्षः स्कन्धेषु त्रियायुषैस्त्र्यम्बकैस्त्रिशक्तिभिस्तिर्यक्तिस्रो रेखाः प्रकुर्वीत। व्रतमेतच्छाम्भवं सर्वेषु वेदेषु वेदवादिभिरुक्तं भवति। तस्मात्तत्समाचरेन्मुमुक्षुरपुनर्भवाय। अथ सनत्कुमारः प्रमाणमस्य त्रिपुण्ड्रधारणस्य त्रिधा रेखा भवति आललाटादाचक्षुषश्चाभ्रुवोरामूर्ध्नोऽनुचक्षुर्मध्यतश्च यास्य प्रथमा रेखा सा गार्हपत्यश्चाकारो रजो भूर्लोकश्चात्मा क्रियाशक्तिर्ऋग्वेदः प्रातः सवनं महेश्वरो देवतेति। यास्य द्वितीया रेखा सा दक्षिणाग्निरुकारः सत्त्वमन्तरिक्षमन्तरात्मा चेच्छाशक्तिर्यजुर्वेदो माध्यन्दिनं सवनं सदाशिवो देवतेति। यास्य तृतीया रेखा साहवनीयो मकारस्तमो द्यौर्लोकः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयं सवनं शिवो देवतेति। एवं त्रिपुण्ड्रं भस्मना करोति यो विद्वान् ब्रह्मचारी गृही वानप्रस्थो यतिर्वा समस्तमहापातकोपपातकेभ्यः पूतो भवति। स सर्वेषु तीर्थेषु स्नातो भवति। स सर्वान् देवान् ध्यातो भवति। स सततं रुद्रमन्त्रजापी भवति। सकलभोगं भुज्य देहं त्यक्त्वा शिवसायुज्यमाप्नोति। नच पुनरावर्तत इत्याह भगवान् कालाग्निरुद्रः। कालाग्निरुद्रोपनिषदं यः श्रुत्वाधीते सोऽप्येवमेव भवतीत्यों सत्यम्।

सूतसंहितायां ज्ञानयोगखण्डे—

उपनीतो द्विजो विद्वानिति ब्रह्मचारिणमधिकृत्य—

समिदग्निसमुत्थेन विरजानलजेन वा।
आग्निहोत्रसमुत्थेन भस्मना सजलेन तु॥

अग्निरित्यादिभिर्मन्त्रैः षड्भिर्वा सप्तभिः क्रमात् ।
विमृज्याङ्गानि सर्वाणि समुद्धूल्य ततः परम् ॥
तिर्यक्त्रिपुण्ड्रमुरसि ललाटे च करादिभिः ।
ग्रीवायां च शुचिर्भूत्वा शिवं ध्यात्वा शिवामपि ॥
मेधावीत्यादिभिर्मन्त्रैर्धारयेद्ब्राह्मणः सदा । इति ।

अस्मिन्नेव खण्डे अथातः संप्रवक्ष्यामि गार्हस्थ्यमिति गृहस्थाश्रमं प्रस्तुत्य—

उद्धूलनं सकृत्कुर्यात्सर्ववेदोक्तवर्त्मना ।
त्रियम्बकेन मन्त्रेण सतारेण शिवेन च ॥
त्रिपुण्ड्रं धारयेन्नित्यं गृहस्थाश्रममाश्रितः ।
तेनाधीतं श्रुतं सर्वं तेन सर्वमनुष्ठितम् ॥
येन विप्रेण शिरसि त्रिपुण्ड्रं भस्मना धृतम् ।
त्रिपुण्ड्रं धारयेद्भक्त्या मनसापि न लङ्घयेत् ॥
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् । इति ।

अथातः संप्रवक्ष्यामि वानप्रस्थाश्रममिति प्रस्तुत्य—

त्रिपुण्ड्रोद्धूलनं कुर्याद्गृहस्थःस्वोक्तमार्गतः । इति ।

अथातः संप्रवक्ष्यामि सन्न्यासाश्रमामिति प्रस्तुत्य अनन्तरं—

चतुर्विधास्तु विज्ञेया भिक्षवो वृत्तिभेदतः ।
कुटीचको मुनिश्रेष्ठ तथैव च बहूदकः ॥
हंसः परमहंसश्च तेषां वृत्तिं वदामि ते ।

इत्युक्त्वा, कुटीचकश्च सन्न्यस्येत्यादिना गायत्रीं प्रजपेत्सदेत्यन्तेन कांश्चिद्धर्मानुक्त्वा—

त्रिपुण्ड्रोद्धूलनं कुर्याद्भस्मनैव त्रिसन्धिषु ।
शिवलिङ्गार्चनं कुर्याच्छ्रद्धयैव दिने दिने ॥

इत्युक्त्वा, अनन्तरं बहूदकश्चेत्यादिना मृत्खनित्रं कृपाणिकामित्यन्तेन बहूदकस्य कांश्चिद्धर्मानुक्त्वा, सर्वाङ्गोद्धूलनं तिर्यक्त्रिपुण्ड्रं

त्रैव धारयेदित्युक्तम् । अनन्तरं हंसः कमण्डलुमित्यादिना 'एकं तु वैणवं दण्डं धारयेन्नित्यमादरात्' इत्यन्तेन हंसस्यापि कांश्चिद्धर्मा-नुक्त्वा,

त्रिपुण्ड्रोद्धूलनं कुर्याच्छिवालिङ्गं समर्चयेत् ।
अष्टग्रासं सकृन्नित्यमश्नीयात्सशिखं वपेत् । इत्युक्तम् ॥

अनन्तरं परमहंसस्त्रिदण्डं चेत्यादिना त्याज्यधर्मानुक्त्वा-नन्तरं कौपीनाच्छादनं कन्थामित्यादिना वैणवं दण्डमव्रणमित्यन्तेन ग्राह्यधर्मांश्चोक्त्वा

'अग्निरित्यादिभिर्मन्त्रैः कुर्यादुद्धूलनं मुदा ।'
ओं ओं ओमिति च प्रोच्य सहंसेन त्रिपुण्ड्रकम् ॥ इत्यादिक-मुक्तम् ॥

यज्ञवैभवखण्डे—

सर्वेषामेव भिक्षूणां शान्तिर्दान्तिस्तितिक्षुता ।
स्नानं शौचमहिंसा च मिथ्याभाषणवर्जनम् ॥
अग्निरित्यादिभिर्मन्त्रैर्भस्मनोद्धूलनं सदा ।
त्रिपुण्ड्रधारणं साक्षाद्ब्रह्मविष्णुशिवात्मकम् ॥
लिङ्गे शिवार्चनं नित्यं धर्मः प्रोक्तः सनातनैः । इति ।

अनेन वचनेन कुटीचकबहूदकहंसपरमहंसानामुद्धूलनस्य त्रिपुण्ड्रधारणस्य च सदा कर्तव्यत्वं त्रिपुण्ड्रस्य त्रिमूर्त्यात्मकत्वं चोक्तम् । तत्रैव—

लिङ्गे शिवार्चनं चैव रुद्राक्षाणां च धारणम् ।
अग्निरित्यादिभिर्मन्त्रैर्जाबालोक्तैश्च सप्तभिः ॥
सर्वाङ्गोद्धूलनं चैव त्रिपुण्ड्रस्य च धारणम् । इति ।

तत्र भस्मधारणस्य मन्त्रसाधनकत्वाल्लिङ्गादाश्रमधर्मत्वं प्रतीयते । तत्रैव—

शिवध्यानं शिवज्ञानं शिवशब्दजपस्तथा ।
अग्निरित्यादिभिर्मन्त्रैर्भस्मना चावकुण्ठनम् ॥

रुद्राक्षधारणं भक्त्या त्रिपुण्ड्रस्य च धारणम्।
सन्न्यासश्चैव पापानां प्रायश्चित्तं महत्तरम्॥ इति।

अत्रापि पूर्वोक्तलिङ्गात् सन्न्यासविधानाच्चाश्रमधर्मत्वम्॥
सूतसंहितायाम्—

त्रियम्बकेन मन्त्रेण प्रणवेन शिवेन च।
गृहस्थश्च वनस्थश्च धारयेच्च त्रिपुण्ड्रकम्॥
मेधावीत्यादिना वापि ब्रह्मचारी दिने दिने।
भस्मना सजलेनैव धारयेच्च त्रिपुण्ड्रकम्॥ इति।

अस्मिन्नेव वचने वीप्सापि दर्शिता।

अथ नित्यत्वं सूतसंहितायां—

त्रिपुण्ड्रं धारयेन्नित्यं गृहस्थाश्रममाश्रितः।
धारयेद्भिक्षुको नित्यमिति जाबालिकी श्रुतिः॥

तत्रैव—

त्रिपुण्ड्रमुद्धूलनमास्तिकोत्तमः
समाचरेन्नित्यमतन्द्रितस्तथा।
विशेषतः शङ्करवेदने रतो
भवेदशेषः कथितो मयानघाः॥

वासिष्ठलैङ्गे—

त्रिपुण्ड्रं धारयेन्नित्यं गृहस्थश्च वनाश्रमी।
त्रिपुण्ड्रं धारयेन्नित्यं सन्न्यासाश्रममाश्रितः॥
उद्धूलनं त्रिपुण्ड्रं च भस्मना नित्यमाचरेत्।

मानवे—

भूत्यैवोद्धूलनं नित्यं त्रिपुण्ड्रस्य च धारणम्।
[1]विशिष्टं सर्वधर्मेभ्यस्ततस्तं नित्यमाचरेत्॥

इदं [2]विशिष्टत्वं भस्मनः सदा धार्यत्वम्।

---

[1] वरिष्ठं—पा. [2] वरिष्ठत्वं—पा.

सूतसंहितायाम्—

उद्धूलनं त्रिपुण्ड्रं च यैः सदा चरितं मुदा।
त एव शिष्टा विद्वांसो नेतरे मुनिपुङ्गवाः॥

अथालङ्घनीयत्वम्—

त्रिपुण्ड्रं धारयेद्भक्त्या मनसापि न लङ्घयेत्।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत्।

शङ्करसंहितायाम्—

धार्यं भस्म सदा सद्भिस्त्रिपुण्ड्रोद्धूलनात्मना।
उद्धूलनं त्रिपुण्ड्रं च मनसापि न लङ्घयेत्।

कौर्मे—

त्रिपुण्ड्रं ब्राह्मणो विद्वान्मनसापि न लङ्घयेत्।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत्॥

अथ अत्याज्यत्वम्—भूत्यै न प्रमदितव्यमिति तैत्तिरीयके।

सूतसंहितायाम्—

सत्याद्धर्माच्च कुशलाद्भस्मनोद्धूलनादपि।
त्रिपुण्ड्रधारणाच्चैव स्वाध्यायाध्ययनादपि॥
दैवात्पित्र्याच्च कार्याद्वा मातापित्रादिपूजनात्।
तथान्येभ्यश्च सर्वेभ्यः श्रौतेभ्यश्च तथैव च॥
स्मार्तेभ्यश्च मुमुक्षुश्चेत्सदा न प्रच्युतो भवेत्। इति।

तत्रैव—

भस्मना वेदसिद्धेन त्रिपुण्ड्रं भस्मकुण्ठनम्।
रुद्रलिङ्गार्चनं चापि मोहतो वापि न त्यजेत्॥

पराशरे—

भस्मना वेदसिद्धेन त्रिपुण्ड्रं देहकुण्ठनम्।
रुद्रलिङ्गार्चनं चापि मोहतो वापि न त्यजेत्॥

अथ त्यागे दोषः—बृहज्जाबालोपनिषदि—

ये भस्मधारणं मुक्त्वा कर्म कुर्वन्ति मानवाः।
तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिः॥

महापातकयुक्तानां सर्वजन्मसु सर्वतः।
त्रिपुण्ड्रोद्धूलने द्वेषो जायते सुदृढं बुधाः॥

येषां द्वेषो भवेद्ब्रह्मन् ललाटे भस्मदर्शनात्।
तेषामुत्पत्तिसाङ्कर्यमनुमेयं विपश्चिता॥

ये भस्मधारिणं दृष्ट्वा वाचा निन्दन्ति मानवाः।
तेषां शूद्रेण संभूतिरनुमेया विपश्चिता॥

येषां नास्ति मुने श्रद्धा श्रौते भस्मनि सर्वदा।
गर्भाधानादिसंस्कारस्तेषां नास्तीति निश्चयः॥

त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते।
धारयन्ति तु ये भक्त्या धारयन्ति तमेव ते॥

सूतसंहितायां भुजबलनामकराजानं प्रति सुशीलनामकद्विज-वचनम्—

यस्य भस्मनि भूपाल बुद्धिस्तद्धारणेऽपि वा।
न जायतेऽस्य पापस्य लक्ष्मीर्नश्यति तत्क्षणात्॥

दारिद्र्यं च भवेत्तस्य जायन्ते व्याधयस्तथा।
न्यूनान्यङ्गानि पापस्य भवेयुर्नात्र संशयः॥

अथ काम्यत्वप्रापकवचनानि लिख्यन्ते—तत्र भोगमोक्षप्रदत्वं कालाग्निरुद्रोपनिषदि—[1]एति विद्वानिति प्रस्तुत्य सकलं भोगं भुज्य देहान्ते शिवसायुज्यमाप्नोति नच पुनरावर्तते॥

सूतसंहितायाम्—

ललाटे चैव दोर्द्वन्द्वे तथैवोरसि बुद्धिमान्।
त्रिपुण्ड्रं धारयेन्नित्यं भुक्तिमुक्तिफलप्रदम्॥

य इदं धारयेद्भस्म मन्त्रितं विधिवन्नरः।
काङ्क्षितान्यस्य सिद्ध्यन्ति नश्यन्ति दुरितान्यपि॥

[1] यो विद्वा–पा.

वायवीयसंहितायाम्—

अग्निरित्यादिभिर्मन्त्रैः पञ्चभिर्धार्यं द्विजैः क्रमात् ।
विमृज्याङ्गानि मूर्धादि चरणान्तं च संस्पृशेत् ॥

ततस्तेन क्रमेणैव समुद्धूल्य च भस्मना ।
सर्वाङ्गोध्दूलनं कुर्यात्प्रणवेन शिवेन च ॥

ततस्त्रिपुण्ड्रं रचयेत्त्रियायुषसमाह्वया ।
शिवभावं समागम्य शिवयोगं समाचरेत् ॥

कुर्यात्त्रिसन्ध्यमप्येवमेतत्पाशुपतव्रतम् ।
भुक्तिमुक्तिप्रदं चैव पशुत्वं च निवर्तयेत् ॥

तत्पशुत्वं परित्यज्य कृत्वा पाशुपतं व्रतम् ।
पूजनीयो महादेवो लिङ्गमूर्तिः सदाशिवः ॥

श्रीमहाभारते—

आयुष्कामोऽथवा राजन् भूतिकामोऽथवा नरः ।
नित्यं वै धारयेद्भस्म मोक्षकामी च वै द्विजः ॥

अथ मोक्षार्थत्वम् —कालाग्निरुद्रोपनिषदि—तिर्यक् तिस्रो रेखाः प्रकुर्वीत । व्रतमेतच्छाम्भवं सर्ववेदेषु वेदवादिभिरुक्तं भवति । तस्मात्तत्समाचारेन्मुमुक्षुरपुनर्भवाय । अथर्वशिरस्यपि दृश्यते । अग्निरित्यादिनेति ॥

जाबालोपनिषदि—

चतुर्विधं भस्म पापं निकृन्तति मोक्षं ददातीत्याह भगवान् कालाग्निरुद्रः ॥

सूतसंहितायाम्—

उद्धूलनं त्रिपुण्ड्रं च मायापाशनिवृत्तये ।
आमनन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थिताः ॥

कात्यायनस्मृतौ—

शुद्धशीतजलेनैव भसना च त्रिपुण्ड्रकम् ।
यो धारयेत्परं ब्रह्म स प्राप्नोति न संशयः ॥

पराशरोपपुराणे—

भस्म श्रेयोऽर्थिभिः सर्वैर्जन्मना लब्धजातिभिः ।
तिर्यक्त्रिपुण्ड्ररूपेण भस्मना चावकुण्ठम् ॥
रुद्राक्षधारणं कार्यं सर्वश्रेयोऽर्थिभिर्नरैः ।

कालोत्तरे—

तस्मादेतच्छिवस्नानमाग्नेयं यः समाचरेत् ।
भवपाशैश्च निर्मुक्तः शिवलोके महीयते ॥

अथ ज्ञानाङ्गत्वं मुण्डकोपनिषदि—

क्रियावन्तः श्रोत्रियाः [1]कर्मनिष्ठाः स्वयं जुह्वतः[2]स्वत एव श्रद्धयन्तः। तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैश्च चीर्णम् ।

तत्रैव— ?

वैराग्यातिशयेनैव मोक्षकामेन वै पुनः ।
निरस्य सर्वकर्माणि शान्तो भूत्वा मुमुक्षया ॥
विरजानलजं भस्म गृहीत्वा वाग्निहोत्रजम् ।
अग्निरित्यादिभिर्मन्त्रैः षड्भिराथर्वणैः क्रमात् ॥
विमृज्याङ्गानि मूर्धादिचरणान्तानि सादरम् ।
समुद्धूल्य सदाचार्यं प्रणिपत्यात्मविद्यया ॥
संसारसागरं घोरं लङ्घयाम्यहमात्मनः ।

पराशरोपपुराणे—

वेदवेदान्तनिष्ठानां भस्मनैवावकुण्ठनम् ।
सम्यग्ज्ञानप्रदं शीघ्रं सत्यमुक्तं न संशयः ॥

तत्रैव—

उद्धूलनं त्रिपुण्ड्रं च येनैवाचरितं मुदा ।
तस्यैव ब्रह्मविज्ञानं जायते ह्यचिरेण तु ॥

---

[1] ब्रह्मनिष्ठाः. [2] एकर्षिं श्रद्धयन्तः. पा.

तस्मान्मुमुक्षुः सततं शान्तिदान्त्यादिभिः सह ।
उद्धूलनं त्रिपुण्ड्रं च श्रौतं नित्यं समाचरेत् ॥

सूतसंहितायाम्—

ज्ञानाङ्गेभ्यः समस्तेभ्यः श्वेतभस्मैकमेव च ।
भस्मधारणनिष्ठानां साक्षाद्भस्म शिवाभिधम् ॥
प्रकाशते यथा शान्त्या [1]शान्तं वस्तु परात्परम् । इति ।

शङ्करसंहितायाम्—

उद्धूलनं त्रिपुण्ड्रं च ज्ञानाङ्गत्वेन सादरम् ।
आमनन्ति मुनिश्रेष्ठा श्वेताश्वतरशाखिनः ॥
उद्धूलनं त्रिपुण्ड्रं च सम्यगज्ञाननाशनम् ।
आमनन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थिताः ॥ इति ।
येन पाशुपतं सम्यग्व्रतमाचरितं [2] बुधाः ।
तस्य ज्ञानं विजायेत घनाज्ञाननिवारकम् ॥ इति ।

सौरसंहितायाम्—

अथातः सम्प्रवक्ष्यामि तवाहं करुणाबलात् ।
ज्ञानोपायं समासेन वेदेनैव प्रदर्शितम् ॥
शान्तिर्दान्तिस्तु सन्न्यासः परहंससमाह्वयः ॥
द्वन्द्वादीनां सहिष्णुत्वमैकाग्र्यं भस्मकुण्ठनम् ।
त्रिपुण्ड्रधारणं तिर्यक्छ्रद्धा रुद्रस्य पूजने ॥ इति ।

तत्रैव—

सर्वशाखासु वस्त्वेकं शिवाख्यं सत्यचिद्घनम् ।
तथा तद्विषयज्ञानं तथैव च शिरोव्रतम् ॥
सर्वशाखाश्रुतं तत्त्वविज्ञानं क्रियते तु यः ।
आचरेत्स विशेषेण नित्यं प्रीत्या शिरोव्रतम् ॥
शिरोव्रतविहीनस्तु सर्वधर्मसमन्वितः ।

---

[1] शं नो वस्तु-पा. [2] द्विजाः-पा.

अपि ब्रह्मात्मविद्यायां नाधिकारी न संशयः ।
शिरोव्रतमिदं सर्वपापकान्तारदाहकम् ॥

साधनं [1]शिवविद्यायास्ततस्तत्सम्यगाचरेत् ।
श्रुतिराथर्वणी सूक्ष्मा सुसूक्ष्मार्थप्रकाशिका ॥

यदुवाच व्रतं प्रीत्या तन्नित्यं सम्यगाचरेत् ।
अग्निरित्यादिभिर्मन्त्रैः षड्भिः शुद्धेन भस्मना ॥

सर्वाङ्गोद्धूलनं कुर्याच्छिरोव्रतसमाह्वयम् ।
एतच्छिरोव्रतं कुर्यात्सन्ध्याकालेषु सादरम् ॥

यावद्विद्योदयं तावत्तस्य विद्या खलूत्तमा ।

अथ वरिष्ठत्वं सूतसंहितायाम्—

अतश्च संक्षेपमिदं वदामि
श्रुतिप्रमाणं शिव एव केवलः ।
वरिष्ठ उक्तः सितभस्मकुण्ठनं
विशुद्धविद्या च नचेतरत्परम् ॥

पराशरोपपुराणे—

सर्वागमेषु निष्ठानां त्रिपुण्ड्रं भस्मकुण्ठनम् ।
वरिष्ठं सर्वलिङ्गेभ्य इति सत्यं मयोदितम् ॥

सर्वेषामेव भूतानां श्रौतं लिङ्गमनुत्तमम् ।
सितेन भस्मना कुर्यात् ललाटे तु त्रिपुण्ड्रकम् ॥

शङ्करसंहितायाम्—

यथा देवस्य माहात्म्यं दुर्ज्ञेयं पार्वतीपतेः ।
तथैव भस्मनः प्रोक्तं वेदवेदान्तपारगैः ॥

बृहन्नारदीये—

शिवप्रियाः शिवासक्ताः शिवपादार्चने रताः ।
त्रिपुण्ड्रधारिणो ये च ते वै भागवतोत्तमाः ॥ इति ।

---

[1] सर्वविद्यायाः—पा.

सौरसंहितायाम्—

भस्मनोद्धूलनं तिर्यक्त्रिपुण्ड्रं शिवपूजनम् ।
प्राधान्येन पुराणानि प्रवदन्ति हि सादरम् ॥ इति ।

अत्याश्रमसमाख्यं यद्व्रतं पाशुपतं व्रतम् ।
वेदान्तेषु समस्तेषु तत्सारतरमुत्तमम् ॥

ब्राह्मणस्य विशेषेण धर्मो धर्मपरस्य च ।
भूत्यैवोद्धूलनं यच्च त्रिपुण्ड्रस्यैव धारणम् ॥ इति च ।

अथ पापनाशकत्वं कालाग्निरुद्रोपनिषदि—

त्रिपुण्ड्रं भस्मना करोति यो विद्वान् ब्रह्मचारी गृहस्थो वानप्रस्थो यतिर्वा स समस्तमहापातकोपपातकेभ्यः पूतो भवति । सर्वान् देवान् ध्यातो भवति । सततं रुद्रजापी भवति ।

भरद्वाजस्मृतौ—

प्राङ्मुखश्चरणौ हस्तौ प्रक्षाल्याचम्य पूर्ववदित्युपक्रम्य उद्धूलनं त्रिपुण्ड्रं च सप्रकारमुक्त्वा, उपसंहारे—

सर्वमेतत्त्रिपुण्ड्रं स्याच्छ्रौतं कर्मसु पावनम् ।
त्रिपुण्ड्रं धारयेन्नित्यं सर्वपापविशुद्धये ॥

बृहज्जाबालोपनिषदि—

सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ।
स्त्रियं नपुंसकं गृध्रं बिडालं बकमूषकम् ॥

स्पृष्ट्वा तथाविधानन्यान् भस्मस्नानं समाचरेत् ।

तत्रैव—

त्यक्तवर्णाश्रमाचारो लुप्तसर्वक्रियोऽपि यः ।
सकृत्तिर्यक्त्रिपुण्ड्राङ्कधारणात्सोऽपि मुच्यते ॥

पराशरोपपुराणे—

भस्मशायी भवेन्नित्यं भस्मच्छन्नस्त्रिपुण्ड्रधृक् :
रुद्राध्यायी भवेन्नित्यं मासमेकमतन्द्रितः ।

प्रणवं वा जपेन्नित्यं सदा पञ्चाक्षरं तु वा ।
प्रायश्चित्तं भवेदेतद्गृहस्थं स्यान्न संशयः ॥

वासिष्ठलैङ्गे—

अभक्ष्यभक्षणं येषां भस्मधारणपूर्वकम् ।
तेषां तद्भक्ष्यमेव स्यान्मुने नात्र विचारणा ॥

भविष्यत्पुराणे—

महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
भस्मस्नाननिषेवेण मुच्यते सर्वपातकैः ॥

वासिष्ठलैङ्गे—

एवं भस्म धृतं येन तस्य पुण्यफलं शृणु ।
महापातकसङ्घाश्च पातकान्यपराण्यपि ॥
नश्यन्ति मुनिशार्दूल सत्यं सत्यं न चान्यथा ।

तत्रैव—

यः स्नाति भस्मना नित्यं जले स्नात्वा ततः परम् ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवादरात् ॥
सर्वपापविनिर्मुक्तः स याति परमां गतिम् ।
बहुनोक्तेन किं भस्मधारणं मोक्षसाधनम् ॥
भस्मना नित्ययुक्तस्य ज्ञानमुत्पद्यतेऽचिरात् ।
पातकी पातकान्मुक्तो भविष्यति न संशयः ॥

नारदीयस्मृतौ—

अयत्नेनैव पापानां समस्तानां समासतः ।
शुद्धिहेतुं प्रवक्ष्यामि तवाहं करुणाबलात् ॥
वर्णाश्रमपरिभ्रष्टः श्रुत्युक्तेनैव वर्त्मना ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥
अग्निकर्मपरित्यागी श्राद्धकर्मविवर्जितः ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

परदाराभिगामी च परद्रोही परार्थहृत्।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः॥
पाषण्डः पिशुनः कष्टः कलत्रस्यापराधकृत्।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः॥
तैलताम्बूलपिण्याकगन्धारामादिविक्रयी।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः॥
ब्रह्मविष्णुशिवादीनां देवानामपि दूषकः।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः॥
मर्यादाभेदकस्तीर्थदूषकः कुण्डकाशनः।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः॥
ऊर्ध्वपुण्ड्राङ्कुशाश्वत्थपत्रवर्तुलवज्रधृक्।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः॥
अङ्कितः शङ्खचक्राद्यैः शरीरे देवतायुधैः।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः॥
ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः॥

न केवलं त्रिपुण्ड्रधारणं भस्मनिष्ठस्यैव पापनिवर्तकम्। किं तु भस्मनिष्ठपूजयितुरपि, संहितान्तरे—

त्रिपुण्ड्रधारिणः पादौ प्रक्षालयति यः पुमान्।
सर्वपातकयुक्तोऽपि स सद्यः पूयते नरः॥

वायवीये—

भूतप्रेतपिशाचाद्या रोगाश्चातीव दुस्सहाः।
भस्मनिष्ठस्य सान्निध्याद्विद्रवन्ति न संशयः॥

बृहज्जाबालोपनिषदि—

विभूतिर्भसितं भस्म क्षारं रक्षेति चात्मनः।
भवन्ति पञ्च नामानि पञ्चभिर्नामभिर्भृशम्॥
ऐश्वर्यकारणाद्भूतिर्भस्म सर्वाघभक्षणात्।
भासनाद्भसितं प्रोक्तं क्षारणात्क्षारमापदाम्॥

भूतप्रेतपिशाचब्रह्मराक्षसापस्मारमहाभीतिभ्यो रक्षणाद्रक्षेति।
कौर्मे—

एवमुक्त्वा ददौ ज्ञानमुपमन्युर्महामुनिः।
[1]एतं पाशुपतं योगं कृष्णायाक्लिष्टकर्मणे॥

स तेन मुनिवर्येण व्याहृतो मधुसूदनः।
तथैव तपसा देवो रुद्रमाराधयन् प्रभुम्॥

भस्मोद्धूलितसर्वाङ्गो जटावल्कलसंयुतः। इति।

अत्र पूर्वं हृषीकेशो विश्वात्मा देवकीसुतः।
उवास वत्सरं कृष्णः सदा पाशुपतव्रती॥

भस्मोद्धूलितसर्वाङ्गो रुद्रध्यानैकतत्परः।
आराधयन् हरिः शम्भुं कृत्वा पाशुपतव्रतम्॥ इति च।

पाद्मे—

अथ रामगिरौ रामः पुण्ये गोदावरीतटे।
शिवलिङ्गं प्रतिष्ठाप्य कृत्वा दीक्षां यथाविधि॥

भूतिभूषितसर्वाङ्गो रुद्राक्षाभरणैर्युतः।
अभिषिच्य जलैः पुण्यैर्गौतमीसिन्धुसंभवैः॥

अर्चयित्वा वन्यपुष्पैस्तद्वद्वन्यफलैरपि।
भस्मच्छन्नो भस्मशायी व्याघ्रचर्मासने स्थितः॥

सौरसंहितायां रुद्रलोकं प्रस्तुत्य—

तत्रैव देवदेवेशं शङ्करं चन्द्रशेखरम्।
प्रणवाद्यभिमानिन्यो देवताः पर्युपासते॥

प्रणवः सर्वमन्त्राणामाधारः परमात्मनः।
वाचको जटिलः शुद्धो भस्मोद्धूलितविग्रहः॥

केयूरकटकोपेतः पुण्ड्रत्रयविराजितः।
व्याहृतिः परमा देवी विशेषेण विमुक्तिदा॥

---

[1] व्रतं-पा.

त्रिपुण्ड्रावलिभिर्दीप्ता भस्मनैवावकुण्ठिता ।
सावित्री च महाभागा कुण्डलद्वयशोभिता ॥
प्रसन्नवदना दिव्या जटाजूटधरा शुभा ।
भस्मदिग्धशरीरा च पुण्ड्रत्रयविभूषिता ॥
अन्याश्च वैदिका मन्त्राः सकला बहुकामदाः ।
भस्मसञ्छन्नसर्वाङ्गास्त्रिपुण्ड्राङ्कितमस्तकाः ॥
रुद्राक्षमालाभरणा जटाजूटधरा [1]मुदा ।

सूतसंहितायाम्—

एतस्मिन्नन्तरे श्रीमान् महाकारुणिकोत्तमः ।
कृष्णाजिनोत्तरीयश्च आषाढेन विराजितः ॥
भस्मोद्धूलितसर्वाङ्गः शुद्धतिर्यक्त्रिपुण्ड्रधृक् ।
रुद्राक्षमालाभरणो जपन् पञ्चाक्षरं मुदा ॥
शिष्यैस्तादृग्विधैर्युक्तो महात्मा स्वयमागतः । इति ।

सत्रावसाने सन्नद्धाः' इति प्रस्तुत्य ऋषिवर्णनावसरे—

ऋषयो मृदवः स्वस्थाः सर्वद्वन्द्वविवर्जिताः ।
रुद्राक्षमालाभरणाः सितभस्मावकुण्ठिताः ॥
त्रिपुण्ड्रावलिभिर्दीप्ता जटावल्कलसंयुताः ।
लिङ्गार्चनपरा नित्यं शिवस्यामिततेजसः ॥ इति ।

विशिष्टधर्मग्रहणार्थिनः कावषेयानृषीन् प्रस्तुत्य—

गत्वा हिमवतः पार्श्वे त्रिकालस्नानसंयुताः ।
भस्मोद्धूलितसर्वाङ्गास्त्रिपुण्ड्राङ्कितमस्तकाः ॥
रुद्राक्षमालाभरणा जटावल्कलधारिणः । इति ।
पुरा श्वेतादिऋष्यन्ता मुनयो मुनिसत्तमाः ।
सङ्ख्या च शतमेतेषां सह द्वादशसङ्ख्यया ॥
त एते भस्मदिग्धाङ्गास्त्रिपुण्ड्राङ्कितमस्तकाः ।
रुद्राक्षमालाभरणा रुद्राराधनतत्पराः ॥ इति च ।

---

[1] शुभाः—पा.

ब्रह्मवैवर्ते—

धार्यं भस्म सदाग्निहोत्रजमिदं यद्वैदिकं वैदिकै-
स्तिर्यक्पुण्ड्रतया ललाटफलके वक्षस्स्थले मस्तके ।
बाह्वोर्मन्त्रपुरस्सरं क्रतुशतं तैरेव सम्यक्कृतं
स्नानं तीर्थसहस्रकोटिषु धरा दत्तानवद्याखिला ॥

न वर्तुलं चोर्ध्वमुखं त्रिशूलं
दीपार्धचन्द्रास्रचतुष्कमन्यत् ।
न धारयेद्भस्म जलेन चान्यैः
पतेद्दधानो नरकायुतेषु ॥

स्वाङ्गं शूलरथाङ्गशङ्खकुलिशैस्तप्तं न कुर्याद्द्विजः
कुर्वन्नध्ययने च कर्मकरणे योग्यो न संभाषणे ।
संयुक्तैः सह याति लाञ्छिततनुर्घोरं महारौरवं
निन्दन् भस्म च भस्मधारणमिदं [1]स्पर्धां दधानोऽपि च ॥

विप्राणां तनवोऽखिलामरगणैरध्यासिताः सर्वत-
स्तप्तास्ता अभिताडिता उपहताश्छिन्नाश्च विद्धाश्च यैः ।
देवा घ्नन्ति हि तान्व्यथाविलु[2]लितांश्चैतांश्च सर्वात्मना
[3]तत्सन्तापयितारमात्मविषयान्निस्सारयेद्भूपतिः ॥

तिर्यग्भस्म मृदा तथोर्ध्वमुचितं धत्ते तयोर्व्यत्यये
विप्रध्वंसनमन्यधारणकृता भस्मापि धार्यं ततः ।
अन्यस्योपरि भस्मधारणकृतौ मोहादधो निष्पते-
द्यत्तच्चन्दनकुङ्कुमाद्यपि च मृत्स्याल्लौकिकं केवलम् ॥

विप्रश्चन्दनकुङ्कुमं पुनरिदं भस्माग्निहोत्रोद्भवं
गृह्याग्निप्रभवं तथा विरजजं भूयः समिद्धह्निजम् ।
रुद्राग्निस्थितमादरेण दधता तिर्यक्समन्त्रं क्रमा-
दग्निः सप्ततसुष्ठुहीति मुनिभिः फालांसवक्षस्स्वपि ॥

---

[1] स्पर्धं—पा.   [2] लिताः प्रेत्यात्र सर्वात्मना—पा.   [3] तप्तं तापयिता—पा.

श्रौताग्नेर्विरजानलात्समुदितं सर्वस्य भस्मोद्भवं
गृह्याग्नेर्गृहिणः समिद्धुतवहाद्यद्वार्णिनः पाण्डुरम् ।
मुक्तानां नियतं च भस्म विविधं [1] मोहोद्भवोत्सारणं
सम्यक् साधुगुरोरवाप्य सकलं धार्यं न चेद्दुःखभाक् ॥

तद्भस्मोचितमुक्तमन्त्रवशतो धार्यं तथोद्धूलनं
कृत्वा यस्य तयोर्न सक्तिरुदभूद्द्वेषोऽप्यसौ पातकी ।
दग्धो गौतमशापवह्निपतितो नान्योऽनवद्यं शिवं
रुद्राक्षं शिवभक्तिमीश्वरकथां द्विष्यान्नरो भस्म च ॥

क्रुद्धो गौतमनामको मुनिवरो विप्रं शशापोग्रवा-
ग्दग्धस्तेन शिवे शिवार्चनविधौ तद्भस्मरुद्राक्षयोः ।
ईशस्थानगतौ शिवस्तुतिकथालापेषु माहेश्वरे
देवे ब्रह्मविदि द्विषन्ति बहुधाऽमोघा हि वाणी सताम् ॥

प्रीत्युक्तं मुनिभिः स्मृतौ समुदितं धर्म्यं क्रमानुष्ठितं
कार्यं सत्पुरुषैश्च धर्म्यमपि यत्त्यक्तं न कुर्याद्बुधः ।
देशे यः खलु देशधर्म उचितः कार्योऽपरैर्नेष्यते
तस्माद्भस्म समस्तदेशकुलजैर्धार्यं श्रुतेर्वाक्यतः ॥

केशश्मश्रुविधारणं च शिरसः संवेष्टनं प्रावृति-
र्वक्षोजस्य तथा स्त्रियः पथि [2] पुनर्मृद्भाण्डसंवाहनम् ।
सन्यासं पलपैतृकं जलनिधेरुल्लङ्घनं देवरा-
त्पुत्रोत्पादनमक्षतोपयमनं भूयः कलौ वर्जयेत् ॥

गोमेधं नरमेधकं हयमखं प्रस्थानयात्रां परां
वानप्रस्थकनैष्ठिकत्वमखिलं वर्ज्यं कलौ वैदिकैः ।
योगस्था विजितेन्द्रियाः श्रुतिशिरस्सङ्घोक्तमर्थं परं
भक्त्याराध्य शिवं व्रजेन्निजतनौ रुद्राक्षभस्मावहन् ॥

श्रौतं भस्म धृतं ललाटफलके दृष्टिं समुत्पादये-
न्मूर्ध्न्येतद्वितनोति चन्द्रशकलं कण्ठेऽसितं लाञ्छनम् ।
पार्श्वे योषितमातनोति भुजयोरेणं त्रिशूलं तनौ
व्याघ्रेभाजिनराजताद्रिवृषभानन्तेऽनवध्यर्चयेत् ॥

---

[1] मोहाद्भवेत्पातकी—पा. [2] मनाक् मृ—पा.

लिङ्गं दिव्यमणिः सितं च भसितं सिद्धौषधं वैदिकं
पञ्चार्णः प्रणवेन साध्यफलदो मन्त्रो मनूनां परः ।
मुक्तिस्त्रीमुखवश्यकर्मणि पटुस्तस्यां तु सक्तः स्वयं
जह्यान्नैव कदापि यावदवशात्सम्पत्स्यते [1] शाश्वतम् ॥
भस्म श्रौतमहोदयं नरवरो यत्रास्ति तत्रेश्वरो
गौर्या यस्तु तदर्पयत्यनुदिनं तेनार्चितः शङ्करः ।
तस्मै दत्तमथाक्षयं स हि वरो मुक्तोऽनवद्यः परो
मुक्तिं नैव लभेत्सहस्रजननं जातोऽप्यभस्माक्षभाक् ॥
रुद्राग्नेर्जगतां हिताय परमं वीर्यं समुत्थं शिवो
रक्षार्थं परिपालनार्थमददाद्देव्यै च भस्मामलम् ।
सद्यो भूतपिशाचराक्षसगणप्रेतोरगक्ष्वेलहृत्
कीटव्याघ्रकफोष्णमृत्युशमनं सर्वेर्धिमन्मङ्गलम् ।
भस्मस्नानमनेकपापशमनं मुख्यं जलस्नानतो
बाह्याभ्यन्तरशुद्धिकृद्भवभयप्रध्वंसकृद्दर्शनात् ।
सर्वव्याधिमलापकर्षणपटु(ः)श्रौतानलोत्पत्तिम-
द्विष्णुब्रह्मशतक्रतुप्रभृतिभिर्मूर्ध्नानवद्यं धृतम् ॥
आदाय वैतानिकभस्म शुद्धं
समित्समिद्धं विरजाग्निजं च ।
औपासनाग्निप्रभवं विशुद्धं
निधारयेद्दारवचेलपात्रे ॥
प्रक्षाल्य पादौ च विमृज्य तोयं
पवित्रपाणिः सुसमाहितश्च ।
निवेश्य दर्भेष्वथ पूर्ववक्त्र
उदङ्मुखो भस्म करे निधाय ॥
पञ्चब्रह्ममनुं जपेदथ पुनः प्राणान्नियम्य त्रिधा
अग्नयाद्यैरखिलैस्त्रिवारमथ तैः सम्मन्त्रयेत्सप्तभिः ।
ओमापः सलिलेन योज्य च जपन्नग्नयादिभिर्मार्जये-
दापादाच्छिरसो भुजद्वयमपि ध्यायंश्च साम्बं शिवम् ॥

---

[1] सा स्वयम्-पा.

उद्धूलनं पापहरं पुरस्ता-
त्स्नानोपमं त्वाचमनं विधाय ।
अग्न्यादिभिस्तत्सितभस्मवारि
मध्याङ्गुलीभिस्त्वथवाक्षिमानम् ॥

अनामिकाङ्गुष्ठकमध्यमाभि-
स्त्रियम्बकेनायुतपञ्चवर्णैः ।
लिखेल्ललाटे ह्यनुलोमकेन
विलोमतो वा विधिवत्त्रिपुण्ड्रम् ॥

यथा ललाटे हृदये च कुक्षौ
सुदोर्द्वये [1]ब्रह्महरीश्वरीयम् ।
अयं गृहस्थस्य वनं गतस्य
विधिः पुनर्वर्णिन उच्यते च ॥

समित्समिध्दं विरजाग्निजं च
वैतानिकं वर्णिन एव नान्यत् ।
पूर्वोक्तमन्त्रैर्जलमिश्रभस्म
त्रियायुषेणैव भवेच्च धार्यम् ॥

भिक्षुस्त्रिरोङ्कारयुतात्ममन्त्रं
हंसेन पुण्ड्रं विदधीत तिर्यक् ।
शूद्रः शिवेनैव नमोन्तकेन
कुर्यात्त्रिपुण्ड्रं परिधूलनं च ॥

सच्छ्रोत्रियाणां पचनाग्निजेन
वस्त्रावधूतेन सितेन नित्यम् ।
दावाग्निजं शूद्रजनात्परेषा-
ममन्त्रकं धार्यमुशन्ति भस्म ॥

कन्यानार्योर्भस्म पञ्चाक्षरेण
ध्यात्वा साम्बं धार्यमुद्धूलनं च ।
कार्यं प्राहुः केवलं मोक्षसिध्दै
भस्म श्रौतं नो समिल्लौकिके द्वे ॥

---

[1] ब्रह्मकरीश्वरीयम्—पा.

विप्राणां सलिलेन धार्यमुचितं भस्म त्रिकालेष्वपि
स्त्रीभिक्षोर्जलवर्जितं [1]व्रतिवनस्थानां च नानाविधम् ।
दीक्षाहीननृणां च वारिसहितं मध्याह्नतः प्राक्स्मृतं
सर्वेषां सममेतदाहुरपरे सन्तो[2] न विद्यद्विधिम् ॥

हित्वा पक्वमतीव संहिततमं यद्भस्म तत्पाण्डुरं
भस्मालोलितमुत्तमं तरुशिलामृत्तैजसैर्निर्मिते ।
पात्रे चेलवरे निधेयमवनौ येनापतेन्नाप्यणु-
र्दोषायैव भवेत् क्षितौ निपतितं मूर्ध्ना धृतं मुक्तिदम् ॥

स्नात्वाचम्य करे निधाय भसितं सद्यादिभिर्मन्त्रितं
तैरुद्धूलनमाचरेदथ शिरश्चैशानतः संमृजेत् ।
वक्त्रं तत्पुरुषैरघोरहृदयं वामेन नाभिं परं
सद्याद्यैरखिलाङ्गधूलनमिदं स्नानं तदाग्नेयकम् ॥

शुद्धं समादाय ततोऽन्यवस्त्र-
संस्पर्शनं वै पयसो द्विवारम् ।
स्नानं महापातकहारि नृणां
जलैरशक्तस्य च शुद्धिदं च ॥

सूत्राणि चास्य श्रुतयो वदन्ति
माहात्म्यमेतस्य च भस्मनोऽन्ये ॥

अग्निरित्यादिना भस्म गृहीत्वा निमृज्याङ्गानि संस्पृशेत् । व्रतमेतत्पाशुपतमित्यारभ्य इत्याह भगवान् कालाग्निरुद्र इत्यन्तेन प्रशंसिम् ।

शतमपि [3]न समानं भस्ममाहात्म्यमेवं
मुनिभिरिति च गीतं प्रोच्यमानं कदापि ।
नच पुनरुपयायात्पार[4]मद्यानवद्ये
शिवगिरिमहिमा [5]स्यात्सा च साक्षाद्विभूतिः ॥

माहात्म्यं भस्मनः पुण्यं रुद्राक्षस्याघनाशनम् ।
शिवनामोच्चारणस्य तथा शैवव्रतस्य च ॥

---

[1] प्रतिवन—पा. [2] अनवद्ये विधिम्—पा. [3] प्रशंस्यमानं—पा. [4] मद्य—पा.
[5] सा सा च—पा.

शिवपुण्यस्य माहात्म्यं द्रोहस्याकरणं प्रभोः ।
माहात्म्यं शिवपूजायाः शिवयोगस्य वैभवम् ।

शिवज्ञानस्य माहात्म्यमेतत्सर्वं द्विजोत्तमाः ।
उपदिष्टमगस्त्याय स्कन्देनामिततेजसा ॥

कथयिष्यामि तद्वोऽद्य यथावत्तत्कृपाबलात् ।
कल्पानुकल्पोपकल्पभेदैर्भस्म त्रिधा स्मृतम् ॥

भर्जनात्सर्वपापानां स्मरणाच्च तथेशितुः ।
भस्म चेति समाख्यातं भुक्तिमुक्तिफलप्रदम् ॥

य इदं धारयेद्भस्म मन्त्रितं विधिवन्नरः ।
काङ्क्षितान्यस्य सिध्यन्ति नश्यन्ति दुरितान्यपि ॥

यथा देवस्य माहात्म्यं न ज्ञेयं पार्वतीपतेः ।
तथैव भस्मनः प्रोक्तं वेदवेदान्तपारगैः ॥

सत्यं ज्ञानं दया श्रद्धा वह्निर्वायुर्जलं स्थलम् ।
व्योमादीनि च सर्वाणि भस्मान्येतानि वै द्विजाः ॥

ब्रह्मविष्णुमुखैर्देवैर्ऋषिभिश्च तपोधनैः ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च सङ्करैः ॥

स्त्रीभिश्च धार्यमेतद्वै भस्मात्यन्तं शिवप्रियम् ।
अष्टैश्वर्याणि सिध्यन्ति धारणादस्य मन्त्रतः ॥

अष्टापि सिद्धयः शम्भौ भक्तिः परमकारणे ।
सर्ववश्यकरं चैतत्सर्वसौभाग्यदं परम् ॥

भूतप्रेतपिशाचाश्च राक्षसा दुर्जनाः परे ।
भस्मदर्शनमात्रेण त्रस्ता धावन्ति दूरतः ॥

तथा भस्मावकुण्ठाद्यैर्नश्यन्ति व्याधयः क्षणात् ।
धार्यं भस्म सदा सद्भिस्त्रिपुण्ड्रोद्धूलनात्मना ॥

उद्धूलनं त्रिपुण्ड्रं च मनसापि न लङ्घयेत् ।
तथाप्यज्ञानविच्छित्तिर्ज्ञानादेव तु केवलात् ॥

अज्ञानं [1] तुच्छविज्ञानं बाधकं खलु नेतरत् ।
येन पाशुपतं सम्यग्व्रतमाचरितं द्विजाः ॥

[2] तस्य ज्ञानं विजायेत विनाऽज्ञाननिवारकम् ।
उद्धूलनं त्रिपुण्ड्रं च ज्ञानत्वेनैव केवलम् ॥

आमनन्ति मुनिश्रेष्ठाः साक्षात्कैवल्य[3]साक्षिणः ।
अतोऽप्यज्ञानविच्छेदलाभाय ज्ञानसिद्धये ॥

उद्धूलनं त्रिपुण्ड्रं च मुमुक्षुः सम्यगाचरेत् ।
समागते पुरा तस्मिन् प्रलये माधवस्तदा ॥

वटपत्रे स्वयं शिश्ये समुद्रजलमध्यगे ।
तदानीं भगवानीशस्तत्रासावाययौ स्वयम् ॥

अङ्गुष्ठदघ्नो यस्यासीदम्भोधिः सुमहानपि ।
तं दृष्ट्वा पुरुषश्रेष्ठं हरं तं माधवस्तदा ॥

को भवानिति पप्रच्छ मोहाविष्टनिजान्तरः ।
तदा तस्मै ददौ भस्म पुरुषोऽयं [4] महाद्विजाः ॥

गृहीत्वा तद्धरिर्धृत्वा ललाटेऽभक्षयच्च ह ।
तदानीमात्तविज्ञानः स्वात्मानं स्मृतवानयम् ॥

ददर्श च महादेवं चन्द्रार्धकृतशेखरम् ।
युवानं पुरुषश्रेष्ठं त्रिणेत्रं कालकन्धरम् ॥

तं दृष्ट्वा देवमीशानं समुत्थायाशु माधवः ।
प्रणम्य दण्डवद्भक्त्या पप्रच्छागमनं प्रभोः ॥

शिवः—

स्रष्टारं सर्वलोकानां स्रष्टुमभ्यागतोऽस्म्यहम् ।
तत्त्वं भार्या भवाश्वद्य जनार्दन ममाज्ञया ॥

ममैव शक्तिस्त्वं विष्णो त्वत्तोऽस्तु जनिरस्य च ।
एवमुक्त्वा विधायैनं पत्नीं सर्वेश्वरस्तदा ॥

---

[1] अज्ञानं तुच्छविज्ञानात्साधकं–पा. अज्ञानस्य तु विज्ञानं इति स्यात्. [2] भस्मज्ञानं विजायेत तस्याज्ञाननिवारकम् ! इति स्यात्. [3] शाखिनः–पा. [4] महान्द्विजाः–पा.

रमयामास विश्वात्मा विश्वसंरक्षणोद्यमः ।
तदापतच्छिवस्याशु वीर्यं काञ्चनसन्निभम् ॥

तन्नाभिकमलाद्ब्रह्मा पञ्चास्योऽजनि भूसुराः ।
ससर्ज स प्रजाः सर्वाः सर्वदेवाज्ञया प्रभुः ॥

सोऽहंकारवशात्पश्चाद्भैरवेणाम्बुजोद्भवः ।
निकृत्तैकशिरास्तस्माच्चतुर्मुखसमाह्वयः ॥

भस्मधारणमात्रेण विष्णोरपि महीसुराः ।
विनष्टं हि घनाज्ञानं पुत्रोऽप्यासीच्चतुर्मुखः ॥

पुरा सर्वान् सुरान्वीक्ष्य वीरभद्रो महाबलः ।
सर्पासुरेण घोरेण [1] पञ्चमास्यासुरेण च ॥

पापेनाग्न्यसुरेणापि मारितान् क्रूरकर्मभिः ।
भस्मनोज्जीवयामास विरुद्धान् प्रक्षिपन् द्विजाः ॥

भस्मावकुण्ठिततनोर्वामदेवमहामुनेः ।
[2] अङ्गानुषङ्गमात्रेण यवनानामधीश्वरः ॥

अनेकजन्मसंसिद्धमहापातककञ्चुकः ।
अत्यजद्ब्रह्मरक्षस्त्वं तथा मोक्षमवाप्तवान् ॥

द्राविडेषु द्विजः कश्चित्पतितः कुत्सिताशयः ।
सर्वस्त्रीनिरतः पापी सर्वत्रासीद्दुरात्मवान् ॥

मृतः [3] कश्चिद्द्विजग्रामे कर्मणा स्वेन भूसुराः ।
आबध्य रज्जुं तत्पादे बहिर्निन्युर्जना अमुम् ॥

तं पापं यमदूताश्च नरकं निन्युरञ्जसा ।
ललाटे तस्य दोर्द्वन्द्वे वक्ष्यस्यप्यग्रजन्मनः ॥

सारमेयः समागत्य भक्षितुं तं द्विजाधमम् ।
चचार भस्मलिप्तात्मपादोऽयं ब्राह्मणोत्तमाः ॥

तावतायं द्विजः शीघ्रात्सद्गतिं प्राप्तवान् खलु ।
अथान्यद्भस्ममाहात्म्यं प्रवक्ष्यामि द्विजोत्तमाः ॥

---

[1] पञ्चास्येनासुरेण च इति स्यात्. [2] अङ्गेन सङ्गमात्रेण—पा. [3] तस्मिन्द्विज इति स्यात्.

शृणुध्वमवधानेन यूयं सर्वे समाहिताः ।
अस्ति वङ्गाधिपः कश्चिद्राजा भुजबलाह्वयः ॥

दानशौण्डः सज्जनेष्टः प्रजापालनतत्परः ।
स कदाचित्सङ्क्रमणे रवेः पुण्यतिथौ नृपः ॥

दातुं दानानि भूरीणि विप्रेभ्यो मतिमाददौ ।
तदा समागता विप्रा नानादेशनिवासिनः ॥

सुशीलाख्यो द्विजश्रेष्ठो वैदर्भाद्विषयादयम् ।
समागतः समाकर्ण्य तस्य दानानि भूसुराः ॥

दृष्ट्वा तं ब्राह्मणश्रेष्ठं सर्वे विप्राः प्रणम्य ते ।
सुशीलोऽयं सदाचारस्वाध्यायनिरतः सदा ॥

सर्वशास्त्रार्थसारज्ञः[1] सर्वेश्वरमनाः सदा ।
अस्मै देयं द्विजेन्द्राय दानं प्रथमतो नृप ॥

दत्त्वैतत्सफलं किंचिदक्षयं फलमश्नुते ।
इत्यूचुर्ब्राह्मणाः सर्वे राजानं वीक्ष्य ते तदा ॥

स तेषां वचनं श्रुत्वा तथेत्येवं द्विजोत्तमम् ।
आजुहाव कृतोद्योगो राजा भुजबलो महान् ॥

धार्यं भस्म त्वया राजन् त्रिपुण्ड्रोद्धूलनात्मना ।
अन्यथा तव दानानि निष्फलानि महान्त्यपि ॥

अधृत्वा भस्म यत्किंचित्कृतं कर्म महीपते ।
निष्फलं तद्भवत्येव नात्र कार्या विचारणा ॥

इति विप्रवचः श्रुत्वा राजा द्रव्यमदेन सः ।
प्रोवाच सावलेपेन ब्राह्मणं तं द्विजोत्तमाः ॥

राजा—

धार्यं भस्म मया विप्र त्वदर्थं केन हेतुना ।
अधृत्वा भस्मनो दाने किं शक्तिर्नास्ति वा मम ॥

धृत्वा भस्म प्रदातव्यं नियमः कोऽयमीदृशः ।
इति ब्रुवन्तं भूपालं पुनः प्राह महीसुरः ॥

[1] तत्त्वज्ञः—पा.

यस्य भस्मनि भूपाल श्रद्धा तद्धारणेऽपि वा ।
न जायतेऽस्य पापस्य लक्ष्मीर्नश्यति च क्षणात् ॥

दारिद्र्यं च भवेत्तस्य जायन्ते व्याधयस्तथा ।
न्यूनान्यङ्गानि पापस्य भवेयुर्नात्र संशयः ॥

पुत्रादयोऽस्य नश्यन्ति नारकी च भवेदयम् ।
तस्माद्धार्यं नृपश्रेष्ठ कर्मादौ भस्म पावनम् ॥

प्रतिग्रहीतुस्तद्द्रव्यं वर्धते नेतरन्नृप ।
इति तस्य वचः श्रुत्वा विप्रस्य स महीपतिः ॥

विहस्य वाचं प्रोवाच परिहासेन भूसुराः ।
पुण्यात्मनोऽपि मे विप्र कथं दारिद्र्यसंभवः ॥

कथं पुत्रादिनाशोऽपि कथं वाङ्गेषु हीनता ।
दूरतो व्याधयस्तस्माद्यत्किंचित्प्रोच्यते त्वया ।

भवेयुरेते यदि वा तदा त्वां प्राप्य भूसुर ।
भस्मादाय च धृत्वैतद्दुरितानि निवर्तये ॥

इदानीं त्वं गृहाणाशु दानं मद्धस्ततो द्विज ।
इति तस्य वचः श्रुत्वा सोपहासं महीसुरः ॥

उत्थाय मास्तु मे दानं तावकं भूप सम्प्रति ।
इत्युक्त्वा प्रययौ विप्रः स्वं देशं ब्राह्मणोत्तमाः ॥

शुशुपति स्म तदा भूपं महिषी च्छद्मना वत ।
एवं कतिपये काले याते सोऽयं महीपतिः ॥

व्याधिना महताक्रान्तस्तस्थे वेश्मनि केवलम् ।
महामारीप्रकोपेन मृतास्सेनास्तदा वत ॥

शत्रुणोच्चाटितस्तस्मान्नगरात्स दुरात्मवान् ।
भीतस्तदा वनं प्राप भार्यया सह भीषणम् ॥

तत्र जग्राह तद्भार्यां व्याधः कश्चिन्महा[2]बलः ।
भार्ययापि परित्यक्तस्तदायं दीनमानसः ॥

---

[1] भस्म दानेषु किं–पा. [2] खलः–पा.

चचार केवलः पापी क्षुत्पिपासासमन्वितः।
भिक्षां च याचितां कश्चिद्दत्तवान्नास्य पापिनः॥

यदा तदायं चौर्येण चकारोदरपोषणम्।
एवं दिनेषु [1]कतिषु नीतेष्वेतेन पापिना॥

कदाचिदेनं पापिष्ठं चोरयन्तं क्वचिद्द्विजाः।
रुष्टाः क्षणेन नगरपालका बध्द्वा रज्जुना॥

नीत्वा बहिः पुरस्यास्य पाणी पादौ च चिच्छिदुः।
क्षुत्पिपासाकुलोऽत्यन्तं पुनः कर्मवशेन सः॥

विदर्भाधिपतेः प्राप नगरं कुण्डिनं द्विजाः।
भिक्षावृत्त्या वसंस्तत्र कृपणोऽत्यन्तमातुरः॥

एतस्मिन् समये विप्राः प्रिया तस्य दुरात्मनः।
गृहीता येन स व्याधः शार्दूलेन हतो मृतः॥

सापि प्राप महापापा पुरं तत्कर्मशेषतः।
छिन्ननासा चौर्यवशादियं च क्षुत्समाकुला॥

आधिव्याधिसमाक्रान्तौ क्रिमिक्लिन्नव्रणावुभौ।
क्रोशन्तौ देहि देहीति भिक्षां चेरतुरत्र तौ॥

परस्परानभिज्ञौ च परस्परमहारुषौ।
सुशीलस्य गृहद्वारं कदाचित्प्रापतुर्द्विजाः॥

सुशीलः—

वङ्गाधिपोऽयं प्रथितो नाम्ना भुजबलाह्वयः।
केनापि घोरपापेन दशामेतामवाप्तवान्॥

इति तस्य वचः श्रुत्वा द्विजोऽप्याश्चर्यसंयुतः।
कृत्वाङ्गुलिं नासिकायां वीक्ष्य सस्यगिमं द्विजाः॥

जानाति वा भवानद्य [2]किं मां दृष्टस्त्वया पुरा।
इत्युवाच सुशीलोऽयं ब्राह्मणाना[3]मधीश्वराः॥

---

[1] कतिपयेष्वित्यर्थः. [2] किं दृष्टोऽहं त्वया पुरा—इति स्यात्. [3] मधीश्वरः—पा.

भुजबलः—

न मे स्फुरति यत्किंचिद्दृष्टं पूर्वमपि द्विज ।
क्षणे क्षणे मतिभ्रान्तिः स्वामिन्नुज्जृम्भते मम ॥

सुशीलः —

धार्यं भस्म मया प्रोक्तं न श्रुतं च त्वया पुरा ।
दात्रा दानानि भूरीणि द्रव्ययौवनगर्विणा ॥
निमन्त्रितोऽप्यहं दानं मास्त्वित्युक्त्वागमं पुरम् ।
नूनं भस्मावमानेन प्राप्तेयं निष्ठुरा दशा ॥
श्रुत्वा सुशीलवचनं [1] वृत्तिं स्वप्नवदस्मरत् ।
प्रणनाम ततो राजा दण्डवत्पृथिवीतले ॥
आबध्य पाणी प्रोवाच वचनं पृथिवीपतिः ।
समागतोऽसि विप्रेन्द्र दानं नाङ्गीकृतं त्वया ॥
मया च न धृतं भस्म भवदाज्ञा च लङ्घिता ।
दोषेणानेन विप्रेन्द्र घोरा प्राप्ता दशा ध्रुवम् ॥
तदद्य भवता स्वामिन् रक्षणीयो महापदः ।
दत्वा भस्मेति तं विप्रं प्रणनाम महीपतिः ॥
ततः सुशीलः पुण्यात्मा भस्मादायातिपावनम् ।
धृत्वैतत्सर्वपापेभ्यो मुच्यते नात्र संशयः ॥
ऐश्वर्यं लभते क्षिप्रमारोग्यं चाधिगच्छति ।
विपक्षविजयी तद्वद्व्याधिमोक्षं समाप्नुयात् ॥
इत्युक्त्वा प्रददौ तस्मै सुशीलोऽयं द्विजोत्तमः ।
तदादाय दधौ भस्म स्वशरीरे सुपावनम् ॥
तत्क्षणात्सम्बभूवुस्ते च्छिन्नपाण्यादयो द्विजाः ।
विनष्टा व्याधयः सर्वे पूर्वाकारो बभूव हि ॥
ततः स्वरूपमालोक्य राजाश्चर्यसमन्वितः ।
प्रणम्य दण्डवद्भक्त्या तस्थौ बद्धाञ्जलिः पुरः ॥

---

[1] वृत्तं—इति स्यात्.

तं दृष्ट्वास्य वधूश्छिन्ननासा साऽऽश्चर्यसंयुता ।
स्वभर्तारं विदित्वैनं भूपालं ब्राह्मणोत्तमाः ॥

भार्याहं तव भूपाल व्याधिग्रस्तकलेबरा ।
समादाय महर्षेस्तद्भस्म देहे सुपावनम् ॥

धृत्वैतद्वीतशोकाद्य भवाम्यहमसंशयः ।
इति तस्या वचः श्रुत्वा प्रत्युवाच नृपस्तु ताम् ॥
दोषेण केन नासा ते विच्छिन्ना ब्रूहि तन्मम ।

पत्नी—

निर्जगाम यदा दानं मास्त्वित्युक्त्वा द्विजोत्तमः ॥

तदाहमक्षुभं दौष्ट्याद्रूप्ययौवनगर्विता ।
दुर्निमित्तमिदं विप्र तद्गृहीत्वा प्रतिग्रहम् ॥

गच्छेति चाब्रुवं वाचं सोपहासं नृपोत्तम ।
दोषेण तेन नासा मे छिन्नेयं सत्यमीरितम् ॥

इति तस्या वचः श्रुत्वा राजा निश्चित्य तत्स्वयम् ।
प्रणम्य दण्डवद्भक्त्या ब्राह्मणानामधीश्वरम् ॥

प्रियैषा मम विप्रेन्द्र तेन दोषेण सत्यतः ।
च्छिन्ननासा तदाश्वेनां रक्ष त्वं करुणानिधे ॥

इति ब्रुवन्तं तं भूपं मास्तु भीतिरिति ब्रुवन् ।
तदा भस्म समादाय स्त्रियै देयमिति द्विजाः ॥

गृहीत्वा तन्नृपश्रेष्ठः प्रादात्पत्न्यै सुपावनम् ।
सा समादाय भक्त्या तत्सर्वाङ्गेष्ववलेपयत् ॥

तदानीं ववृधे नासा पूर्ववद्भस्मगौरवात् ।
व्याधयोऽपि गताः सर्वे पूर्वरूपमगा[1]द्द्रुतम् ॥

ततः प्रहृष्टमनसौ दम्पती तौ धृताञ्जली ।
प्रणम्य दण्डवद्भक्त्या स्तुत्वैनं तस्थतुर्द्विजाः ॥

---

[1] द्धृतम्–पा.

एतस्मिन् समये विप्रा विदर्भविषयाधिपः ।
विचित्ररथनामायं श्रुत्वैतद्धृष्टमानसः ॥

[1]समागत्य द्रुतं विप्रं प्रणम्य भुवि दण्डवत् ।
स्वामिन्मातुलपुत्रोऽयं रक्षितः पृथिवीपतिः ॥

कुत्र वा गत इत्येवं विचारोऽभून्महान्मम ।
भवत्कृपावशाद्दृष्ट इत्युक्त्वायं महीपतिः ।

परिष्वज्य ददौ तस्मै पटान् भूषणमुज्वलम् ॥

तद्भार्यायाश्च वसनं समीचीनमदात्स्वयम् ।
उपचारवचोऽप्युक्त्वा निनाय स्वगृहं पुनः ॥

भोजयामास तौ तत्र दम्पती भक्ष्य[2]भोज्यकैः ।
सम्भाष्य बहुधान्योन्यमुपचारपुरस्सरम् ॥

प्रेषयामास पश्चात्तन्नगरं प्रति भूमिपम् ।
तुरङ्गमान् बहून् भृत्यान् भटानपि [3]विधाय सः ॥

ततः प्रतस्थे नृपतिर्महत्या सेनया युतः ।
सुशीलस्य गृहं प्राप्य स शिवैकमनास्तदा ॥

प्रणम्य दण्डवद्भक्त्या भार्यया सह भूमिपः ।
भगवन् भवता सम्यगावामत्र सुरक्षितौ ॥

भवत्कृपावशादद्य स्वदेशं प्रस्थितोऽस्म्यहम् ।
यथा शत्रून् जयिष्यामि देहि भस्म तथा मम ॥

इत्युक्त्वा विनयानम्रं नृपं वीक्ष्य द्विजोत्तमः ।
मास्तु भीतिर्नृप रिपोर्भयात्तस्मान्महत्तरात् ॥

इत्युक्त्वा भस्म सम्मन्त्र्य ददौ तस्मै द्विजोत्तमः ।
तदादाय स्वके फाले धृत्वा भस्म सुपावनम् ॥

प्रणम्य तं द्विजश्रेष्ठं लब्धानुज्ञः कृताञ्जलिः ।
प्रतस्थे प्रीतिसंयुक्तः सेनया च समन्वितः ॥

एतदागमनं श्रुत्वा पापी कश्चन राक्षसः ।
हत्वास्य शत्रुं स्ववशे कृत्वा देशं तदीयकम् ॥

---

[1] सम्यगत्यद्भुतं विप्रं—पा. [2] भोजनैः-पा. [3] विहाय—पा.

बाधयन्नित्यमत्यर्थं प्रजाः सर्वा दुरात्मवान् ।
निर्ययौ नगरादेनं हन्तुकामः कृतायुधः ॥

ततस्तु तस्य वदनं दृष्ट्वा भस्मावकुण्ठनम् ।
मुक्त्वा रक्षोवपुर्घोरं दिव्यं वपुरवाप्तवान् ॥

भुजबलः—

दृष्ट्वा तदेतदाश्चर्यं[1] को भवानिति भूपतिः ।
वृत्तान्तं श्रोतुकामोऽयं पप्रच्छ द्विजसत्तमाः ॥

प्रोच्यते नृपतिश्रेष्ठ वृत्तान्तमनुपूर्वशः ।
इत्युक्त्वा तं समाहूय स्वीयं नगरमुज्वलम् ॥

तत्र वेश्म महच्चारु नानारत्नविचित्रितम् ।
प्रापयित्वैनमारोप्य सिंहासनमनुत्तमम् ॥

सुमुहूर्ते सुलग्ने च पट्टबन्धं च भस्मना ।
विधाय गीतवादित्रैश्चारुमङ्गलनिस्वनैः ॥

परीवृतः पुरजनैः परितः परया मुदा ।
शृणु राजन् प्रवक्ष्यामि चरित्रमवधानतः ॥

पश्चिमाशापतिः पूर्वं वरुणोऽहं महीपते ।
पीडितो राक्षसैः पापैरसुरैरब्धिमध्यगैः ॥

पुरन्दरस्य निकटमगमं भयविह्वलः ।
तत्र वृत्तान्तमसुना पृष्टोऽहमवदं किल ॥

बाधन्ते राक्षसाः पापा दैत्याश्च जगदब्धिगाः ।
न शक्यते ममावासो गन्तुं तैरावृतो बत ॥

इत्युक्त्वेन्द्रस्य निकटमवसं तेन भूपते ।
तदानीमागतस्तत्र कुम्भभूस्तपसां निधिः ॥

तं दृष्ट्वा देवराजोऽसौ प्रणम्यार्घ्यादिपूजया ।
पूजयित्वासने स्थाप्य स्वयं तस्थौ तदाज्ञया ॥

तस्मिन्नवसरे तत्र नारदोऽप्यागतः किल ।
स्थित्वायमासने रम्ये पूजितस्तेन भूपते ॥

---

[1] श्चर्यंव—पा.

युवां शृणुत मद्वाक्यं भूलोके किंचिदद्भुतम् ।
दृष्ट्वा समागतः शीघ्रं युवयोरहमन्तिकम् ॥

काश्मीरविषयाधीशो वज्रदेहीति विश्रुतः ।
राजासौ जितसामन्तः सुधर्माख्यं पुरोहितम् ॥

विद्याहीनं समुद्वीक्ष्य जगाद वचनं तदा ।
किं नाभ्यस्ता त्वया विद्या ब्राह्मणानामलङ्क्रिया ॥

अनक्षरमुखं [1] भाति श्मशानसदृशं तव ।
इति [2] तद्वचनं श्रुत्वा [3] पुनः प्राह पुरोहितः ॥

अभ्यस्तापि मया विद्या केन दोषेण वा मम ।
नायाति तस्माद्गोविन्दं समाराध्य जगत्प्रभुम् ॥

प्राप्नवानि ध्रुवं विद्यामित्युक्त्वायं महीसुरः ।
आराधयामास हरिं वेदमन्त्रैरनेकधा ॥

ततः प्रसन्नः प्रददौ विद्यां तस्मै हरिः स्वयम् ।
अन्तर्दधे पुनः क्षिप्रं हरिर्दत्वा वरं मुदा ॥

लब्धविद्यस्तथैवायं सुधर्मः प्रीतिसंयुतः ।
जगाम भूपनिकटं सर्वविद्वज्जनालयम् ॥

राज्ञे निवेदयामास स्ववरप्राप्तिमादरात् ।
ततस्तुष्टिमवापायं वज्रदेही महीपतिः ॥

ब्राह्मणान्मेलयित्वायं चक्रे यागं सुशोभनम् ।
ददौ दानानि भूरीणि विद्वद्भ्यः परया मुदा ॥

तदा सुधर्मस्तर्कोक्त्या खण्डयामास पण्डितान् ।
नास्य कश्चित्पुरो विद्वानुत्तरं दातुमीश्वरः ॥

यदा तदायं पारुष्यात्पण्डितानवमानयत् ।
तदा चतुर्मुखस्तत्र सर्वलोकपितामहः ॥

वृद्धब्राह्मण[4]रूपेण समुत्थायाब्रवीद्वचः ।
[5] विद्यावान्विनयोपेतस्त्रिषु लोकेषु शस्यते ॥

---

[1] नामि श्म–पा. [2] भूपवचः–पा. [3] पुरः–पा. [4] वेषेण–पा.
[5] विद्या हि विनयोपेता–पा.

[1]स चेदविनयोपेतो गर्ह्यते सकलैर्जनैः ।
तस्मात्त्वं पण्डितोऽप्येतान्मावमंस्थाश्च पण्डितान् ॥

[2]नैवास्ति कश्चित्पुरुषो विद्वानाजन्मतः क्षितौ ।
इति तस्य वचः श्रुत्वा कोपेनायं वचोऽब्रवीत् ॥

तिष्ठ तूष्णीं न कर्तव्यं पाण्डित्यं भवतात्र वै ।
विद्यया परिहीना ये विप्रास्ते मूढबुद्धयः ॥

गर्ह्या एते न सन्देहस्तस्मात्त्वं मूढचेतनः ।
किं जानासि वृथा मानी स्थविरः खलु केवलम् ॥

इति निन्दावचः श्रुत्वा विप्रवेषमसौ त्यजन् ।
चतुर्भिर्वदनैस्तत्र [3]सहितः क्रोधविह्वलः ॥

बुद्धिरुक्ता मया भ्रान्त तव पण्डितमानिनः ।
न जानाति भवान् किंचिद्विद्यावेशमदेन हि ॥

मां च [4]गर्हयति क्षान्तिं मुक्त्वा मूढेन चेतसा ।
तस्मात्तवाशु जिह्वेयं न स्पन्दयतु पापिनः ॥

शप्त्वैवं च तथा ब्रह्मा तं तत्रान्तरधीयत ।
तदैव स्तम्भिता जिह्वा न चचालास्य पापिनः ॥

केवलं मूकवत्तस्थे तत्रैवास्थानमण्टपे ।
दृष्ट्वैतदद्भुतं राजा किमेतदिति चिन्तयन् ॥

विचारमाप नितरां तदानीं वृत्रहन् क्षणे ।
पुनर्विशुद्धमनुजं सुधर्मस्य महीपतिः ॥

इतः परं किं कर्तव्यं विशुद्धमतिमान् खलु ।
इति राज्ञो वचः श्रुत्वा जगाद वचनं द्विजः ॥

आराध्य देवमधुना पुण्डरीकाक्षमादरात् ।
[5]प्राप्नुवाम यथापूर्वं वाचमव्याहतां क्वचित् ॥

[6]इत्युक्त्वा पूजयामास भ्राता विष्णुमनन्यधीः ।
तदाविरासीत्तस्याशु पुण्डरीकेक्षणः [7]पुरः ॥

---

[1] सा चेदविनयोपेता गर्ह्यते–पा. [2] न सोऽस्ति–पा. [3] लक्षितः क्रोध–पा.
[4] गर्हयतीत्येवमुक्त्वा–पा. [5] प्राप्नुयास्त्वं इति स्यात्. [6] इत्युक्तः इति स्यात्. [7] प्रियाव–पा.

प्रसीद भगवन्विष्णो भक्तानामभयप्रद ।
शापात्समुद्धराश्वेनं भवद्भक्तमजस्य भो ॥

विशुद्धस्य वचः श्रुत्वा प्राह विष्णुर्जगन्मयः ।
मत्तो वरप्रसादेन विद्या लब्धामुना पुरा ॥

युक्तं किं विदुषः शिष्टान् दूषितं परुषोक्तिभिः ।
विनयेन समोपेता विद्या सर्वत्र पूज्यते ॥

विदुषामवमानेन शशापाजः क्रुधा भृशम् ।
तस्मादेनं समुद्धर्तुं शापादस्मान्न शक्यते ॥

इति विष्णोर्वचः श्रुत्वा पुनर्वाचमुवाच सः ।
दासाः खलु वयं स्वामिन् तव लोकगुरोस्ततः ॥

क्षमस्व मन्युमेवं त्वं शापादुद्धर शीघ्रतः ।
इति वाक्यं निशम्याशु विष्णुः सर्वजगन्मयः ॥

पुनर्विद्या प्रदत्ता चेद्विदुषो दूषयिष्यति ।
आलोच्य मनसा चैवं जगाद वचनं ततः ॥

किं वृथा क्रियते यत्नस्त्वयाऽशक्येऽत्र कर्मणि ।
शापान्मोचयितुं शक्तिर्नास्ति मे ब्राह्म[1]णाधम ॥

इति ब्रुवन्तं गोविन्दं रुषा वीक्ष्याब्रवीद्वचः ।
त्रिशङ्कुमाश्रितं पूर्वं विश्वामित्रोऽपि तापसः ॥

त्रिदिवं प्रेषयामास स्वतपोगौरवादयम् ।
[2]न ते यत्नोऽपि तन्मात्रं स्वाश्रिते पुरुषोत्तम ॥

इति तस्य वचः क्रूरं श्रुत्वा कोपाकुलो हरिः ।
विनन्दयसि मां मोहाद्यस्मात्त्वं [3]मासमध्यतः ॥

परिक्षीणो भवेत्युक्त्वा तिरोधानमशिश्रयत् ।
विशुद्धं विष्णुना शप्तं विज्ञाय स महीपतिः ॥

विचारमाप चात्यर्थं किमेतदिति चात्मनि ।
विशुद्धोऽपि क्रमेणायं क्षयमापाङ्घ्रिपाणिषु ॥

---

[1] णाधुना-पा. [2] न ते बतास्ति तन्मात्रं-पा. [3] मानमध्यत-पा.

शिरःप्रक्षीणकाले तु राजा कैदारमीश्वरम् ।
महोत्सवे महासेनः सेवितुं प्राप भक्तितः ॥

सुधर्मं तं विशुद्धं च समाहूय महेश्वरम् ।
दृष्ट्वा प्रणम्य भक्त्याशु स्तुत्वा स्तोत्रैरनेकशः ॥

गोपुरद्वारमासाद्य तस्थे ताभ्यां महीपतिः ।
तदा तु ऋषयः केचित्प्रणम्य परमेश्वरम् ॥

केदारनाथं सन्तोषात् निवृत्ताः प्रापुरत्र ते ।
ब्रह्मविष्णवोस्तु विज्ञाय शापं प्राप्ताविमौ द्विजौ ॥

शापान्मोचयितुं चैतावशक्ताः पृथिवीपतिम् ।
आशीर्भिर्योजयित्वाशु स्वं स्वं स्थानमवापिरे ॥

मोचकः कश्चिदस्तीति निवसन् पृथिवीपतिः ।
परिश्रान्तिमवापायं यदा दुःखितमानसः ॥

तदानीमागतस्तत्र दधीचिः सह शिष्यकैः ।
केदारनाथं देवेशं [1]प्रणनामात्र भक्तितः ॥

नं दृष्ट्वा तपतां श्रेष्ठं राजा परमया मुदा ।
प्रणम्य प्रश्रयानम्रः प्रार्थयामास भक्तितः ॥

रक्ष रक्ष द्विजावेतौ ब्रह्मविष्णवोर्महामुने ।
शापं प्राप्तौ स्वकीयेन दोषेणास्मत्पुरोहितौ ॥

इति राज्ञो वचः श्रुत्वा ऋषिः परमया मुदा ।
भस्मादाय ददौ पूतं भर्जकं पापसन्ततेः ॥

तदादाय नृपश्रेष्ठो लेपयामास विप्रयोः ।
तदानीं ववृधे तस्य विशुद्धस्य वपुस्तराम् ॥

सुधर्मस्यापि रसना समजायत पूर्ववत् ।
तदेतदद्भुतं दृष्ट्वा सर्वेऽप्याश्चर्यमाययुः ॥

भस्मावलेपनाच्छापान्मुक्तावेतौ द्विजावुभौ ।
ब्रह्मविष्णवोरतो भस्ममहिमा केन गण्यते ॥

---

[1] तं प्रणम्यात्र, संप्रणम्यात्र—पा.

वज्रदेही महीपालस्तदाश्चर्यसमन्वितः ।
दधीचं तपतां श्रेष्ठं प्रणनाम महीतले ॥

तावुभौ भ्रातरौ विप्रौ प्रणम्य ऋषिसत्तमम् ।
भवता रक्षितावावां माहात्म्याद्भस्मनो मुने ॥

ज्ञायते भवता भस्ममहिमा शङ्करेण वा ।
इत्युक्त्वा दण्डवद्भूमौ नमन्तौ तं च भूपतिम् ॥

आशीर्भिर्योजयित्वायं स्वाश्रमं प्रययौ मुदा ।
तदा प्रभृति तौ विप्रौ भस्मोद्धूलितविग्रहौ ॥

अवापतुः परं श्रेयः कुम्भोद्भवपुरन्दरौ ।
नारदस्य वचः श्रुत्वा तावुभौ मुनिदेवपौ ॥

आश्चर्याविष्टमनसौ भस्ममाहात्म्य[1]मुत्तमम् ।
भाषयन्तौ मिथस्तुष्टौ तस्थतुः परया मुदा ॥

तदाहं तत्र विमना यत्किंचिन्मनसा स्मरन् ।
तिष्ठत्वयं कथामार्गः पुरन्दर सुरेश्वर ॥

बाधन्ते राक्षसा मध्यं समुद्रस्य समाश्रिताः ।
[2]दैत्यैरतो विनाशाय तेषां यत्नं कुरुष्व भो ॥

जगादैवं तदागस्त्यः कोपाकुलितमानसः ।
किमुच्यते त्वया भ्रान्त प्रतिबध्यावयोर्वचः ॥

माहात्म्ये वर्ण्यमानेऽत्र भस्मनः पापहारिणः ।
तिष्ठत्वयं कथामार्ग इत्यश्लाघ्यतया यतः ॥

तस्माद्दुरात्मन् सहसा राक्षसो भव दूषितः ।
शपित्वैवमगस्त्योऽयं समाहूय पुरन्दरम् ॥

माहात्म्यश्रवणेनास्य भस्मनस्तर्जितैनसः ।
प्रयासो राक्षसान् हन्तुं न कश्चिन्मघवन्निति ॥

समुद्रतीरमासाद्य भस्मादायाभिमन्त्रितम् ।
धृत्वा ललाटे करयोरालेप्य सहसा ऋषिः ॥

---

[1] स्यमद्भुतम्—पा. [2] दैतेयाश्च इति ख्याताः तेषां पा.

आजुहावाम्बुधिं पाणिं प्रसार्य स महानृषिः ।
तदानीमागतोऽम्भोधिः करे नीहारविन्दुवत् ॥
प्राशयामास तं ध्यात्वा महादेवमृषीश्वरः ।
संहरेन्द्रासुरान्पापान् राक्षसानपि दुर्जनान् ॥
एवमुक्त्वा ददौ भस्म सुरेशाय घटोद्भवः ।
तदादायामरेशोऽपि धृत्वा सर्वशरीरके ॥
राक्षसानसुरान् सर्वान् जघानायं महीपते ।
ततः पयोधिं मुक्त्वायं प्रथस्थे स्वाश्रमाय च ॥
तदानीं मघवाञ्छीघ्रं मामाहूय महीपते ।
ऋषेरभ्याशमासाद्य सान्त्वयन्नब्रवीद्वचः ॥
न किंचिदपि जानाति मूढोऽयं तपतां वर ।
रक्षैनं कृपया स्वामिन्नित्युक्त्वा प्रणनाम हि ॥
प्रसन्नः प्राह वचनमगस्त्यो वीक्ष्य मामपि ।
भविष्यति महीपालः कश्चिद्भुजबलाह्वयः ॥
दृष्ट्वास्य भस्म निटिले तदा रक्षोवपुर्धृतम् ।
त्यक्ष्यत्ययं शरीरं स्वं लमेष्यति यथा पुरा ॥
पश्चिमाशामनुप्राप्य पालयिष्यति च ध्रुवम् ।
इत्युक्त्वा प्रययौ शीघ्रं स्वाश्रमं प्रति तापसः ॥
तथैवाहं समागत्य न्यवसं पट्टणे स्वके ।
रक्षोवपुरनुप्राप्य घोरमत्यन्तगर्हितम् ॥
दृष्ट्वा त्वन्निटिले भस्म प्राप्तवा[1]न्मानवं वपुः ।
इत्युक्त्वा स्वभटानाशु सस्मार वरुणस्तदा ॥
तदानीमागताः सर्वे भटास्तस्य महाबलाः ।
तैरयं स्वदिशं प्राप पश्चिमां तुष्टमानसः ॥
स्वपदं प्राप तरसा भस्मसन्दर्शनाद्द्विजाः ।
[2]श्रुत्वोक्तिं वरुणस्याशु राजा भुजबलस्तराम् ॥
अत्यन्ताश्चर्यसंयुक्तो भस्मन्यासक्तमानसः ।

[1] मामकं—पा. [2] श्रुत्वा चरित्रमस्याशु—पा.

भस्मानुलिप्तसर्वाङ्गो भस्मशय्यारतस्तदा ।
पुत्रमित्रकलत्रैश्च भुक्त्वा भोगान्यथेप्सितान् ॥

कैलासं प्राप देहान्ते मुदा परमया द्विजाः ।
यं एतद्भस्ममाहात्म्यं श्रुणुयात्सावधानतः ॥

श्रावयेद्वा पठेद्वापि स याति परमां गतिम् ।
पुत्रकामो लभेत्पुत्रं धनकामो लभेद्धनम् ॥

विद्या[1]कामः परां विद्यां मोक्षार्थी मोक्षमाप्नुयात् ।
स्वर्णस्तेयसुरापानब्रह्महत्यादिपातकैः ॥

मुच्यते नात्र सन्देहो नियमाच्छ्रवणाद्विजाः ।
बहुनोक्तेन किं विप्राः श्रुणुध्वं भावितान्तराः ॥

ब्रह्महत्यादिपापानां प्रायश्चित्तमिदं स्मृतम् ।
सर्वोपनिषदां सारं साक्षात्सर्वेश्वरात्मकम् ॥

कृतार्था यूयमधुना वेदवेदाङ्गकोविदाः ।
इत्यादिस्कान्दवचनैरस्मिन् प्रत्यक्षमोक्षदे ॥

अश्रद्धया जनाः सर्वे जातास्तेऽप्यात्मवञ्चकाः ।
केचिच्च तुलसीकाष्ठमणिस्रग्भूषिता नराः ॥

नरके यातनां प्राप्य दुःखाम्भोधौ निमज्जिताः ।
पिशाचैरथ रक्षोभिर्ग्रस्तास्ते भस्मकाङ्क्षिणः ॥

भस्मस्मरणमात्रेण सुखं यान्ति परं स्वयम् ।
न मृदावाथ सिन्दूरैः शुष्काङ्गारेण वा पुनः ॥

मन्त्रिता यान्ति लोकेऽस्मिन् पिशाचा राक्षसादयः ।
भस्मदर्शनमात्रेण पलयान्ते भयाकुलाः ॥

पिशाचा वाथ भेतालकूष्माण्डा भैरवादयः ।
दृष्टिदोषपरिग्रस्ता भस्मनैवाभिमान्त्रिताः ॥

सुखं प्रयान्ति सुलभं पश्यतास्मिंस्तु विष्टपे ।
न मृदाङ्गारसिन्दूरैर्मंत्रिते दृष्टिदोषतः ॥

---

[1] कामो लभेद्विद्यां.

विमुच्यन्ते जना लोके पश्यतात्र बुधाः स्वयम् ।
अथ श्रौतेऽथवा स्मार्ते कौतुके बन्धनेऽपि च ॥

अखिलैर्गृह्यकारैश्च त्र्यम्बकेनाभिमार्जनम् ।
विहितं कर्म कुर्वन्ति भस्मनैव सितेन हि ॥

अथापि भस्म निन्दन्ति शापदग्धा जना भुवि ।
अतस्तद्दूषका वेददूषका बुद्धवंशजाः ॥

परिक्षियाः कर्मभिश्च परिभ्रष्टा महैनसः ।
गोतमाद्यैश्च मुनिभिः शप्ताः शम्भौ च भस्मनि ॥

रुद्राक्षे च परं तेषां बुद्धिर्नोदेति पापिनाम् ।
अस्पृश्याः शाम्भवैर्दुष्टाः पापिनस्तप्तमुद्रिताः ॥

अभाषणीयाः पापिष्ठा दर्शनाय न ते जनाः ।
देशे शैवैः पुनर्यत्र नरा दृष्टाश्च पापिनः ॥

तद्दोषविनिवृत्त्यर्थं जपेत्पञ्चाक्षरं मनुम् ।
सूर्यावलोकनं वापि कुर्वीत शिवदीक्षितः ॥

इत्यादिवचनैरन्यैर्निषेधेनापि वै तथा ।
भस्मश्रद्धा पुण्यवशाज्जायते पुण्यकर्मणाम् ॥

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञश्रीनीलकण्ठशिवाचार्यकृते निगमागमसारसङ्ग्रहे क्रियासारे विभूतिमाहात्म्यवर्णनं नाम अष्टमोपदेशः समाप्तः

---

## नवमोपदेशः

नवमे चोपदेशेऽस्मिन् रुद्राक्षोत्पत्तिरुच्यते ।
किरणागमपूर्वार्धपुराणादिषु वर्णिता ॥

पुरा त्रिपुरसंहारे नेत्रस्वेदो धरातले ।
यः पापात प्राथमिको हेमरूपश्चतुर्विधः ।
तस्मिन्नासीन्महावृक्षो नाम्ना रुद्राक्ष उच्यते ।

[1] भूति–पा.

अथ हैनं भगवन्तं कालाग्निरुद्रं भुसुण्ठः पप्रच्छ, कथं रुद्राक्षोत्पत्तिस्तद्धारणात् किं फलमिति। तं होवाच स भगवान् कालाग्निरुद्रः। पुरा त्रिपुरवधार्थमहमुन्मीलिताक्षोऽभवम्। तेभ्यो जलबिन्दवो भूमौ पतिताः। ते रुद्राक्षा जाताः सर्वानुग्रहार्थाय। तेषां नामोच्चारणमात्रेण दशगोदानफलं (भवति)। दर्शनस्पर्शनाभ्यां द्विगुणफलं [1](भवति)। अत ऊर्ध्वं वक्तुं न शक्नोमि।

तत्रैते श्लोकाः—

[2](क)स्माज्जातं तु किं नाम कथं वा धार्यते नरैः।
[3]कतिवैषां मुखान्यत्र कैर्मन्त्रैर्धार्यते कथम्॥ १

दिव्यवर्षसहस्राणि चक्षुरुन्मीलितं मया।
[4]उभाभ्यां चारुपक्ष्मभ्यां पतिता जलबिन्दवः॥ २

तत्राश्रुबिन्दवो जाता महारुद्राक्षवृक्षकाः।
स्थावरत्वमनुप्राप्य भक्तानुग्रहकारणात्॥ ३

भक्त्या रात्रौ दिवा पापं दिवा रात्रिकृतं हरेत्।
लक्षं तु दर्शनात्पुण्यं कोटिस्तत्स्पर्शनाद्भवेत्॥ ४

तस्य कोटिशतं पुण्यं लभते धारणान्नरः।
लक्षकोटिसहस्राणि लक्षकोटिशतानि च॥ ५

तज्जपाल्लभते पुण्यं नरो रुद्राक्षधारणात्।
रुद्राक्षाणां तु भद्राक्षधारणे स्यान्महाफलम्॥ ६

धात्रीफलप्रमाणं तु श्रेष्ठमेतदुदाहृतम्।
बदरीफलमात्रं तु मध्यमं प्रोच्यते बुधैः॥ ७

अधमं [5]चणमात्रं स्यात्प्रक्रियैषा मयोच्यते।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति शिवाज्ञया॥ ८

वृक्षा जाताः पृथिव्यां तु तज्जातीयाः शुभाक्षकाः।
श्वेतास्तु ब्राह्मणा ज्ञेयाः क्षत्रिया रक्तवर्णकाः॥ ९

---

[1] वदन्ति—पा. [2] कस्मिंस्थितं तु—पा. [3] कतिभेदमुखान्यत्र—पा. [4] पटाभ्यां—पा. भूमावक्षिपटाभ्यां तु—उपनिषदि. [5] चाणुमात्रं—पा.

पीता वैश्यास्तु विज्ञेयाः कृष्णाः शूद्रा उदाहृताः ।
ब्राह्मणो विभृयाच्छ्वेतान् रक्तान् राजा तु धारयेत् ॥ १०

पीतान्वैश्यस्तु विभृयात् कृष्णाञ्छूद्रस्तु धारयेत् ।
ताम्रा स्निग्धा दृढा स्थूलाः कण्टकैः संयुताः शुभाः ॥ ११

क्रिमिदष्टं छिन्नभिन्नं कण्टकैर्हीनमेव च ।
व्रणयुक्तमवृत्तं च षड्रुद्राक्षान् विवर्जयेत् ॥ १२

स्वयमेव कृतद्वारं रुद्राक्षं स्यादिहोत्तमम् ।
यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत् ॥ १३

समान् स्निग्धान् दृढान् वृत्तान् क्षौमसूत्रेण धारयेत् ।
सर्वगात्रेण साम्येन सामान्यानि विचक्षणः ॥ १४

[1] निकषे हेमरेखेव यस्य रेखा प्रदृश्यते ।
तदक्षमुत्तमं विद्यात्तद्धार्यं शिवपूजकैः ॥ १५

शिखायामेकरुद्राक्षं [2] त्रिंशत्तु शिरसा वहेत् ।
षट्त्रिंशत्तु गले दद्याद्बाह्वोष्षोडश षोडश ॥ १६

द्वादशं मणिबन्धेऽपि स्कन्धे पञ्चशतं वहेत् ।
अष्टोत्तरशतैर्मालां जपयज्ञे प्रकल्पयेत् ॥ १७

द्विसरं त्रिसरं वापि सराणां पञ्चकं तु वा ।
सराणां सप्तकं वापि बिभृयात् कण्ठदेशतः ॥ १८

मकुटे कुण्डले चैव कर्णिकाहारकेषु च ।
केयूरकटके चैव कुक्षिबन्धे विशेषतः ॥ १९

सुप्ते पीते सदाकालं रुद्राक्षान् धारयेन्नरः ।
त्रिशतं त्वधमं पञ्चशतं मध्यममुच्यते ॥ २०

सहस्रमुत्तमं प्रोक्तमेवं भेदेन धारयेत् ।
शिरसीशानमन्त्रेण कण्ठे तत्पुरुषेण च ॥ २१

अघोरेण गले धार्यं तेनैव हृदयेऽपि च ।
अघोराख्येन मन्त्रेण करयोर्धारयेत्सुधीः ॥ २२

---

[1] निवार्य–पा. [2] त्रिशतं–पा.

पञ्चाशदक्षसहितां व्योमव्यापीति चोदरे।
पञ्चब्रह्मभिरङ्गैश्च त्रिमाला पञ्च सप्त च ॥ २३

अथवा मूलमन्त्रेण सर्वाण्यक्षाणि धारयेत्।

अथ हैनं कालाग्निरुद्रं भगवन्तं भुसुण्ठः पप्रच्छ, रुद्राक्षाणां मुखभेदेन यदक्षं यत्स्वरूपं यत्फलमिति नस्तत्स्वरूपमुखयुक्तमरिष्टनिरसकमभीष्टफलप्रदं ब्रूहीति। स होवाच कालाग्निरुद्रः, यच्छ्रुत्वा सद्योमुक्तिः श्रोतॄणां शिवप्रसादस्तद्वदामि सावधानमनाः शृण्विति होवाच।

एकवक्त्रं तु रुद्राक्षं परतत्त्वस्वरूपकम् ॥ २४

तद्धारणात्परे तत्त्वे लीयते विजितेन्द्रियः।
द्विवक्त्रं चैव रुद्राक्षमर्धनारीश्वरात्मकम् ॥ २५

धारणादर्धनारीशः प्रीयते तस्य नित्यशः।
त्रिवक्त्रमनलः साक्षात्स्त्रीहत्यां दहति क्षणात् ॥ २६

त्रिमुखं चैव रुद्राक्षमग्नित्रयमुदाहृतम्।
तद्धारणेन हुतभुक्तुष्यति स्फुटकामदः ॥ २७

चतुर्मुखं तु रुद्राक्षं ब्रह्मरूपमुदाहृतम्।
पञ्चवक्त्रं तु रुद्राक्षं पञ्चब्रह्मस्वरूपकम् ॥ २८

पञ्चवक्त्रः स्वयं ब्रह्मा ब्रह्महत्यां व्यपोहति।
तस्य धारणमात्रेण स तुष्यति सदाशिवः ॥ २९

षड्वक्त्रकं तु रुद्राक्षं कार्तिकेयाधिदैवतम्।
विनायकाधिदैवं च प्रवदन्ति मनीषिणः ॥ ३०

सप्तवक्त्रं तु रुद्राक्षं सप्तमालाधिदैवतम्।
(तद्धारणान्महाश्रीः स्यान्महदारोग्यमुत्तमम्।
महती ज्ञानसम्पत्तिः शुचिर्धारणतः सदा ॥
अष्टवक्त्रं तु रुद्राक्षमष्टमात्रधिदैवतम्।)
वस्वष्टकप्रियं चैव गङ्गाप्रीतिकरं शुभम् ॥ ३१

तद्धारणादिमे प्रीता भवेयुस्तत्ववादिनः।
नववक्त्रं तु रुद्राक्षं नवशक्त्यधिदैवतम् ॥ ३२

तस्य धारणमात्रेण प्रीयन्ते नवशक्तयः।
दशवक्त्रं तु रुद्राक्षं यमदैवमुदाहृतम् ॥ ३३

दशाशाप्रीतिजनकं धारणे नात्र संशयः।
एकादशमुखं चाक्षं रुद्रैकादशदैवतम् ॥ ३४

तदिन्द्रदैवतं चाहुः सदा सौभाग्यवर्धनम्।
रुद्राक्षं द्वादशमुखं महाविष्णुस्वरूपकम् ॥ ३५

द्वादशादित्यदैवं च बिभर्त्येव हि तत्परः।
त्रयोदशमुखं चाक्षं कामदं शुद्धिदं शुभम् ॥ ३६

तस्य धारणमात्रेण कामदेवः प्रसीदति।
चतुर्दशमुखं चाक्षं रुद्रनेत्रसमुद्भवम् ॥ ३७

सर्वव्याधिहरं चैव सदारोग्यमवाप्नुयात्।
मद्यं मांसं च लशुनं पलाण्डुं शिग्रुमेव च ॥ ३८

श्लेष्मातकं विड्वराहमभक्ष्यान्वर्जयन्नरः।
ग्रहणे विषुवे चैव ग्रहणे सङ्क्रमेऽपि च ॥ ३९

दर्शे च पूर्णमासे च पुण्येषु दिवसेषु च।
रुद्राक्षधारणात्सद्यः सर्वैः पापैः प्रमुच्यते ॥ ४०

रुद्राक्षमूलं तद्ब्रह्मा तन्नाळं विष्णुरुच्यते।
तन्मुखं रुद्र इत्याहुस्तद्बिन्दुः सर्वदेवताः ॥

य इमामुपनिषदं बालो वा युवा वा वृद्धो वाधीयमानः स शिवो भवति। स गुरुः सर्वेषां मन्त्राणामुपदेष्टा भवति। एतैरेव होमं कुर्यादेतैरेवार्चनं तथा। तद्रक्षोघ्नं मृत्युतारकं गुरुणो लब्धं कण्ठे बाहौ शिखायां वा बध्नीत ॥

सप्तद्वीपवती भूमिर्दक्षिणार्थं न कल्पयेत्। ४१

तस्माच्छ्रद्धया यां कांचिद्गां दद्यात्सा दक्षिणा भवति। य इमामुपनिषदं ब्राह्मणो वा क्षत्रियो वा सायमधीयानो दिवसकृतं पापं नाशयति। मध्याह्नेऽधीयान[1]ष्षण्मासकृतं पापं नाशयति।

---

[1] षट्जन्मकृतं—इत्युपनिषदि.

([1]सायमधीयानो वत्सरकृतं पापं नाशयति)। सायंप्रातरधीयानोऽनेकजन्मकृतं पापं नाशयति। य इमामुपनिषदं ब्राह्मणो वीरशैवोऽधीते षट्सहस्रलक्षपञ्चाक्षरजापिनः फलमवाप्नोति। ब्रह्महत्यायाः पूतो भवति। सुरापानात्पूतो भवति। स्वर्णस्तेयात्पूतो भवति। अभोज्यभोजनात्पूतो भवति। तत्संयोगात्पूतो भवति। सर्वेषु यज्ञेषु दीक्षितो भवति। सर्वेषु तीर्थेषु स्नातो भवति। अभक्ष्यभक्षणात्पूतो भवति। अगम्यागमनात्पूतो भवति। गुरुतल्पगमनात्पूतो भवति। पतितसंभाषणात्पूतो भवति। पङ्क्तिशतसहस्रं पुनाति। शिवसायुज्यमेति। न स पुनरावर्तते न स पुनरावर्तते। ओं सत्यमिति॥

ब्रह्मवैवर्ते—

सम्यग्विभूत्या महिमाधुनोक्तो
रुद्राक्षबीजस्य शिवात्मकस्य।
यथा विधानं वद विस्तरेण
तत्कीदृशं केन कदा तु धार्यम्॥

नाथशर्मा—

दैत्यः पुरासीत्त्रिपुरः प्रसिद्धो
नाम्नानवद्यैरखिलैरजेयः।
हताः सुरा येन रथाङ्गपाणि-
र्जितो विरिञ्चः ककुभामधीशाः॥
हतावशिष्टैर्गिरिशोऽतिभीतैः
स्तुतः सहस्रं शरदां प्रसन्नः।
अचिन्तयत्तं प्रतिहन्तुकामः
शस्त्रं दुरापं सकलामरौघैः॥
स्फुरत्स्फुलिङ्गं तपनप्रकाशं
सर्वाशुभघ्नं जगतोऽवनाय।
उन्मील्य नेत्राणि शरत्सहस्र-
मघोरमस्त्रं रिपुनाशनार्थम्॥

---

[1] उपनिषदि नास्ति.

तदाकुलं तस्य बभूव चाक्ष्णां
त्रयं ततोऽश्रूण्यपतंश्च तेभ्यः ।
रुद्राक्षवृक्षा विटपैर्बभूवुः
शिवाज्ञया सर्वजगद्धिताय ॥

रुद्राक्षवृक्षास्तपनाक्षिजाता-
स्ते द्वादश स्युः कपिलाप्रभेदैः ।
चन्द्राक्षिजाः षोडश शुभ्रवर्णाः
कृष्णा दश स्युर्ज्वलनाक्षिजाताः ॥

ब्राह्मं सितं कापिलवर्णयुक्तं
क्षात्रं तु वैश्यं ह्युभयात्मकं तत् ।
कृष्णं तु शूद्रं कथयन्ति बीजं
रुद्राक्षबीजात्प्रभवन्ति जात्याः ॥

एकाननं शङ्कर एव साक्षा-
द्रुद्राक्षबीजं विनिहन्ति हत्याम् ।
द्विवक्त्रबीजं बहुगोवधघ्नं
देवेशदैवत्यमलभ्यमक्ष्णाम् ॥

अग्नेयमुक्तं वदनत्रयं य-
द्योषिद्वधघ्नं दधतां क्षणेन ।
चतुर्मुखं यच्चतुराननीयं
नरस्य हत्यां क्षणतो विहन्ति ॥

कालाग्निरुद्रं ननु पञ्चवक्त्र-
मभक्ष्यदुस्सङ्गमपातकघ्नम् ।
स्कान्दं यदा षड्वदनं करेण
दक्षेण धार्यं द्विज[1]घातशुध्द्यै ॥

सप्ताननं भोगिपतिर्ह्यनन्तः
स्तेयादिशुद्धिं विदधाति सद्यः ।
वैनायकं ह्यष्टमुखं सवर्णं
स्फुटं गुरुस्त्रीगमनाद्यघघ्नम् ॥

[1] हत्य–पा.

नवाननं भैरव एव देवो
भुक्तिं च मुक्तिं शिवतुल्यशक्तिम् ।
करोति वामेन करेण धार्यं
हत्यायुतानामपि हन्ति कोटिम् ॥

हरिः स्वयं यद्दशवक्त्रबीजं
पिशाचभूतग्रहरक्षसां च ।
वेतालसर्वप्रतियोधिसिंह-
[1]व्याघ्रादिरौद्रं विनिहन्ति शीघ्रम् ॥

एकादशास्यं [2]दशकैकरौद्रं
धार्यं शिखायां विधिनानवद्ये ।
नराश्वमेधायुतवाजपेय-
सहस्रगोदानसहस्रतुल्यम् ॥

यद्वक्त्राणि दशद्वयेन कथितं तद्भास्करीयं स्मृतं
वर्णस्थं रवितुष्टिकृद्द्वयमधैर्गोमेधपुण्यैः समम् ।
सर्वं सिध्यति भोगभाग्यमखिलं भ्रूणार्यमातापितृ-
भ्रातृस्त्रीवधतो विशुध्यति दधन्नास्मात्परं विद्यते ॥

रुद्राक्षमेकं शिरसा विधार्यं
षट्त्रिंशमालां विदधीत मूर्ध्नि ।
द्वात्रिंशकैः कण्ठतलेन धार्यं
शतार्धकॢप्ता हृदये च धार्या ॥

कलाक्षमाला [3]भुजयोरिनाक्षे
धार्याक्षमाला मणिबन्धसीम्नि ।
अष्टोत्तरैर्वा शतकैश्च माला ॥
तदर्धकॢप्ता हि तदर्धमाला ॥

कण्ठे धृता येन धृताक्षमाला
जप्तायुताद्यन्नसहस्रपुण्यम् ।

---

[1] व्याघ्रादिकानां–पा. [2] दश चैकरौद्रं–पा. [3] रिनाक्षैः–पा.

रुद्राक्षाष्टशतेन येन कलिता माला सदा धार्यते
कण्ठे तेन लभेत् क्षणात्क्षणमहो पुण्यं महेज्याधिकम् ।
विन्ध्याद्रौ मृतकः खरोऽपि यदभूद्रुद्राक्ष[1]भारावहः
कैलासे शतकल्पमीशसदृशो हाहानवद्ये गणः ॥

श्वेतं रक्तमथापि पीतमसितं विप्रादिकानां स्मृतं
रुद्राक्षस्य लभेद्यथातथमिदं धार्यं शिखायां करे ।
कण्ठे कर्णयुगोपवीतहृदयेष्वाबध्य रूप्यादिभिः
पञ्चार्णप्रणवात्मकाख्यमनुभिर्मुक्तोऽनवद्यो भवेत् ॥

स्नाने वा जपहोमयोर्व्रतविधौ देवार्चनादानयो-
र्दीक्षाश्राद्धकयोःक्रतौ सभसितो रुद्राक्षमालाधरः ।
कुर्यात्कर्म च वैदिकं च सकलं स्यादक्षयं तत्फलं
नो चेद्व्यर्थमिदं भवत्ययमहो पापोऽनवद्ये ध्रुवम् ॥

केचित्सूतकशावयोर्जलमलोत्सर्गे च सङ्गे [2]स्त्रियाः
शुद्धां वक्षसि मालिकां न दधते स्वायुःक्षयः स्यादिति ।
पूज्यं योज्य मुखं मुखेन सदृशो मुक्ताप्रवालासितैः
सौवर्णैर्मणिभिर्दधन्मधुफलं मर्त्योऽनवद्ये भवेत् ॥

रुद्राक्षं वपुषा धरन्यदि मृतः श्वानोऽपि मुक्तो भवे-
द्यादृग्नन्त्यमुहूर्तके शिवपुरं गच्छेत्स नो जायते ।
किं नूक्तैर्बहुभिः समन्त्रकमिदं स्वाङ्गे सदा धारकः
संसारं न पुनः प्रयाति मनुजो वक्ष्येऽनवद्ये तव ॥

रुद्राक्षद्रुमपुष्पपल्लवपुटस्पृष्टानिलस्पर्शना-
द्दूरस्थास्तरवस्तृणान्यपि लता यान्त्यक्षयं तत्फलम् ।
तत्पुण्यद्रुमजातलक्षणमणिं बिभ्रत्त्वजस्रं नरो
मुञ्चेत्संसृतिबन्धनादिति पुनश्चित्रं न किंचित्प्रिये ॥

---

[1] मालावहः–पा. [2] स्त्रियोऽशुद्धावक्षकमालिकां–पा.

इत्येवं वचनैर्ज्ञात्वा रुद्राक्षोत्पत्तिमादरात् ।
यो धत्ते स बुधः श्रीमानन्ते सायुज्यमाप्नुयात् ॥

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञश्रीनीलकण्ठशिवाचार्यकृते
क्रियासारे निगमागमसारसङ्ग्रहे
नवमोपदेशः समाप्तः

---

## दशमोपदेशः

दशमे चोपदेशेऽस्मिन् रुद्राक्षाणां तु धारणम् ।
प्रतिपाद्यत आचारलब्धशैव [1]मतोदितम् ॥ १

रुद्राक्षाणां धारणस्य महात्म्यं वर्णयामि वः ।
इत्यारभ्य स्कन्दभास्वत्पुराणे प्रतिपादितम् ॥ २

सर्वपापहरं पुण्यं पठतां शृण्वतामपि ।
भक्तिहीनोऽथवा भक्तो मूर्खो मूर्खतरोऽपि वा ॥ ३

रुद्राक्षं धारयेद्यस्तु मुच्यते पातकैरयम् ।
महाव्रतमिदं प्राहुर्मुनयस्तत्त्वदर्शिनः ॥ ४

रुद्राक्षधारणं पुण्यं केन वा सदृशं भवेत् ।
सहस्रं धारयेद्यस्तु रुद्राक्षाणां धृतव्रतः ॥ ५

सुरासुरा नमन्त्येनं यथा रुद्रस्तथैव सः ।
अभावे तु सहस्रस्य बाह्वोष्षोडश षोडश ॥ ६

एकं शिखायां करयोर्द्वादश द्वादश द्वयोः ।
द्वात्रिंशत् कण्ठदेशे तु प्रत्येकं कर्णयोश्च षट् ॥ ७

उरस्यष्टोत्तरशतं चत्वारिंशच्च मस्तके ।
धारयेद्यस्तु रुद्राक्षं रुद्रवत्पूज्यते हि सः ॥ ८

---

[1] मतेडितम्-पा.

मुक्ताप्रवालस्फटिकरौप्यवैदूर्यकाञ्चनैः ।
धारयेद्यस्तु रुद्राक्षान् स रुद्रो नात्र संशयः ॥ ९

केवलं वापि रुद्राक्षान् रुद्रमुद्रान् बिभर्ति यः ।
तं न स्पृशन्ति पापानि तमांसीव विभावसुम् ॥ १०

रुद्राक्षमालया जप्तो मन्त्रोऽनन्तफलप्रदः ।
(अरुद्राक्षजपः पुंसां तावन्मात्रफलप्रदः ।)
यस्याङ्गे नापि रुद्राक्ष एकोऽपि बहुपुण्यदः ॥ ११

तस्य जन्म निरर्थं स्यात्त्रिपुण्ड्ररहितं यथा ।
मूर्ध्नि विन्यस्य रुद्राक्षं यः स्नाति मतिमान्नरः ॥ १२

गङ्गास्नानफलं तस्य जायते नात्र संशयः ।
पूजयेद्यस्तु रुद्राक्षं कृत्वा तोयाभिषेचनम् ॥ १३

यत् फलं लिङ्गपूजायां तदेवाप्नोति निश्चितम् ।
एकाननाः पञ्चमुखास्तथैवैकादशाननाः ॥ १४

चतुर्दशाननाः केचिद्रुद्राक्षा लोकपूजिताः ।
भक्त्या तत्पूजयेन्मर्त्यो दरिद्रोऽपि श्रियं लभेत् ॥ १५

शृणुध्वमवधानेन पुण्याख्यानानि भूसुराः ।
नन्दिग्रामे पुरा काचिन्महानन्देति विश्रुता ॥ १६

बभूव वारवनिता सर्वावयवसुन्दरी ।
छत्रं पूर्णेन्दुसङ्काशं यानं मणिविराजितम् ॥ १७

चामराणि सुदण्डानि पादुके च हिरण्मये ।
विचित्राण्यम्बराण्यस्याः शय्याश्चन्द्रप्रभानिभाः ॥ १८

गावो महिष्यः शतशो वासाश्च बहुसङ्ख्यकाः ।
गन्धकुङ्कुमकर्पूरकस्तूरीलेप इत्यसौ ॥ १९

भूषणानि परार्ध्यानि कोटिसङ्ख्यायुतं धनम् ।
शिवपूजारता नित्यं सत्यधर्मपरायणा ॥ २०

सदा शिवकथासक्ता शिवनामजपोत्सुका ।
शिवभक्तान् जनान् दृष्ट्वा प्रणमन्ती सदा मुदा ॥ २१

विनोदहेतोः सा वेश्या नाट्यमण्डपमध्यगम् ।
रुद्राक्षैर्भूषितं चैकं मर्कटं चैव कुक्कुटम् ॥ २२

करतालैश्च गीतैश्च सदा नर्तयति स्वयम् ।
पुनश्च विहसत्युच्चैः सखीभिः परिवारिता ॥ २३

रुद्राक्षैः कृतकेयूरकण्ठाभरणकुण्डलः ।
मर्कटः शिक्षया तस्याः पुरो नृत्यति बालवत् ॥ २४

शिखाग्रे बद्धरुद्राक्षः कुक्कुटः कपिना सह ।
चिरं नृ[1]त्तस्य तत्त्वज्ञः पश्यतां चित्रमावहन् ॥ २५

कालेन निधनं प्राप्ताविमौ मर्कटकुक्कुटौ ।
भद्रसेनाख्यनृपतेः काश्मीरविषयेशितुः ॥ २६

मर्कटस्तनयो नाम्ना सुधर्मः सम्बभूव हि ।
कुक्कुटस्तदमात्यस्य तारकाख्यः सुतोऽभवत् ॥ २७

तावुभौ परमस्निग्धौ कुमारौ रूपसुन्दरौ ।
विद्याभ्यासरतौ बालौ सहक्रीडां प्रचक्रतुः ॥ २८

तावुभौ सर्वगात्रेषु रुद्राक्षकृतभूषणौ ।
हारकेयूरमकुटकुण्डलादिविभूषणौ ॥ २९

हेमरत्नमयं मुक्त्वा रुद्राक्षं दधतुश्च तौ ।
रुद्राक्षमालिनौ नित्यं रुद्राक्षवरकङ्कणौ ॥ ३०

रुद्राक्षकण्ठाभरणौ सदा रुद्राक्षकुण्डलौ ।
कुले महति सञ्जातौ तौ भुक्त्वा भोगमीप्सितम् ॥ ३१

पूर्वाभ्यासेन रुद्राक्षे श्रद्धाभक्तिसमन्वितौ ।
कालेन शाम्भवं प्राप्तौ पदं परमशोभनम् ॥ ३२

बृहज्जाबालोपनिषद्यपि—

अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ, अधीहि भगवन् रुद्राक्षधारणविधिं ब्रूहीति ।

तस्मिन् समये निदाघजडभरतदत्तात्रेयकात्यायनभरद्वाज-कपिलवसिष्ठपिप्पलादादयश्च कालाग्निरुद्रं परिसमेत्योचुः । अथ कालाग्निरुद्रः किमर्थं भवतामागमनमिति । ते होचुः रुद्राक्षधाण-विधिं वै सर्वे श्रोतुमिच्छामह इति । अथ कालाग्निरुद्रः प्रोवाच,

[1] नृत्यति नृत्तज्ञः—पा.

रुद्रस्य नयनादुत्पन्ना रुद्राक्षा इति लोके ख्यायते। अथवा सदाशिवः संहारकाले संहारं कृत्वा संहाराक्षं मुकुलीकरोति, तन्नयनाज्जाता रुद्राक्षा इति व्याख्यायते तस्माद्रुद्राक्षत्वमिति कालाग्निरुद्रः प्रोवाच।

तद्रुद्राक्षे वाग्विषयीकृते दशगोप्रदानेन यत् फलमवाप्नोति तत् फलमश्नुते। स एष भस्मज्योती रुद्राक्ष इति होवाच। तद्रुद्राक्षं करेण स्पृष्टुमिच्छन् शतगोप्रदानफलं भवति। [1] [तद्रुद्राक्षधारणमात्रेण सहस्रगोप्रदानफलं भवति। तद्रुद्राक्षे करयोर्धार्यमाणे सति द्विसहस्रगोदानफलं भवति। रुद्राक्षे कण्ठे धार्यमाणे त्रिसहस्रगोदानफलं भवति।] कर्णयोर्धार्यमाणे एकादशसहस्रगोदानफलं भवति। एकादशरुद्रत्वं वा गच्छति। शिरसि धार्यमाणे कोटिगोप्रदानफलं भवति। एतेषां स्थानानां कर्णयोः फलं वक्तुं न शक्यमिति स होवाच।

अथ सनत्कुमारः पप्रच्छ रुद्राक्षप्रदानफलमस्त्येवेति वा इति। अथ कालाग्निरुद्रः प्रोवाच, अष्टशतरुद्राक्षं दत्त्वा अष्टशतरुद्राक्षं धारयेत् भूवलयदानेन यत् फलमवाप्नोति तत् फलमश्नुते। स एष ज्योतीरुद्राक्षीति होवाच। अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ रुद्राक्षसहस्रं क्रमेण धर्तुं शक्यं वा इति। अथ कालाग्निरुद्रः प्रोवाच, रुद्राक्षधारणं कर्तुमधिवासादिप्राणप्रतिष्ठान्तं कृत्वा रुद्राक्षान्वर्षमेकं तु धारयेत्। ब्रह्मत्वं गच्छति। द्विसहस्ररुद्राक्षं द्वे वर्षे धारयेत्। विष्णुत्वं गच्छति। त्रिसहस्ररुद्राक्षं त्रीणि वर्षाणि धारयेत्। सदाशिवत्वं गच्छति। न स पुनरावर्तते न स पुनरावर्तते। स एको ज्योतीरुद्राक्षीति होवाच।

अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ, सर्वोपनिषत्सूक्तं धारणफलं ब्रूहीति। अथ कालाग्निरुद्रः प्रोवाच। सर्वोपनिषत्सारं ब्रवीम्यवधारयेति। तत्रैष श्लोको भवति॥ इति।

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञश्रीनीलकण्ठशिवाचार्यकृते निगमागमसारसंग्रहे क्रियासारे रुद्राक्षधारणनिरूपणं नाम

दशमोपदेशः

---

[1] मातृकायां नास्ति.

## एकादशोपदेशः

एकादशोपदेशेऽस्मिन् रुद्राक्षाणां प्रशंसनम् ।
निगमागमदृष्टानि वचनान्यखिलं क्रमात् ॥ १

पुरा पुष्करदेशस्य राजासीत्सौम्यनामवान् ।
सदा दुर्मार्गनिरतो नित्यं वेश्यारतौ प्रियः ॥ २

तस्य भार्या वसुमती रूपयौवनशालिनी ।
राज्ञो वेश्याभिगमनं स्वात्म[1]न्यरतिमीक्ष्य सा ॥ ३

दुःखाक्रान्तेन मनसा चिन्तामाप निरन्तरम् ।
भार्यां पुरोहितस्येत्य ततः सत्यव्रताह्वयाम् ॥ ४

विज्ञाप्य राज्ञो दुश्चेष्टां निजदुःखस्य कारणम् ।
स्वस्यामभिरतिस्तस्य केन वा हेतुना भवेत् ॥ ५

इति पृष्टवतीमेनां सा पुनः प्रत्यभाषत ।
रुद्राक्षधारणं भद्रे सर्ववश्यकरं वरम् ॥ ६

सर्वपापहरं नृणां सर्वव्याधिनिकृन्तनम् ।
भूतप्रेतपिशाचाद्या न च हिंसन्ति तं नरम् ॥ ७

नच दंशन्ति सर्पाश्च धार्यते येन वा यया ।
[2]इत्युक्त्वा तां ददौ तस्या रुद्राक्षं सा सुपावनम् ॥ ८

सा तदादाय विश्वासात्कण्ठदेशे बबन्ध हि ।
तस्यामासक्तहृदयस्तद्रात्रौ स महीपतिः ॥ ९

प्रविश्य भवनं तस्यास्तया रेमेऽतिमोहितः ।
एवमेव दिवारात्रं क्रीडयामास तां नृपः ॥ १०

तदा विचारकाभावात्सेना तस्य महीपतेः ।
इतस्ततस्तु दुद्राव मुक्त्वैवं मदनातुरम् ॥ ११

सपत्नः सहसा कश्चिद्रुरोधास्य पुरं नृपः ।
चतुरङ्गबलैः साकं कृतकोलाहलारवः ॥ १२

श्रुत्वैतत्स महीपालः सेनया चावशिष्टया ।
प्रत्यग्रहीत्तमायान्तं कृतकोलाहलारवम् ॥ १३

---

[1] न्यप्रीति–पा. [2]इत्युक्त्वैकं ददौ–पा.

राज्ञोऽस्य सेना सा शीघ्रं दुद्रावेतस्ततस्तराम् ।
एकाकी प्राप नगरं राजासावतिधावनात् ॥ १४

प्राप्याशु भवनं स्वस्य पत्न्याः सर्वं विबोध्य च ।
तस्थावास्थाविनिर्मुक्तः स्वराज्ये दुःखितान्तरः ॥ १५

तदास्य महिषी प्राह राजानं वीक्ष्य दुःखितम् ।
जयो भविष्यति क्षिप्रं धृते रुद्राक्षभूषणे ॥ १६

अस्मिन्नर्थे न सन्देहः कर्तव्यो भवता प्रभो ।
श्रोतव्यस्स पुराणेषु कुशलो वः पुरोहितः ॥ १७

इति तस्या वचः श्रुत्वा समाहूय पुरोहितम् ।
श्रुत्वा रुद्राक्षमाहात्म्यं सर्वदुःखनिवारकम् ॥ १८

बभार स महीपालो रुद्राक्षाणां सहस्रकम् ।
ततः स्वभवनं प्राप्य भार्यया सह भूमिपः ॥ १९

माहात्म्यं नितरामस्य वर्णयन् परया मुदा ।
स्वदेशस्थजनान् सर्वान् चक्रे रुद्राक्षधारिणः ॥ २०

तस्यास्तां सुकुमारौ द्वौ कुमारौ सर्वलक्षणौ ।
तत्रै[1]कोऽतिरथाख्योऽन्यः स्मृतस्त्वतिरथाख्यया ॥ २१

([2]बभूवतुस्तथा कन्ये सर्वलक्षणसंयुते ।
आद्या सकलकालज्ञा स्मृता चित्राङ्गना[3]ख्यया ॥) २२

एतयोरपि रुद्राक्षं बबन्धायं महीपतिः ।
ब्रह्मनाथस्य तनुजः कमलाक्षाह्वयो युवा ॥ २३

वसन् केरलदेशेऽयं विवाह्यास्य कुमारिकाम् ।
ज्येष्ठां सकलकालज्ञां शास्त्रोक्तेनैव वर्त्मना ॥ २४

तद्धात्रौ भवने तस्मिन् तावुभौ दम्पती युतौ ।
तदानीं कमलाक्षोऽयं भूषणानि स्त्रियः करे ॥ २५

दत्वा स्वीयानि तस्याश्च पेटिकायां निधाय सः ।
संयोगायाह्वयामास तां भार्यां मदनातुरः ॥ २६

---

[1] कोऽपि–पा. [2] कस्यांचित् मातृकायां नास्ति. [3] परा–पा.

न धार्यते त्वया पूर्वं रुद्राक्षवरभूषणम् ।
तन्मया सह सङ्गस्ते न युक्तः खलु सर्वदा ॥ २७

इति भार्यावचः श्रुत्वा कमलाक्षो वचोऽब्रवीत् ।
धार्यते भूषणं दिव्यं नानारत्नविचित्रितम् ॥ २८

तस्मादस्य किमाधिक्यं रुद्राक्षस्य वरानने ।
इति तस्य वचः श्रुत्वा प्रत्युवाच महीपतिम् ॥ २९

न धार्यते महामोहाद्रुद्राक्षवरभूषणम् ।
महापातकशेषेण दुष्टोऽयं न हि संशयः ॥ ३०

न तेन सहवासो वा संयोगोऽपि हि युज्यते ।
अस्मिन्नर्थे पुराणानि प्रमाणानि न संशयः ॥ ३१

अथवा तव विश्वासः कस्मिन् वास्ति नरोत्तम ।
श्रोतव्यो मत्पुरः सोऽयं सर्वशास्त्रार्थकोविद ॥ ३२

इति भार्यावचः श्रुत्वा राजा प्राह पुनर्वचः ।
इममर्थं यदि ब्रूयात्सम्मतो मम पण्डितः ॥ ३३

भविष्यामि तदा भार्या तवाहं पुरुषोऽपि सन् ।
भविष्यसि त्वं पुरुषः सत्यमुक्तं वरानने ॥ ३४

लीलयैवं वचः प्राह भार्यां वीक्ष्यायमग्रतः ।
तस्य तद्वचनं श्रुत्वा तथेत्यङ्गीचकार सा ॥ ३५

तस्यां रात्रौ व्यतीतायां दम्पती तौ समुत्थितौ ।
कल्याणमण्डपं प्राप्तौ सर्वाभरणभूषितौ ॥ ३६

तदानीमागतास्तत्र ब्राह्मणाः केचनोत्तमाः ।
द्रष्टुं कल्याणमनयोर्भूपालाश्च समागताः ॥ ३७

समागतानियं वीक्ष्य भर्तारमवदत्सुधीः ।
सम्मतस्तव कोवा [1] स्यात्तेषु विप्रेषु भूमिप ॥ ३८

रुद्राक्षस्य वरिष्ठत्वं प्रष्टुं तद्वक्तुमप्यहो ।
इति तस्या वचः श्रुत्वा स्मितपूर्वमभाषत ॥ ३९

---

[1] स्यादेषु—पा.

पतिः---

कल्याणमण्टपे तस्मिञ्छेषशायी जनार्दनः ।
चित्ररूपी चित्रकुडये यस्तिष्ठति वरानने ॥ ४०

अनेनोक्तं यदि तदा त्वदुक्तं तत्तथा भवेत् ।
उत्थाय तरसा स्थित्वा बद्धाञ्जलिपुटेन वै ॥ ४१

इति भर्तुर्वचः श्रुत्वा तथेत्युक्त्वा पुनश्च सा ।
बद्धाञ्जलिपुटा विष्णुं चित्ररूपिणमाह हि ॥ ४२

अस्ति चेन्महिमा विष्णो रुद्राक्षस्याघनाशिनः ।
रुद्राक्षधारिणा पापं कृतं पुण्यफलप्रदम् ॥ ४३

कृतं च पुण्यं पापाय येनारुद्राक्षधारिणा ।
अयमर्थो यदि हरे सत्यो वेदान्तसम्मतः ॥ ४४

सर्वाविरुद्धः सर्वत्र विश्रुतस्तव सम्मतः ।
तदाधुना? शीघ्रमुत्थायास्मद्भुजङ्गतः ॥ ४५

स्थित्वा सुखासने स्वामिन् वद तथ्यं शिवाज्ञया ।
इत्युक्तमात्रेण हरिश्चित्ररूपी भयान्वितः ॥ ४६

सत्यं सत्यं त्वया प्रोक्तं सर्ववेदान्तसम्मतम् ।
माहात्म्यमस्य देवेशः केवलं वेद शङ्करः ॥ ४७

जातेन यत्र कुत्रापि जातौ मर्त्येन शोभनं ।
धार्यते पावनं स्वाङ्गे रुद्राक्षवरभूषणम् ॥ ४८

स एव धन्यः पुण्यस्य बिभ्येऽहं तस्य [1] तप्यतः ।
बहुनोक्तेन किं साध्वि सर्वैर्धार्यमिदं ध्रुवम् ॥ ४९

इत्युक्त्वा वासुदेवोऽयं पुनः शिश्ये यथा पुरा ।
तदेतदद्भुतं दृष्ट्वा सर्वे तत्र जनाः स्थिताः ॥ ५०

आश्चर्यमापुरत्यन्तं तस्यां विश्वासमाययुः ।
कमलाक्षोऽपि राजायमाश्चर्येण समन्वितः ॥ ५१

विचारमाप चात्यर्थं स्मृत्वास्या वचनं [2] सुधीः ।
तदानीं तं समावृत्य तस्य भृत्यवधूजनाः ॥ ५२

---

[1] सत्यतः–पा. [2] हृदि–पा.

राजंस्त्वमधुना शीघ्रं मुक्त्वा पुरुषलक्षणम् ।
स्त्रीचिह्नवस्त्रभूषाद्यैर्भव स्ववचनं स्मरन् ॥ ५३

परिहासवचः श्रुत्वा नृपोऽयं व्रीडया नतः ।
स्वयं भृत्यजनं प्राह यद्येषा पुरुषो भवेत् ॥ ५४

इदानीमहमेतस्या भवेयं वल्लभा वधूः ।
इत्युक्तमात्रेण तदा पुरुषोऽभूदियं वधूः ॥ ५५

कमलाक्षोऽपि सहसा स्त्रीत्वं प्राप्य शिवाज्ञया ।
कमलाक्षीति विख्याता तदारभ्येयमङ्गना ॥ ५६

[1] सेयं सकलकालज्ञा भार्यया प्रथितो भुवि ।
कमलाक्षीप्रमाणेन भर्तारं वीक्ष्य चाब्रवीत् ॥ ५७

प्रयच्छ मम रुद्राक्षं सर्वपापौघनाशनम् ।
सर्ववेदान्तसंसिद्धं साक्षादीशात्मकं परम् ॥ ५८

न ज्ञायतेऽस्य माहात्म्यं केनापि प्रियपावनम् ।
दत्तं भक्त्या समादाय दधौ स्वाङ्गे मुदान्विता ॥ ५९

तावुभौ दम्पती सम्यक् भुक्त्वा भोगांश्च तस्थतुः ।
कमलाक्षीपिता योऽसौ ब्रह्मनाथाह्वयो नृपः ॥ ६०

केरलेशं समुद्वीक्ष्य सौम्यवन्तं महीपतिम् ।
मम पुत्रोऽगमत्स्त्रीत्वं कमलाक्षो महीपतिः ॥ ६१

सुता तवापि सम्प्राप्ता पुरुषत्वं सुशोभनम् ।
अत्याश्चर्यमिदं दृष्टमनयोश्चरितं [2] महत् ॥ ६२

अस्ति मे तनयोऽप्यन्यो विबुधाख्यो महीपतिः ।
तस्य ते कन्यकामग्र्यां ख्यातां चित्राङ्गनाख्यया ॥ ६३

प्रयच्छ विधिना राजन् सर्वलक्षणसंयुताम् ।
ब्रह्मनाथवचः श्रुत्वा सौम्यवान् पृथिवीपतिः ॥ ६४

तथेति च ददौ कन्यां विबुधायात्मजां पराम् ।
विबुधोऽपि विवाह्यैनां धृतरुद्राक्षभूषणः ॥ ६५

---

[1] सोऽयं–पा. [2] नृप–पा.

आनयित्वा स्वकं देशं प्राप कल्याणवेषतः ।
तत्र स्थित्वा[1] तु रुचिरं भोगांश्च बुभुजे तथा ॥ ६६

सौम्यवान् ब्रह्मनाथोऽपि धृतरुद्राक्षभूषणौ ।
कथयन्तौ च माहात्म्यं पुराणेषु प्रसिद्धिमत् ॥ ६७

भुक्त्वा भोगांश्च विपुलान् दृष्ट्वा दृश्यं च शोभनम् ।
अन्ते च परया प्रीत्या पुत्रपौत्रकलत्रकैः ॥ ६८

श्रीमत्कैलासमचलं प्रापतुर्ब्राह्मणोत्तमाः ।
अथान्यदपि रुद्राक्षमाहात्म्यं वर्णयामि वः ॥ ६९

सिन्धुदेशे पुरं किंचिद्भ्रूचक्राख्यं सुशोभनम् ।
तत्र कश्चिद्द्विजश्रेष्ठः सुप्रदीपाह्वयो महान् ॥ ७०

रुद्राक्षमालाभरणो रुद्रे विन्यस्तमानसः ।
पुत्राः पौत्रास्तदीया ये सर्वे रुद्राक्षभूषणाः ॥ ७१

एवं वसन् सुप्रदीपो मनसीत्थं चकार वै ।
रुद्राक्षधारिणामन्नं दास्याम्यहमनुत्तमम् ॥ ७२

नेतरेषां महापापकलुषीकृतचेतसाम् ।
श्रुत्वास्य नियमं कश्चिद्योगाङ्गाख्यो यतीश्वरः ॥ ७३

योगमार्गैकनिरतः सर्वशास्त्रार्थकोविदः ।
समागतः पुरं शीघ्रं सर्वैर्बहुमतो जनैः ॥ ७४

न धारयत्ययं पुण्यं रुद्राक्षवरभूषणम् ।
तस्मादेनमसौ विप्रः सुप्रदीपो महामतिः ॥ ७५

नाङ्गीचकार भिक्षां च नोक्तवानस्य योगिनः ।
एवं दिनेषु कतिषु गतेष्वयमतिक्रुधा ॥ ७६

गृहेषु भिक्षाव्याजेन तद्गृहद्वारमागतः ।
[2]तमागतं च विज्ञाय सर्वे तद्गृहवासिनः ॥ ७७

नाङ्गीचक्रुः स्थितास्तूष्णीमजानन्त इवान्तरे ।
सुप्रदीपः स्वयं पश्चाद्विनिर्गत्य गृहाद्बहिः ॥ ७८

---

[1] सुविपुलान्–पा. [2] तस्यागतिं–पा.

किमर्थमागतं गच्छ भिक्षा नास्ति गृहे मम ।
गृहेष्वन्येषु सर्वेषु [1] भिक्षाटनमपेक्षया ॥ ७९

रुद्राक्षधारिणामन्नं नेतरेषां च मद्गृहे ।
न धार्यते त्वया विप्र रुद्राक्षं सर्वपापहम् ॥ ८०

इति तस्य वचः श्रुत्वा गच्छ गच्छ पुरो मम ।
भिक्षा न दीयते तुभ्यमित्युवाच द्विजोत्तमाः ॥ ८१

एवं निशम्य वचनं सुप्रदीपस्य धीमतः ।
रुष्टो बभाषे वचनं परुषाक्षरसंयुतम् ॥ ८२

निशम्य वचनं तस्य योगिनो निष्ठुरं तदा ।
सुप्रदीपात्मजाः क्रुद्धास्तमस्पृष्ट्वा [2]दुराशयम् ॥ ८३

तदीयेनैव दण्डेन निन्युस्तं दूरतो द्विजाः ।
ततः ससम्भ्रमं क्रुद्धः सन्यासी तत्पुराधिपम् ॥ ८४

सालङ्काख्यं समासाद्य सर्वं तस्मै न्यवेदयत् ।
सालङ्कोऽपि नृपश्रेष्ठः श्रुत्वा तदनुपूर्वशः ॥ ८५

स्वकीयैरानयामास सुप्रदीपं भटै[3]स्सह ।
सन्न्यासिनं समायान्तं भिक्षार्थं तव वेश्मनि ॥ ८६

किमुच्चाटयितुं युक्तं [4]दण्डात्तावद्बलात्पुनः ।
परुषं वचनं प्रोक्तं स्वकीयैः पुत्रकैर्वत ॥ ८७

इति राज्ञो वचः श्रुत्वा सुप्रदीपोऽब्रवीद्वचः ।
न सन्न्यासो भवेद्राजन् विना रुद्राक्षधारणम् ॥ ८५

रुद्राक्षधारणं ह्यङ्गं सर्वस्यैवाश्रमस्य च ।
रुद्राक्षधारणेनैव मुक्तिर्ज्ञानाच्च केवलात् ॥ ८६

इति वेदाश्च चत्वारो वदन्ति किल सादरम् ।
किं चास्ति नियमः कश्चिन्मम राजन्निमं शृणु ॥ ८७

रुद्राक्षधारिणामन्नं [5]दास्याम्येव नमामि तम् ।
स वन्द्यो मम राजेन्द्र यो वा को वास्तु मानवः ॥ ८८

---

[1] भिक्षामट यथेच्छया-पा. [2] दुराशिनम्-पा. [3] स्तदा-पा. [4] अदत्वा तां बलात्पुनः इति स्यात्. [5] एवमेव सर्वत्र विद्यते.

स पूज्यः सहि धर्मात्मा यथा देवो महेश्वरः ।
नेतरेषां च डम्भानामन्नं दास्याम्यनुत्तमम् ॥ ८६

न पूज्योऽयं महापापी वरीयानाश्रमेष्वपि ।
सुप्रदीपस्य वचनं श्रुत्वा राज्ञोऽस्य सन्निधौ ॥ ८७

सन्नयासी स [1]पुनः कोपादिदं वचनमब्रवीत् ।
किं साध्यमस्ति रुद्राक्षधारणेन मम द्विज ॥ ८८

किमायाति धृतेऽप्यस्मिन् रुद्राक्षे तव भूसुर ।
गत्वाहमधुना शीघ्रं देवलोकमनुत्तमम् ॥ ८९

पुष्पाणि योगमाहात्म्यात्कल्पवृक्षस्य चानये ।
यदि शक्तिस्तव भवेदेवं रुद्राक्षधारणात् ॥ ९०

तदा त्वयोक्तमखिलं सत्यमेव भविष्यति ।
इति तस्य वचः श्रुत्वा योगिनोऽयं महीसुरः ॥ ९१

यदि गत्वा पुरं दैवं योगाभ्यासेन केवलम् ।
अनायिष्यसि पुष्पाणि त्वमाशु सुरशाखिनः ॥ ९२

तदास्ति मद्गृहे कश्चिन्मार्जालशिशुरुज्वलः ।
देवलोकं समासाद्य पूजितः सकलैः सुरैः ॥ ९३

स शीघ्रं धृतरुद्राक्षः कल्पवृक्षं सुशोभनम् ।
आनयिष्यति रुद्राक्षधारणेनैव सत्यतः ॥ ९४

सुप्रदीपवचः श्रुत्वा यतिः कोपसमाकुलः ।
एवं यदि भवेद्वाक्यं तव विप्र [2]सदाहतम् ॥ ९५

वन्द्योऽसि जगतां विप्र भविता नात्र संशयः ।
रुद्राक्षधारणं श्रेष्ठं तदा सर्वेषु कर्मसु ॥ ९६

उक्त्वैनं योगमार्गस्थः पश्यत्सु सकलेष्वपि ।
प्राणानायम्य विधिना व्योमाशिश्रयदुज्वलः ॥ ९७

गत्वा सुरपुरीं शीघ्रात्कल्पवृक्षप्रसूनकम् ।
[3]समानीयागमन्मध्यं सभाया भूमिपाश्रितम् ॥ ९८

---

[1] मनः–पा. [2] तदा हृतम्–पा. [3] समानीयागतः शीघ्रं–पा.

ददौ प्रसूनं भूपस्य हस्ते तत्सुरशाखिनः ।
दृष्ट्वैतदद्भुतं सर्वे महदाश्चर्यसंयुताः ॥ ९९

तुष्टुवुस्तं नृपेन्द्राद्याः सर्वे तत्र सभासदः ।
समागतममुं दृष्ट्वा सुप्रदीपो महीसुरः ॥ १००

स्वपुत्रं प्रेषयामास स्वगृहं प्रति बुद्धिमान् ।
मार्जारशिशुमानेतुं द्रुतं रुद्राक्षधारिणम् ॥ १०१

स तु शीघ्रं गृहं गत्वा तमानिन्ये सभान्तरे ।
तं समाहूय मार्जारं सुप्रदीपो महीसुरः ॥ १०२

राजन् रुद्राक्षमाहात्म्याद्गत्वा स्वर्लोकमद्भुतम् ।
मार्जारोऽयं देवतरुं समानेष्यति शीघ्रतः ॥ १०३

इत्युक्त्वा पाणिना विप्रस्तमम्बरतलेऽक्षिपत् ।
तदानीमागतं तत्र विमानमतिशोभनम् ॥ १०४

पश्यत्सु तत्र सर्वेषु जनेष्वारुह्य तत्पुनः ।
स्वर्गलोकं ययौ शीघ्रं मार्जारोऽयं महीसुराः ॥ १०५

तमायान्तं सुराधीशो विज्ञाय सहसा बली ।
प्रत्यग्रहीत्समारुह्य गजमल्लं स्वसेनया ॥ १०६

अवरुह्य गजात्तूर्णमभ्याशं प्राप्य तस्य च ।
भक्तिनम्रो विमानस्थं गजस्कन्धे विधाय च ॥ १०७

विज्ञायागमनं तस्य मनसा वृत्रहा सुधीः ।
आघ्राय च शिरस्तस्य नेत्रयोस्तं विधाय च ॥ १०८

स्वीयैराभरणैरेनं समलङ्कृत्य बुद्धिमान् ।
विधाय पूजामत्यर्थं पुनस्तं च सुरद्रुमम् ॥ १०९

सुप्रदीपवचः श्रुत्वा तिष्ठाभ्याशे महात्मनः ।
उक्त्वैवं वृक्षमतुलं प्रेषयित्वा सुरेश्वरः ॥ ११०

देवसिद्धाह्वयं देवं प्रेषयित्वामुना सह ।
मार्जालं तं यथापूर्वं व्योमयाने विधाय च ॥ १११

प्रणम्य परया प्रीत्या प्रेषयामास देवपः ।
इत्थं सम्प्रेषितस्तेन मार्जालोऽयं मरुत्वता ॥ ११२

आरुह्याशु विमानं तद्व्योमयानमशिश्रयत् ।
क्षणेन तत्सभामध्यं प्राप ताभ्यां परिष्कृतः ॥ ११३

अवरुह्य विमानात्स्वादेत्याभ्याशं द्विजन्मनः ।
प्रदक्षिणत्रयं कृत्वा प्रणम्य विनयेन च ॥ ११४

तस्थे तस्याग्रतस्तस्यां सभायां ब्राह्मणोत्तमाः ।
भक्त्या प्रदक्षिणीकृत्य देवविद्याह्वयो [1]नरम् ॥ ११५

प्रणम्य सुप्रदीपं तं जगादेन्द्रं वचस्तदा ।
निष्कण्टकमहं स्वर्गं कृपया तव केवलम् ॥ ११६

पालयामि सदा स्मृत्वा भवन्तं त्वां शिवप्रियम् ।
इति देवेन्द्रवचनमुक्त्वायं पूजितोऽमुना ॥ ११७

स्वर्गं तदनुमत्याशु विमानेनाप सोऽमरः ।
कल्पद्रुमोऽपि तं विप्रं विधाय त्रिःप्रदक्षिणम् ॥ ११८

प्रणम्य परया भक्त्या तस्थे तस्याग्रतो द्विजाः ।
दृष्ट्वैतदखिलं राजा विस्मयाविष्टमानसः ॥ ११९

उत्थाय तरसा राजा प्रणम्य विनयेन च ।
भयेन च समाविष्टो मार्जारं वीक्ष्य तं तदा ॥ १२०

प्राप्तस्त्वया कथं स्वर्गस्तत्रेन्द्रेण च किं कृतम् ।
किमुक्तं वचनं ब्रूहि मार्जारवर तत्त्वतः ॥ १२१

इति राज्ञो वचः श्रुत्वा सुप्रदीपः शिवं स्मरन् ।
स्वर्गलोकस्त्वया प्राप्तो दृष्टश्च सुरपुङ्गवः ॥ १२२

पूजितस्तेन मार्जारशिशो तत्त्वं शिवाज्ञया ।
मुक्त्वाशु वचनाच्छक्तिं वद सर्वं सदुत्तरम् ॥ १२३

इति ब्रुवति विप्रेन्द्रे तस्मिन् रुद्राक्षभूषणे ।
मार्जारोऽपि समुत्थाय बद्धाञ्जलिपुटोऽब्रवीत् ॥ १२४

आरुह्य सुन्दरं दिव्यं विमानमहमुज्वलम् ।
स्वर्गमापं सुरेशो मां द्रष्टुं प्रत्यग्रहीन्मुदा ॥ १२५

---

[1] योऽमरः—पा.

ततःससम्भ्रमं दृष्ट्वा चावरुह्य गजाद्द्रुतम् ।
पाणिभ्यां मां समालिङ्ग्य शिरस्याघ्राय भक्तितः ॥ १२६

गजस्कन्धं समारोप्य भूषयन् भूषणैः स्वकैः ।
वृत्तान्तमखिलं ज्ञात्वा कल्पवृक्षामराद्विभुः ॥ १२७

योजयित्वा मया साकं विधायापचितिं पराम् ।
प्रेषयामास मतिमान् भक्त्या परमया सह ॥ १२८

तदानीं तस्य महिषी शची प्रोवाच देवपम् ।
मार्जारोऽयमिमां पूजां कथमर्हति देवप ॥ १२९

कोऽयं समागतः कस्माद्देशादेतद्वद प्रभो ।
इति तस्या वचः श्रुत्वा सुरेशः प्राह तां पुनः ॥ १३०

बिभर्त्ययं वरं पुण्यं रुद्राक्षं रुद्रभूषणम् ।
स एव धन्यः पूज्योऽपि सर्वैर्देवैश्च मानुषैः ॥ १३१

धार्यते येन रुद्राक्षं देहिना पावनं प्रिये ।
([1] न ज्ञायते त्वया किं वा रुद्राक्षमहिमा प्रिये ॥) १३२

अत्र पुण्यां कथां मत्तः शृणुष्वावहिता प्रिये ।
पूर्वेद्युः शङ्करं प्राप्य प्रेतराट् सह किङ्करैः ॥ १३३

प्रणम्य परया भक्त्या मन्दरे चारुकन्दरे ।
दृष्टः प्रोवाच देवेन स्वस्यागमनमत्र च ॥ १३४

यमः—

जय शम्भो महादेव भक्तवत्सल विश्वप ।
त्वयैवेदं पुरा दत्तं पदं मम महेश्वर ॥ १३५

क्रियते सा मया पूजा भक्तानां तव पावनी ।
भवाब्धिपोत भगवन् ते ये विमुखमानसाः ॥ १३६

पीडयन्ते पापिनस्ते वै नरके दुःखसागरे ।
त्वया कृता च मर्यादा कुत्र वा वितथा भवेत् ॥ १३७

धर्माधर्माह्वयौ मार्गौ कल्पितौ भवता प्रभो ।
सुखं धर्मफलं शम्भो दुःखं पापफलं तथा ॥ १३८

[1] मातृकायां नास्ति.

विनिर्मितं नु भवता देवदेवेन शङ्कर ।
तद्वत् स्वर्गनरकौ भवतैव हि कल्पितौ ॥ १३९

तदत्र मामकैर्दूतैः पीडितं नरके भृशम् ।
महापापिनमासाद्य भवदीया गणाः प्रभो ॥ १४०

दिव्यं विमानमारोप्य नानारत्नविचित्रितम् ।
सन्ताड्य मामकान् दूतान् कैलासं निन्यिरे वत ॥ १४१

इति ब्रुवति कीनाशे भयाकुलितमानसे ।
प्राह गम्भीरया वाचा भैरवस्तं शिवाग्रतः ॥ १४२

किमस्ति पुण्यं मतिमन् नास्ति कीनाश शोभनम् ।
इह जन्मनि नित्यं त्वं वदात्र शिवसन्निधौ ॥ १४३

इति तस्य वचः श्रुत्वा भैरवस्य स धर्मराट् ।
चित्रगुप्तं निजाभ्याशे स्थितं दृक्संज्ञयावदत् ॥ १४४

चित्रगुप्तस्ततो देवं प्रणम्याञ्जलिहस्तवान् ।
जगाद भैरवं वीक्ष्य प्रश्रयावनतः पुरः ॥ १४५

प्रसीद देव देवेश करुणाकर भैरव ।
देशे कलिङ्गसंज्ञे यत्पुरं व्याघ्राभिधं महत् ॥ १४६

तत्रास्तेऽयं महापापी जामित्राख्यो महाबलः ।
[1]जारस्यास्य तु पापस्य जननी व्यभिचारिणी ॥ १४७

जारौषधवशात्पापा मृतैषा किल देवप ।
जारेण रक्षितः पापी जनकेनैव दुष्टधीः ॥ १४८

कालेन यौवने प्राप्ते महाव्यामोहकारणे ।
चौर्यं कृत्वापि दुष्टात्मा कामबाणेन मोहितः ॥ १४९

दासीनां सङ्गतो नित्यं सवयोभिश्च तादृशैः ।
द्रव्याभावात्पुनः कस्मिन्दिवसे जनकं च तम् ॥ १५०

जघान तं च पापिष्ठः कपटेन दुरात्मवान् ।
मद्यपायी सदा तद्वन्मांसभोज्यतिवञ्चकः ॥ १५१

---

[1] जारतोऽस्य तु-पा.

स्तेयं कुर्वन् दिने तस्मिन् दृष्टोऽयं ग्रामपालकैः ।
ताडितः पीडितोऽत्यन्तं निहतः पितृकानने ॥ १५२

न किंचिदस्य पापस्य पुण्यं जन्मनि विद्यते ।
दिनान्यपि च चत्वारि मृतस्यास्य जगत्प्रभो ॥ १५३

बाधितो नितरां दूतैरस्मदीयैरयं प्रभो ।
सन्ताड्य तान् भृशं दूताः भवदीया महेश्वर ॥ १५४

मोचयित्वा दुरात्मानं कैलासं निन्यिरे प्रभो ।
न किंचिदपि जानेऽहं पुण्यमस्य दुरात्मनः ॥ १५५

इत्युक्त्वा चित्रगुप्तोऽयं तस्थे बद्धाञ्जलिः पुरः ।
तमाह भैरवो वीक्ष्य चित्रगुप्तं स्मयन्निव ॥ १५६

चक्रवाकस्य भूपस्य सुता सर्वाङ्गसुन्दरी ।
सख्यौ गृहे स्वकीये सा हारयष्टिं मनोहराम् ॥ १५७

निधाय मल्लिकावल्ल्यां रुद्राक्षप्रोतमध्यमाम् ।
गृहीत्वोड्डीय तां काकः [1]कश्चिद्गगनमार्गतः ॥ १५८

हारयष्टिस्तदा छिन्ना गच्छतोऽस्य मनोहरा ।
तदा तन्मध्यरुद्राक्षमेतस्य छिन्नमूर्धनि ॥ १५९

पपात किल पुण्येन केनाप्यस्यातिपावनम् ।
निमग्नं रक्तसंस्पर्शात्तिष्ठत्यद्यापि चान्तक ॥ १६०

तेन पुण्येन कैलासं प्राप्तवानयमन्तक ।
अहो रुद्राक्षमाहात्म्यं मया वक्तुं न शक्यते ॥ १६१

स वेत्ति रुद्रो भगवान् [2]शक्तिं रुद्राक्षतो न वा ।
तदेतत्सर्वमाकर्ण्य शैलादिर्हर्षिताङ्गवान् ॥ १६२

तिष्ठते देहिनो यस्य देहे रुद्राक्षमुत्तमम् ।
कैलासमेष यातीति किमाश्चर्यं शिवप्रियः ॥ १६३

अस्थिकेशादि गङ्गायां मृत नां बहुकालतः ।
पतितं यदि ते शीघ्रं कैलासं यान्ति वै यम ॥ १६४

---

[1] जगामाकाशमार्गतः इति स्यात्. [2] बत रुद्राक्षतो नवा, भस्मरुद्राक्षतो न वा–पा, भक्तरुद्रावको न वा.

मादेतस्य कैलासप्राप्तिर्नैवाद्भुतं यम ।
इति नन्दीशवचनं श्रुत्वैतौ भयकम्पितौ ॥ १६५

चित्रगुप्तयमौ नत्वा देवदेवं त्रियम्बकम् ।
विचिन्तयन्तौ माहात्म्यं रुद्राक्षस्याघनाशिनः ॥ १६६

प्रतस्थाते महेशस्य चाज्ञया स्वपदं प्रति ।
प्रस्थितं तं पुनरपि समाहूय महेश्वरः ॥ १६७

अद्यप्रभृति रुद्राक्षधारिणो मम वल्लभान् ।
दूराद्दृष्ट्वा यम भयान्नत्वा तान् मनसा व्रज ॥ १६८

दूतानामपि शिक्षैषा कर्तव्या चाप्रमादिना ।
मम प्राणाधिका भक्ता भस्मरुद्राक्षभूषणाः ॥ १६९

न तान् प्रत्यधिकारस्ते सत्यं सत्यमिहोच्यते ।
इति शम्भोर्वचः श्रुत्वा तथा कृत्वा मनस्ययम् ॥ १७०

प्रणम्य परया भक्त्या निर्जगाम पदं प्रति ।
दृष्ट्वैतदखिलं शम्भोः सन्निधौ गतवासरे ॥ १७१

ममात्यन्तमभूत्प्रीतिः प्रति रुद्राक्षधारिणः ।
तन्मया वल्लभे पूजा कृतास्याखुभुजस्तराम् ॥ १७२

इति देवेशवचनं श्रुत्वेन्द्राण्यपि विस्मिता ।
मामादाय कराभ्यां सा मूर्ध्न्याघ्राय नरेश्वर ॥ १७३

कृत्वा स्वनेत्रयोर्भक्त्या प्रेषयामास भूमिप ।
गदितमिति निशम्य तत्र वृत्तं
दिवि नृपतिं [1] पृषदंशकेन सत्यम् ।
[2] अधिकमयमियाय भक्तिमस्मि-
न्नधिगतविस्मयमानसो द्विजेन्द्राः ॥ १७४

ततः प्रणम्य राजासौ सुप्रदीपं द्विजोत्तमम् ॥ १७५

भक्त्या स्वयं च रुद्राक्षं ययौ धर्तुं स आत्मवित् ।
रक्ष मां [3] शरणं पापं कृतमन्तुं द्विजोत्तम ॥ १७६

---

[1] विषदंशकेन–पा. [2] एवमेव सर्वत्र वर्तते । नृपतिरयमियाय–इति साधुः.
[3] शरणं प्राप्तं कृतवंशं–पा.

कृतार्थोऽस्मि कृतार्थोऽस्मि दर्शनालापतस्तव ।
इति ब्रुवति राजेन्द्रे सहसोत्थाय स व्रती ॥ १७७

प्रणम्य परया प्रीत्या द्विजश्रेष्ठमुवाच ह ।
रुद्राक्षधारणात्त्वं हि रुद्रोऽस्यनघ केवलम् ॥ १७८

क्षमस्व मत्कृतं मन्तुं दयार्द्रान्तर सर्वथा ।
न कुप्यन्ति महात्मानः कृतागस्स्वपि देहिषु ॥ १७९

स्तुत्वैवमास्थितावेतौ बद्धाञ्जलिपुटावुभौ ।
सुप्रदीपो निजाभ्याशे स्थापयित्वाब्रवीत्कथाम् ॥ १८०

देशे मकरसंज्ञेऽस्ति पुरं च मकराभिधम् ।
तत्रास्ते ब्राह्मणः कश्चित्सुगुप्ताख्यो महामतिः ॥ १८१

तस्यासंस्तनयाः पञ्च ब्राह्मणस्य सुमेधसः ।
तेषामवरजः कश्चिच्छान्तिसंज्ञोऽस्ति पुण्यवान् ॥ १८२

धूलिक्रीडां वितन्वानः किंचिद्रुद्राक्षमाप्तवान् ।
तद्बध्वा निजकण्ठेऽयं सर्वदा तिष्ठते व्रती ॥ १८३

न श्रुणोति वचः पित्रोर्भ्रातृणां [1] भ्रान्तवत्सुधीः ।
दरिद्रोऽप्यनघोऽहस्तु स्वेच्छया न प्रवर्तते ॥ १८४

भ्रातरोऽन्येऽपि चत्वारः पितृभ्यां सहिताः सदा ।
यान्त्रावृत्त्योदरं नित्यं पोषयन्ति स्वकीयकम् ॥ १८५

न याति कुत्रचिद्गेहं मुक्त्वाऽयं ब्राह्मणात्मजः ।
यवागुमात्रमप्येष पीत्वा दत्तं तु याचकैः ॥ १८६

तिष्ठत्येव चिरं कालं धृतरुद्राक्षभूषणः ।
द्विषन्त्येनमश्रुण्वन्तं वचनं भ्रातरस्तदा ॥ १८७

तदानीं केरलाधीशो नृपः कश्चन तापसः ।
नारं बलिं भद्रकाल्याः प्रत्यब्दं विदधात्ययम् ॥ १८८

तस्मिन् देशे नरः कोऽपि लभ्यते न प्रयत्नतः ।
ततोऽयं प्रेषयामास माकरे विषये भटान् ॥ १८९

---

[1] भ्रान्तवस्तुनि—पा.

दत्वा बहूनि द्रव्याणि क्रेतुं नरमनिन्दितम् ।
विचार्याभ्यागतास्तेऽपि तत्र तत्र द्विजालये ॥ १९०

क्रमेणास्य गृहं प्राप्य वृत्तान्तं सर्वमूचिरे ।
श्रुत्वैतद्द्रव्यमादाय ते पितृभ्रातरस्तदा ॥ १९१

ददुरेनमिमे तेभ्यः शान्तिकं शान्तमानसम् ।
स तेषामनुमत्यैतान् प्राप्य सन्तुष्टमानसः ॥ १९२

केरलाधीशनगरे तस्थे पौरोहिते गृहे ।
पुनर्बलिदिने स्नात्वा शान्तिको धृतभूषणः ॥ १९३

गन्धावलिप्तसर्वाङ्गः श्रुत्वा पौरोहितं वचः ।
पुरोहितेन भवनं राज्ञः प्रापातिहृष्टधीः ॥ १९४

दृष्ट्वैनं स तु राजापि बल्यर्थं निश्चितान्तरः ।
कालीभवनमापायं साकं तेनामुना द्रुतम् ॥ १९५

सम्पूज्य तां तदा दिव्यैर्धूपैर्दीपैरनेकशः ।
पुष्पैर्नानाविधैर्भक्ष्यैर्भोज्यैर्मांसैश्च शोणितैः ॥ १९६

स्थाप्यैनं पुरतस्तस्थे भद्रकाल्याः स शान्तिकम् ।
दृष्ट्वैनं शान्तिकं काली धृतरुद्राक्षभूषणम् ॥ १९७

भीता प्रणम्य मनसा सहसोत्थाय सा पुनः ।
हत्वा पुरोहितं कोपात्पपौ रक्तं दुरात्मनः ॥ १९८

शान्तिकं तं समीक्ष्यैषा जगाद वचनं तदा ।
न समस्ते जगत्यस्मिन् ब्राह्मणानामधीश्वर ॥ १९९

यतस्त्वया गले पूतं रुद्राक्षं धार्यते कृतिन् ।
धन्योऽसि त्वं महासत्व स्थिरचित्त दृढव्रत ॥ २००

स त्वं रुद्रो न सन्देहः सुपूज्यश्च सुरोत्तमैः ।
वरं वरय पुण्यात्मन् वाञ्छितं ते ददाम्यहम् ॥ २०१

इति काल्या वचः श्रुत्वा शान्तिकः प्राह तां तदा ।
यदि देयो वरो मह्यं मय्यपि प्रीतिरस्ति चेत् ॥ २०२

अयं नरबलिर्मास्तु प्रत्यब्दं तव चेश्वरि ।
प्रयच्छ वाञ्छितं चास्मै राज्ञे सन्तुष्टमानसा ॥ २०३

इति तस्य वचः श्रुत्वा तथा दत्वा वरं च तम् ।
राजानं वीक्ष्य सा प्राह पुनर्वचनमीश्वरी ॥ २०४

पूजयैनं नृप सदा रुद्राक्षवरभूषणम् ।
[1]एतद्रुद्रस्य वचनं श्रुत्वा स्थातुं त्वमर्हसि ॥ २०५

तव कन्यां प्रयच्छास्मै पाणिग्रहणमार्गतः ।
एवं स्थिते चेद्भवतः सर्वाभीष्टं भविष्यति ॥ २०६

यस्मादेनं पुरोधास्ते वल्यर्थं त्वनयन्नृप ।
दोषेण तेन निहतः सन्निधौ तव सत्यतः ॥ २०७

मृतोऽस्य तनयोऽप्यद्य मृता भार्याप्यनिन्दिता ।
दग्धं च गेहं सुमहद्वह्निना धरणीपते ॥ २०८

एनं द्विषन्ति ये भ्रातृपितरस्तेऽतिपापिनः ।
चोरैरपहृतद्रव्याः कुष्ठादिव्याधिपीडिताः ॥ २०९

क्षुत्तृष्णापीडिता नित्यं निराहारा निरालयाः ।
अटन्ति देशाद्देशं ते निमग्ना दुःखसागरे ॥ २१०

य एनं धृतरुद्राक्षं पूजयन्ति महेशवत् ।
ते दग्धकिल्बिषा नित्यं मोदन्ते देववत्क्षितौ ॥ २११

इति काल्या वचः श्रुत्वा राजायं प्रीतिसंयुतः ।
विधिना ग्राहयामास पाणिं दुहितुरुज्वलम् ॥ २१२

भवनं च विधायास्य नानारत्नविचित्रितम् ।
प्रादाद्राजा [2]द्विजं चैनं दृष्ट्वेशवदपूजयत् ॥ २१३

शान्तिकोऽप्येकरुद्राक्षधारणस्येदृशं फलम् ।
आलोच्य कण्ठबाहुसमणिबन्धशिरस्स्वपि ॥ २१४

बभार किल रुद्राक्षं सहस्राधिकसङ्ख्यया ।
भार्यया सहितस्तस्थे मन्दिरे क्रीडयन्मुदा ॥ २१५

श्रुत्वैदखिलं वृत्तमस्य ये पितृसोदराः ।
मदीय इति निश्चित्य तं देशं प्रापुरञ्जसा ॥ २१६

---

[1] रुद्रवद्वचनं चास्य-पा. [2] दिनं चैवं-पा.

परित्यक्तद्विजाचारा व्रणक्लिन्नशरीरिणः ।
तान् दृष्ट्वाऽयं मुदा गेहमानयित्वातिसुन्दरम् ॥ २१७

स्नापयित्वाशु तैलेन दिव्यं वस्त्रं प्रदाय च ।
रुद्राक्षमालया सर्वानभूषय[1]दयं व्रतीन् ॥ २१८

तेऽपि रुद्राक्षमाहात्म्यात्त्यक्तकुष्ठादिरोगिणः ।
दिव्याम्बरधरा नित्यं दिव्याभरणभूषिताः ॥ २१९

भुक्त्वा भोगान् सुविमलाञ्छान्तिकेनामुना सह ।
कैलासं प्रापुरतुलं प्रीत्या परमया युताः ॥ २२०

अजानतापि रुद्राक्षं मणिभ्रान्त्यामुना[2] तदा ।
धृतमस्य फलं सम्यक्कृच्छ्रुतं किल महामते ॥ २२१

ज्ञात्वा ये शिवभूषणं परतमं स्वर्गापवर्गप्रदं
रुद्राक्षं विधिना मुदा निजतनौ सम्यक्सदा बिभ्रति ।
तेषां दग्धनिजैनसामिह फलं जनाति को वा सुधीः
त्यक्त्वा शङ्करमम्बिकां गणपतिं सत्यं मया कीर्तितम् ॥ २२२

सुप्रदीपस्य वचनं श्रुत्वाश्चर्यसमन्विताः ।
तदा प्रभृति रुद्राक्षं[3] धत्ते रुद्रस्य भूषणम् ॥ २२३

दग्धाघौघो निजं कर्मयोगं मुक्त्वा मुनीश्वरः ।
प्राप्याशु शिवयोगित्वं शिवस्यैव प्रसादतः ॥ २२४

मुक्तिमाप शिवज्ञानात्पुनरावृत्तिदुर्लभाम् ।
तत आरभ्य राजापि रुद्राक्षाभरणोज्वलः ॥ २२५

अनेककालमखिलं राज्यं कृत्वारिवर्जितम् ।
भुक्त्वा च विपुलान् भोगान्मानुषानन्दसंयुतः ॥ २२६

पुत्रे तु राज्यं निक्षिप्य शिवलोकं ययौ द्विजाः ।
सुप्रदीकोऽपि रुद्राक्षमाहात्म्यमनुवर्ण्य सः ॥ २२७

स्वगृहं प्राप्य परया प्रीत्यानेकाब्दमुज्वलः ।
भुक्त्वा भोगान् बहुविधान् पुत्रैः पौत्रैः समन्वितः ॥ २२८

---

[1] दथ व्रतीन्.   [2] व्रतिन्-पा.   [3] द्भ्रू रुद्रस्य.

शिष्यैः प्रशिष्यैः सहितो बन्धुभिर्भार्यया सह ।
दिव्यं विमानमारुह्य देवस्त्रीभिर्विभूषितम् ॥ २२९

देवदुन्दुभिनिर्घोषैः पुष्पवृष्टिभिरुच्चकैः ।
देवर्षीणां गणैरग्रेयायिभिः परिवीतवान् ॥ २३०

इन्द्रेण प्रेषितं कल्पवृक्षमाभरणं तथा ।
उज्जयिन्यां महाकालमहेशस्य प्रदाय च ॥ २३१

मार्जारेणामुना साकं शिवलोकं ययौ तदा ।
ततः कालेन सायुज्यमवाप परमेशितुः ॥ २३२

ऋषयः—

वर्णितं भवता सूत माहात्म्यं भस्मनः पुरा ।
रुद्राक्षस्यापि माहात्म्यं वर्णितं सर्वसम्मतम् ॥ २३३

भस्मधारणमात्रेण सर्वाभीष्टं भवत्यलम् ।
किमर्थं धार्यमेवं चेद्रुद्राक्षं तापसेश्वर ॥ २३४

एतन्नः संशयं छिन्धि पुराणार्थविशारद ।
अन्यो न त्वामृते छेत्ता संशयस्यास्य पण्डितः ॥ २३५

भवादृशानां महतां सत्सु श्रोतृषु तापस ।
नावाच्यमस्ति परमं रहस्यमपि पावनम् ॥ २३६

इति तेषां वचः श्रुत्वा सूतः पौराणिकोत्तमः ।
प्राह गम्भीरया वाचा मन्दस्मितमुखाम्बुजः ॥ २३७

सूतः—

शृणुध्वमृषयः सर्वे यूयं विगतकिल्बिषाः ।
धृतं च केवलं भस्म वारिणा स्वेदबिन्दुना ॥ २३८

वृष्ट्या स्नानेन सम्मर्दाज्जनानामपि भूसुराः ।
एवमाद्यैः प्रमृष्टं चेद्भयं भवति देहिनाम् ॥ २३९

भूतप्रेतपिशाचाश्च राक्षसा व्यालतस्कराः ।
व्याघ्रसिंहादयो यस्मात्सर्वे [1] मर्मभिदः सदा ॥ २४०

---

[1] मर्मविदः—पा.

हिंसन्ति भस्मना हीनमरुद्राक्षं महीसुराः ।
तस्माद्रुद्राक्षमनिशं कर्णकण्ठकरादिषु ॥ २४१

भस्मना सह धर्तव्यं स्वात्मनो हितमिच्छता ।
न चैतद्भस्मवद्विप्रा सापायं वा जलादिभिः ॥ २४२

भूतप्रेतपिशाचास्तं न च हिंसन्ति राक्षसाः ।
न दंशन्ति च सर्पास्तं भस्मरुद्राक्षधारिणम् ॥ २४३

धर्तव्यमेतत्सूत्रेण सौवर्णेनाथवा द्विजाः ।
राजतेन च ताम्रेण रुद्राक्षं च गलादिषु ॥ २४४

यज्ञोपवीते वा चैकं भस्मना सर्वदा द्विजाः ।
तस्मात्सर्वप्रयत्नेन भस्मरुद्राक्षभूषणः ॥ २४५

न बिभेति च शत्रूणां यथा निर्भय एव च ।
अत्रेतिहासं परमं कथयामि महीसुराः ॥ २४६

अस्ति कश्चिन्महीपालो देशे सवितृसंज्ञके ।
श्रीमत्सूरपुरे रम्ये सिन्धुसेनाह्वयो महान् ॥ २४७

स तु सिंहाभिदं भूपं विन्ध्यदेशाधिपं रिपुम् ।
काकलाख्यपुराधीशं युधि जित्वा महाबलः ॥ २४८

द्रावयामास विप्रेन्द्र महारण्ये स्वसेनया ।
स तु तत्र वने सिंहश्चिरकालं वसन्पुनः ॥ २४९

तपसाराध्य गोविन्दं सर्वशत्रुनिबर्हणम् ।
चक्रं सुमहदापायं शत्रुसंहारकारकम् ॥ २५०

चक्रप्रदानसमये प्रसन्नो माधवस्तदा ।
पश्चावृत्त्यैतदतुलं भवेत् शत्रुनिबर्हकम् ॥ २५१

ततः परं ममाभ्याशं समेष्यति महीपते ।
इत्युक्त्वाऽन्तर्दधे देवः क्षणादत्वैतदद्भुतम् ॥ २५२

तल्लब्ध्वा स महीपालः क्षणान्निर्गत्य काननात् ।
सिन्धुसेनं ससेनं तमावृत्य सहसा बली ॥ २५३

युद्धं कृत्वा पुनश्चक्रं योजयामास भीषणम् ।
तच्चक्रं सहसा सेना हत्वा सर्वां चिनैव तम् ॥ २५४

आजगाम पुनस्तस्य करं परमभीषणम् ।
एकाकी सिन्धुसेनोऽयं वनमापातिभीषणम् ॥ २५५

तत्राश्रमं वसिष्ठस्य सञ्चरन् प्राप भूसुराः ।
तत्र दृष्ट्वा सहात्मानं वसिष्ठं गौतमं परम् ॥ २५६

कौशिकं नारदादींश्च महर्षीन् सम्प्रणम्य सः ।
भो भो विज्ञानसम्पन्ना ऋषयः संशितव्रताः ॥ २५७

ईशं सर्वस्य देशस्य मां जानन्तु मनीषिणः ।
सोऽहं पराजितो युद्धे शत्रुणा तुल्यतेजसा ॥ २५८

इदानीं शरणं प्राप्तो भवतः पुण्यगौरवात् ।
तदुपायेन केनापि विजयो मे भवेदलम् ॥ २५९

वदन्तु भगवन्तस्ते तमुपायमृषीश्वराः ।
इति तस्य वचः श्रुत्वा सर्वे ते तापसोत्तमाः ॥ २६०

प्रोचुरस्य समालोच्य विजयोपायमुत्तमम् ।
धृत्वा स्वसेनया भस्म रुद्राक्षं च जयप्रदम् ॥ २६१

युद्धं कृतं चेद्विजयो भविष्यति न संशयः ।
(सेनाश्च भवतः सर्वा भस्मरुद्राक्षवर्जिताः)
सेनाश्च निहताः सर्वा भस्मरुद्राक्षहैन्यतः ॥ २६२

इत्युक्तं तापसश्रेष्ठा भवद्भिः संशयस्ततः ।
इति तस्याकलय्यैके वचनं तपतां वराः ॥ २६३

त्वया नृप धृतं भस्म रुद्राक्षं च जयप्रदम् ।
[1] हेतुनानेन चक्रं त्वां मुक्त्वा तन्निर्गतं ध्रुवम् ॥ २६४

राजा—

न धृत्वा भस्म रुद्राक्षं मयाप्यायोधनं कृतम् ।
कस्तूरीचन्दनालिप्तो मुक्तादामविभूषितः ॥ २६५

प्रवृत्तोऽहं मृधे नीलरत्नमुक्ताविभूषितः ।
एतावदेव जानेऽहं केवलं तापसोत्तमाः ॥ २६६

---

[1] हेतुना केन—पा.

तथापि मुक्त्वा मां चक्रं हत्वा सेनां विनिर्ययौ ।
इति राज्ञो वचः श्रुत्वा ऋषयः संशितव्रताः ॥ २६७

शोधय त्वमिहेदानीं मुक्तादामान्यदाम च ।
इत्युक्त्वा मौक्तिकं दाम शोधयामासुरञ्जसा ॥ २६८

तत्र दृष्ट्वैकरुद्राक्षमेतस्मै तददर्शयन् ।
दृष्ट्वैतद्विस्मयाविष्टास्तथैव भयकम्पिताः ॥ २६९

केन दत्तमिदं भूप कुत आरभ्य धार्यते ।
वद त्वमेतदालोच्य यथार्थं नोऽद्य सन्निधौ ॥ २७०

राजा—

यदाहं युद्धसन्नद्धः प्रस्थितस्त्वरया गृहात् ।
तदा वणिक्कश्चिदेतदुपहारेण दत्तवान् ॥ २७१

[1] करवेगेन धृत्वैतत्प्रवृत्तो रणमण्डले ।
न शोधितं च दामैतन्मौक्तिकं रणसम्भ्रमात् ॥ २७२

एतस्यैवं वचः श्रुत्वा ऋषयस्तेऽतिविस्मिताः ।
माहात्म्यादस्य राजंस्त्वं जीवितो नात्र संशयः ॥ २७३

पराजितो मृतबलो हन्तुं चक्रे विनिर्गते ।
इतः परं च धृत्वा त्वं भस्म रुद्राक्षमुत्तमम् ॥ २७४

बलैश्च भस्मरुद्राक्षधारकैः परिवीतवान् ।
विनिर्गतश्चेद्युद्धाय विजयो भविता ध्रुवम् ॥ २७५

नान्योऽस्त्युपायो विजये भस्मरुद्राक्षयोः परः ।
इति वाक्यं निशम्यैषां विनिश्चित्य तथेति सः ॥ २७६

धृत्वा भस्म च रुद्राक्षं युद्धाय कृतनिश्चयः ।
प्रतस्थे स्वयमेकाकी वनाद्धृत्वा धनुर्वरम् ॥ २७७

तदानीं मिलितास्तस्य भटाः केचन सायुधाः ।
तेषां भस्म च रुद्राक्षं दत्वायं परमोद्यमः ॥ २७८

सिंहस्य नगरं शीघ्राद्रुरोध स्वबलैः सह ।
[2]विनिर्गत्याशु सिंहोऽपि कृतकोलाहलो बलैः ॥ २७९

---

[1] रणवेगेन-पा. [2] स्थित्वात्रैतस्य वृत्तान्तं सिंहः कालेन बुद्धिमान्–पा.

प्रेषयामास तच्चक्रं सर्वशत्रुनिबर्हणम् ।
महारवेण तच्चक्रं प्राप्य तत्परसैन्यकम् ॥ २८०

दृष्ट्वा तान् भस्मरुद्राक्षधारिणो रुद्रतेजसः ।
प्रणम्य भक्त्या परया विधायैषां प्रदक्षिणम् ॥ २८१

विनिर्ययौ पुनः पाणिं प्रयोक्तुस्तस्य भूसुराः ।
दृष्ट्वैतत्सोऽतिवित्रस्तः प्राप भग्नो वनं द्रुतम् ॥ २८२

श्रुत्वात्रैतस्य वृत्तान्तं सिंहकोऽत्यन्तबुद्धिमान् ।
तपश्चचार सुमहदुद्दिश्य वरुणं द्विजाः ॥ २८३

प्रसन्ने यादसां पत्यौ पप्रच्छ वरमुत्तमम् ।
अपेक्षिता यदा वृष्टिर्मया यादःपते [1]विभो ॥ २८४

तदैव शीघ्रतो भूयात्प्रसन्नो यदि सर्वथा ।
तथेत्युक्त्वा जगामाशु वरुणः स्वालयं प्रति ॥ २८५

इति लब्धवरः सिंहः सिन्धुसेनं परेऽहनि ।
आजुहाव रणायायं कृतकोलाहलारवः ॥ २८६

प्रत्यग्रहीत्सिन्धुसेनस्तं सिंहं युद्धगर्वितम् ।
तदा सस्मार वरुणं सिंहो मध्यन्दिनेऽपि सः ॥ २८७

समाययौ महावेगाज्जलाकारतयाम्पतिः ।
वृष्ट्या सेनाः परिक्लिन्ना उभयोरपि तास्तदा ॥ २८८

सिन्धुसेनस्य सेनासु केवलं भस्मधारिणः ।
ये भटास्ते महावृष्ट्या प्रमृष्टात्मविभूतयः ॥ २८९

सम्बभूवुस्तदा सिंहश्चक्रमादाय भीषणम् ।
युयोज सिन्धुसेनस्य सेनास्वतुलविक्रमः ॥ २९०

तच्चक्रं सहसाक्रम्य सिन्धुसेनबलं महत् ।
आवृत्य भस्मना हीनानरुद्राक्षान् भटान् बहून् ॥ २९१

हत्वा मुक्त्वाशु रुद्राक्षधारिणो मुच्य भूमिपम् ।
अवाप त्वरया हस्तं सिंहस्यास्य महौजसः ॥ २९२

---

[1] प्रभो—पा.

सिन्धुसेनोऽल्पसेनत्वाद्धृतरुद्राक्षभूषणैः ।
भटैः कैश्चित्सहैवाशु वनं प्राप सुदुःखितः ॥ २९३

तत्र दृष्ट्वा ऋषीन्पूर्वान्वसिष्ठादीन् प्रणम्य सः ।
धृत्वा भस्म च रुद्राक्षं भस्मरुद्राक्षधारिभिः ॥ २९४

बलैर्युष्मद्वचः श्रुत्वा प्रविष्टो रणमण्डलम् ।
चक्रं युयोज तेनाशु सोऽस्मदीयास्तु तापसाः ॥ २९५

तच्चक्रं सहसाक्रम्य हत्वा शूरान्मदीयकान् ।
मया सह त्रिचतुरान्मुक्त्वा प्रतिययौ महत् ॥ २९६

इत्युवाच ऋषीनेष समीक्ष्यातिभयान्वितः ।

इति कथितममी निशम्य राज्ञा
निजहृदयेषु विचिन्त्य तत्क्षणेन ।
अनवरतमिदं बिभर्ति योऽङ्गे
न स मृतिमेति परायुधैः क्षितीश ॥ २९७

इति तेषां वचः श्रुत्वा पुनराह ऋषीनयम् ॥ २९८

धृत्वा भस्म च रुद्राक्षं केचिद्भस्मावकुण्ठिताः ।
परे प्रवृत्ता युद्धाय ततो वृष्टिरभूत्तराम् ॥ २९९

तदा वृष्ट्या परिक्लिन्नाः सेनास्ता उभयोरपि ।
ततश्चक्रं मुमोचायं सिंहः शत्रुनिबर्हणम् ॥ ३००

तेन घोरेण निहताः सेना मम तपोधनाः ।
इति राज्ञो वचः श्रुत्वा ऋषयस्तत्र कारणम् ॥ ३०१

ऊचुर्नृपं समीक्ष्यैते मनसालोच्य भूसुराः ।
येषां प्रमृष्टं क्षितिप भस्म वृष्ट्यातिपावनम् ॥ ३०२

त एव निहता युद्धे रुद्राक्षेण विवर्जिताः ।
जीविनो भस्मरुद्राक्षधारिणो भवता सह ॥ ३०३

पुरा त्रिपुरदैत्यानां भस्मरुद्राक्षधारिणाम् ।
नासीद्भयं महद्भ्योऽपि देवेभ्यो भूपते तदा ॥ ३०४

ब्रह्मविष्णुमुखा देवास्त्वभिचारेण कर्मणा ।
भूतान्युत्थाप्य भीमानि प्रेषयामासुरञ्जसा ॥ ३०५

तानि सर्वाणि तान् दृष्ट्वा भस्मरुद्राक्षभूषणान् ।
[1]निवृत्तिं सहसा जग्मुर्भीतभीतानि भूमिप ॥ ३०६

पुनश्च विमुखान् भस्मरुद्राक्षेषु विधाय तान् ।
ब्रह्मविष्णुमुखा देवाः शिवेनैनानमारयन् ॥ ३०७

तस्मात्त्वमपि राजेन्द्र भस्मरुद्राक्षभूषणैः ।
स्वभटैः सहितो युद्धे शत्रून् द्रावय निर्भयः ॥ ३०८

धर्तव्यं भस्मना साकं रुद्राक्षं वरभूषणम् ।
केवलं भस्म वृष्ट्याद्यैः प्रमृष्टं भवति ध्रुवम् ॥ ३०९

रुद्राक्षस्य तु वृष्ट्याद्यैर्न [2] प्रमृष्टिर्भवेन्नृप ।
[3] मृतास्ते तु भटा ये ते केवलं भस्मधारिणः ॥ ३१०

वृष्ट्या प्रमृष्टं तद्भस्म महत्या सत्यमीरितम् ।
इति तेषां वचः श्रुत्वा राजा निश्चिन्तमानसः ॥ ३११

तथेति तान् प्रणम्याशु रुद्राक्षं भस्मना सह ।
धृत्वा भटानां रुद्राक्षं दत्वायं भस्मना सह ॥ ३१२

भूतिभूषितसर्वाङ्गैः सह रुद्राक्षभूषणैः ।
विनिर्गत्य भटैः साकं सर्वैरमितविक्रमः ॥ ३१३

आजुहावाशु तं सिंहं सिंहं शरभवद्द्विजाः ।
ततः प्रतस्थे युद्धाय सिंहश्चक्रायुधो महान् ॥ ३१४

तदाशु तुमुलं युद्धं बभूव हि तयोर्मिथः ।
ततश्चक्रं युयोजायं सिंहः किलकिलारवः ॥ ३१५

तच्चक्रं वीक्ष्य तान् सर्वान् भस्मरुद्राक्षभूषणान् ।
प्रदक्षिणत्रयं कृत्वा प्रणम्य सहसा ययौ ॥ ३१६

ततः कोपेन सस्मार वरुणं निजतापहम् ।
वृष्टिश्चासीत्तदा स्थूला सेनयोरुभयोर्द्विजाः ॥ ३१७

भस्मानि तेषां लुप्तानि सिन्धुसेनानुयायिनाम् ।
तदन्वीक्ष्यायमयुजच्चक्रं पुनरपि द्विजाः ॥ ३१८

---

[1] निवृत्य–पा. [2] प्रमोषो भवेत्–पा. [3] वृत्तास्ते–पा.

प्रलुप्तभस्मनोऽप्येतान् रुद्राक्षवरभूषणान् ।
दृष्ट्वा भटान् ययौ मत्वा भीत्या चक्रं द्विजोत्तमाः ॥ ३१९

दृष्ट्वैतत्सहसा सिंहः पलायनमशिश्रयत् ।
वनं प्रति महाभीत्या ससेनो ब्राह्मणोत्तमाः ॥ ३२०

सिन्धुसेनोऽपि सहसा कृत्वा कोलाहलारवम् ।
बध्वाऽस्य नगरं धीरो देशं स्वीयं विधाय च ॥ ३२१

स्वदेशवर्तिनां भस्मरुद्राक्षाणि महामतिः ।
दत्वा तान् भस्मरुद्राक्षधारिणश्च विधाय सः ॥ ३२२

भस्मरुद्राक्षयोः स्मृत्वा माहात्म्यमवसत्स्वयम् ।
चिरकालमुषित्वात्र भुक्त्वा भोगान्यथेप्सितान् ॥ ३२३

स्वदेशस्थजनैः सर्वैः समेतः स्वेष्टबन्धुभिः ।
प्राप कैलासमतुलं विमानमधिरुह्य सः ॥ ३२४

क्रमेण मोक्षं चापायं ब्राह्मणानामधीश्वराः ।
स तु सिंहोऽपि वैराग्याद्रागद्वेषौ विहाय च ॥ ३२५

धृत्वा च भस्म रुद्राक्षं जीवन्मुक्ततया चिरम् ।
स्थित्वा देहावसानेऽयं मोक्षमापातिदुर्लभम् ॥ ३२६

तस्मात्सहैव रुद्राक्षं धर्तव्यं भस्मना द्विजाः ।
रुद्रस्याक्षितया विप्रा रुद्राक्षमिति कीर्तितम् ॥ ३२७

रुद्राक्षधारके शम्भुः परिपूर्णकटाक्षवान् ।
रुद्राक्षधारकाः सर्वे रुद्राकाराः प्रकीर्तिताः ॥ ३२८

रुद्राक्षस्यास्य माहात्म्यं ये श्रुण्वन्ति पठन्ति वा ।
श्रावयन्ति नरास्ते वै साक्षाद्रुद्रस्वरूपिणः ॥ ३२९

आयुरारोग्यमैश्वर्यं पुत्रान्पौत्रानवाप्य ते ।
अन्ते च शिवसायुज्यं प्राप्नुवन्ति विपश्चितः ॥ ३३०

तस्माद्रुद्राक्षमालाभिः परिवीतो भवेद्द्विजः ।
यस्य स्याज्जन्म परमं तस्य रुद्राक्षधारणे ॥ ३३१

त्रिपुण्ड्रधरणे चैव पञ्चाक्षरजपे तथा ।
परा श्रद्धा भवेत् पुंसामन्येषां दुर्लभा भवेत् ॥ ३३२

यस्य देहे भवेदेको रुद्राक्षः शिवभावकः ।
शिवालयं तु तद्देहं साक्षाच्छम्भुः शिवः स्वयम् ॥ ३३३

न देहे यस्य रुद्राक्षा न त्रिपुण्ड्रस्य धारणम् ।
श्मशानमेव तद्देहं तन्मुखं गिरिगह्वरम् ॥ ३३४

अष्टोत्तरशतं यस्य [1] कण्ठे भूषणमालिका ।
मुक्ताविद्रुमसम्मिश्रा स रुद्रो नात्र संशयः ॥ ३३५

मालिकां यः प्रतिदिनमष्टोत्तरसहस्रकैः ।
निर्माय [2] जपकालेषु धत्ते रुद्रात्स चाधिकः ॥ ३३६

रुद्राक्षकञ्चुकी विद्वान् यो रुद्राक्षकिरीटवान् ।
अणिमाद्याः सिद्धयस्तत्पदपांसव एव हि ॥ ३३७

रुद्राक्षमण्डपं कृत्वा शिवं साम्बं यजेद्बुधः ।
तद्वशे वर्तते शम्भुः सगणः [3] सोमशङ्करः ॥ ३३८

रुद्राक्षकर्णाभरणः श्रवणं येन वै कृतम् ।
सर्वोपनिषदर्थानां सफलं तस्य जीवितम् ॥ ३३९

रुद्राक्षधारिणः शैवान्पश्येद्यः शिवभावतः ।
नयने तस्य सफले चक्षुष्मत्ता तु तस्य च ॥ ३४०

यस्तु रुद्राक्षमालाढ्यान्मानुषत्वेन पश्यति ।
कृतं तेनार्चनं व्यर्थं जपो होमश्च निष्फलः ॥ ३४१

यो वा रुद्राक्षभूषाढ्यान् शिवभावेन पश्यति ।
तेन तप्तं तपः सर्वं कृतं तेन शिवार्चनम् ॥ ३४२

यस्तु रुद्राक्षमणिभिः स्पृष्टतोयाभिषेचनः ।
गङ्गास्नानं कृतं तेन तीर्थचर्या कृता परा ॥ ३४३

रुद्राक्षमेकं यो दद्याच्छिवभक्ताय भक्तितः ।
सस्यपूर्णां वसुमतीं दत्तवाञ्छ्रोत्रियेषु सः ॥ ३४४

यो धत्ते मालिकां भक्त्या त्वष्टोत्तरशतैर्युताम् ।
कैलासे स्वजनैः साकं मोदते शिवसन्निधौ ॥ ३४५

---

[1] कण्ठभूषणमालिका-पा. [2] जपकार्येषु-पा. [3] सोमशेखर इति स्यात्.

अभक्तेभ्यो न वै दद्याद्रुद्राक्षान्मालिकां तथा ।
दद्याद्यदि विमोहेन शिवस्य विमुखो भवेत् ॥ ३४६

परीक्ष्य दद्याद्भक्तेभ्यो भूतिरुद्राक्षमालिकाः ।
शिवेनानुगृहीतोऽसौ शिवसायुज्यमेति च ॥ ३४७

अभक्तान् प्रतिबन्धैर्वा शैवीं भक्तिं [1]समाविशन् ।
शैवः सर्वप्रयत्नेन शिवभक्तान् विधाय च ॥ ३४८

स्वमन्दिरं च स्वग्रामं स्वजनं च स्वराज्यकम् ।
शैवं सर्वप्रयत्नेन कुर्यान्नित्यमतन्द्रितः ॥ ३४९

तत्संतुष्टः परशिवः स्वसायुज्यं प्रयच्छति ।
शिवदेही शिवे भक्तः शिवबन्धुः शिवार्चकः ॥ ३५०

शिवभक्तैः परिवृतः शैवराज्ये वसेत्स्वयम् ।
त्याज्यं राज्यमशैवं च स्वयं च शिवमिच्छता ॥ ३५१

शैवराज्यं प्रपन्नोऽसौ शिवभक्तोत्तमो जनः ।
सदा शिवकथालापी शिवनामानुचिन्तकः ॥ ३५२

शिवमन्त्र[2]ध्यानवांश्च शिवामृतनिषेवणः ।
शिवपूजारतो नित्यं शिवसायुज्यमेति सः ॥ ३५३

यः स्वयं शिवभक्तोऽपि शिवद्रोहिभिरन्वहम् ।
सम्भाषिताच्च सम्पर्कात्तत्पापफलमश्नुते ॥ ३५४

[3]तत्तादृशानां सान्निध्यं प्रयत्नेन विवर्जयेत् ।
सद्भक्तसङ्गो भक्तानां सर्वकामफलप्रदः ॥ ३५५

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञश्रीनीलकण्ठशिवाचार्यकृते
निगमागमसारसङ्ग्रहे क्रियासारे रुद्राक्षप्रशंसनं नाम
एकादशोपदेशः समाप्तः

———

[1] समादिशन्–पा. [2] न्याध्ययन–पा. [3] तस्मादशैवसान्निध्यं–पा.

## द्वादशोपदेशप्रारम्भः

द्वादशे चोपदेशेऽस्मिन्पञ्चाक्षरजपक्रमम् ।
अभिधास्ये यथायोगं पुराणागममार्गतः ॥ १

वर्णं दैवं तथा शक्तिमाधारं छन्द एव च ।
ऋषिं स्थानं ब्रह्म चाथ [1] आयुधानि तथैव हि ॥ २

कलां गुणं च वक्त्रं च प्रकाशं करणं तथा ।
वायुज्ञानेन्द्रि[2]याण्येवं षोडशैते क्रमोदिताः ॥ ३

नकारं पीतवर्णं स्याद्ब्रह्मास्त्रं चाधिदैवतम् ।
सावित्री शक्तिरित्युक्ता चाधारं पृथिवी तथा ॥ ४

अनुष्टुप्छन्दसा युक्तं वासिष्ठार्षं तथैव हि ।
स्थानं पश्चिमतो वक्त्रं सद्योजातं तु ब्रह्मकम् ॥ ५

आयुधं वज्रमेवोक्तं [3] कला निवृत्तिरेव च ।
गुणः कठिनमेवोक्तः चतुरश्रक्रमेण तु ॥ ६

ज्वलदग्निप्रकाशं तु करणं मन एव च ।
प्राणवायुसमायुक्तमिन्द्रियाणां च गन्धकम् ॥ ७

इत्येवं षोडशानां तु नकाराक्षरमुच्यते ।
मकारं जलरूपं च दैवं विष्णुस्तथैव च ॥ ८

लक्ष्मीः शक्तिरिति प्रोक्ता आधारं जलमेव च ।
त्रिष्टुप्छन्दस्समायुक्तं विश्वामित्रो ऋषिस्तथा ॥ ९

स्थानमुत्तरतो वक्त्रं [4] ब्रह्माणं वामदेवकम् ।
आयुधं पद्ममेवोक्तं [5] प्रतिष्ठाख्यकलायुतम् ॥ १०

गुणानां [6] द्रवसंयुक्तं चक्रमर्धसुचन्द्रमाः ।
सोमस्यैव प्रकाशेन करणं बुद्धिसंयुतम् ॥ ११

अपानवायुसंयुक्तं रसज्ञानेन्द्रियं भवेत् ।
इत्येवं षोडशानां तु मकाराक्षरमुच्यते ॥ १२

---

[1] चायुधानां-पा. [2] याणां-पा. [3] कालाग्निर्वक्त्रमेव च-पा. [4] वामदेवं तु ब्रह्मकम्-पा. [5] प्रतिष्ठाकलसंयुतम्-पा. [6] रससंयुक्तं चक्रमर्धानुचन्द्रमाः-पा.

शिकारं वह्निरूपं च रुद्रस्तत्राधिदैवतम् ।
गौरीशक्तिसमायुक्तमाधारं चाग्निरेव च ॥ १३

उष्णिक्छन्दस्समायुक्तं जमदग्निर्ऋषिस्तथा ।
स्थानं दक्षिणतो वक्त्रमघोरं ब्रह्म चैव हि ॥ १४

स्वस्तिकायुधमेवोक्तं विद्या नाम कलापि च ।
गुणं दीप्तथानुसंयुक्तं चक्रं त्रिविधमेव च ॥ १५

तटितां तु प्रकाशेन करणं त्वहमाकृतिः ।
व्यानवायुसमायुक्तं [1] नेत्रेन्द्रियसमन्वितम् ॥ १६

इत्येवं षोडशानां तु शिकाराक्षरमुच्यते ।
वकारं वायुरूपं स्यादधिदैवतमैश्वरम् ॥ १७

अम्बिका स्यान्महाशक्तिर्वायुश्चोदान एव च ।
बृहतीच्छन्दसा युक्तमृषिः काश्यप एव च ॥ १८

स्थानं पूर्वाननं प्रोक्तं ब्रह्म तत्पुरुषेण तु ।
आयुधं बिन्दुरूपं तु कला शान्तिस्तथैव च ॥ १९

गुणालोकेन संयुक्तं स्पर्शज्ञानेन्द्रियं भवेत् ।
इत्येवं षोडशानां तु वकाराक्षरमुच्यते ॥ २०

यकारं व्योमरूपं तु दैवं चैव सदाशिवः ।
उन्मनीशक्तिरेवोक्ता चाधारं व्योम एव हि ॥ २१

जगतीच्छन्दसा युक्तं भारद्वाज ऋषिस्तथा ।
स्थानमूर्ध्वमुखं विद्याद्ब्रह्म चेशानमेव च ॥ २२

आयुधानां तु शूलं स्याच्छान्त्यतीतकलापि च ।
गुणानां चैव शून्यं स्यात्प्रकाशं चन्द्रिकामणेः ॥ २३

करणं प्रकृते रूपं समानो वायुरेव च ।
[2] शब्दो ज्ञानेन्द्रियाणां च इत्येते षोडश क्रमात् ॥ २४

मकाराक्षरमित्युक्तं न भूतो न भविष्यति ।
एकमेव प्रधानं तु पञ्चाक्षरमिति स्मृतम् ॥ २५

---

[1] ज्ञानेन्द्रियस्वरूपकम्–पा. [2] शब्दज्ञानेन्द्रियं चैतदित्येते–पा.

काम्यसिद्धिप्रयोगेन प्रत्यक्षं पञ्चधा भवेत् ।
[1]ततः प्रस्तारकं प्रोक्तं विंशत्येकशतं भवेत् ॥ २६

एवं पञ्चाक्षरं प्रोक्तं गुरोर्वक्त्रेण लभ्यते ।
मन्त्रं पञ्चविधं प्रोक्तं कर्म चाष्टविधं भवेत् ॥ २७

परे पञ्चाक्षरोत्पत्तिः पुनस्तत्रैव लीयते ।
सप्तकोटिमहामन्त्रा रूपवक्त्रैरनेकधा ॥ २८

पञ्चाक्षरे प्रलीयन्ते पुनस्तस्माद्विनिर्गताः ।
षडध्वविन्दुसंयुक्तं कलेवरमिति स्मृतम् ॥ २९

द्विरष्टकलया युक्तं नन्दि (नाद?) रूपं व्यवस्थितम् ।
[2]तपोरते स्थितं सूक्ष्मं पञ्चाक्षरप्रतिष्ठितम् ॥ ३०

तस्मात्पञ्चाक्षरं मन्त्रं वाचकं पञ्चधा भवेत् ।

ओमित्यग्रे व्याहरेन्नम इति पश्चात्ततः शिवायेत्यक्षरत्रयम् । ओमित्येकाक्षरं स्थूलं [3]नकारादिवाय [4]नमः शीति । शिवाय नम इति, मः शिवाय नेति, य नमः शिवेति, नमः शिवायेति । चिदादिपरेच्छाज्ञानक्रियापञ्चकला तदुत्तीर्णा परा कला तत्संवलितं सादाख्यपञ्चकसम्पुटितं परा सादाख्योत्तीर्णं अकारोकारमकार-विन्दुनादपञ्चकवाच्यार्थस्थूलप्रणवरूपनकारादिपञ्चाक्षररूपषडध्व-मयविग्रहस्थूलसूक्ष्मैकरूपव्यष्टिसमष्ट्यात्मकषडक्षरस्वरूपपञ्चाक्षर-ओं नमः शिवायेति साक्षाच्चिच्छक्त्यविनाभूतं महालिङ्गं विन्दु-

---

[1] ततोपचारकं प्रोक्तं-पा. [2] तयोरन्ते–पा.

([3])

[1] नवाय मः शि

[2] शिवाय नमः

[3] मः शिवाय न

[4] य नमः शिवा

[5] नमः शिवाय.

[4] नम इत्यस्य स्थाने मः इति स्यात् .

नादात्मकं नादवाच्यं वाचकाभिन्नं [1]अकारो नकारश्चेशानमुखात्, उकारो मकारश्च तत्पुरुषात्, मकारः शिकारश्चाघोरात्, बिन्दुर्वकारश्च वामदेवात्, नादो यकारश्च सद्योजातात्, एते वर्णा व्यष्टिसमष्ट्यात्मकाः समष्टिरूपं प्राप्ताः अर्थो नमः शिवायेत्यर्थो नमः शिवायेति। इमामुपनिषदं योऽधीते स सर्वोत्तरो भवति। शिवसायुज्यमाप्नोति। ओं सत्यमित्युपनिषत्।

इति पञ्चाक्षरजाबालोपनिषत्।

पञ्चब्रह्मोपनिषदि—

ओं भो भो भगवन्नादौ किं [2]जातमिति। सद्योजातमिति। किं भगव इति अघोर इति। किं भगव इति वामदेव इति। किं वा पुनरिमे भगव इति। तत्पुरुष इति। किं वा पुनरिमे भगव इति। सर्वेषां विद्यानां प्रदाता ईशान इति। ईशानो भूतभव्यस्य सर्वेषां देवयोगिनाम्। कति वर्णाः कति भेदाः कति शक्तयः यत्सर्वं तद्गुह्यं तस्मै नमो महादेवाय महारुद्राय प्रोवाच तस्मै भगवान्महेशः।

गोप्याद्गोप्यतरं लोके यद्यस्ति श्रुणु शाकल॥

सद्योजाता मही पूषा रमा ब्रह्मा त्रिवृत्स्वरः।
ऋग्वेदो गार्हपत्यं च मन्द्राः सप्त स्वरास्तथा॥

वर्णं पीतं क्रिया शक्तिः सर्वाभीष्टफलप्रदम्।
अघोरं सलिलं चन्द्रो गौरी वेदद्वितीयकम्॥

नीरदाभं स्वरं सान्द्रं दक्षिणाग्निरुदाहृतम्।
पञ्चाशद्वर्णसंयुक्तं स्थितिरिच्छाक्रियान्वितम्॥

---

(1)—

अ, न—ईशानात्,

उ, मः—तत्पुरुषात्,

म्, शि—अघोरात्,

बिन्दुः, वा—वामदेवात्,

नादो यकारश्च—सद्योजातात्.

[2] ज्ञानमि–पा.

शक्तिरक्षणसंयुक्तं सर्वाघौघविनाशनम् ।
सर्वदुःखप्रशमनं सर्वैश्वर्यफलप्रदम् ॥

वामदेवं महाबोधदायकं पावकात्मकम् ।
विद्यालोकसमायुक्तं भानुकोटिसमप्रभम् ॥

प्रसन्नं सामवेदाख्यं [1]गानाष्टकसमन्वितम् ।
धीरस्वरमधीरं चाहवनीयमनुत्तमम् ॥

ज्ञानसंहारसंयुक्तं शक्तिद्वयसमन्वितम् ।
वर्णं शुक्लं तमोमिश्रं पूर्णबोधकरं स्वरम् ॥

धामत्रयनियन्तारं धामत्रयसमन्वितम् ।
सर्वसौभाग्यदं नृणां सर्वकर्मफलप्रदम् ॥

अष्टाक्षरसमायुक्तमष्टपत्रान्तरस्थितम् ।
[2]यत्तत्तत्पुरुषं प्रोक्तं वायुमण्डलसंयुतम् ॥
[3]उपधाग्निसमायुक्तं मन्त्रशक्तिनियामकम् ।
पञ्चाशत्स्वरवर्णाख्यमथर्वश्रुतिरूपकम् ॥

कोटिकोटिगणाध्यक्षं ब्रह्माण्डाखण्डविग्रहम् ।
वर्णं रक्तं कामदं च सर्वाधिव्याधिभेषजम् ॥

सृष्टिस्थितिलयादीनां कारणं सर्वशक्तिधृक् ।
अवस्थात्रितयातीतं तुरीयं [4]ब्रह्मसंज्ञकम् ॥
ब्रह्मविष्ण्वादिभिः सेव्यं सर्वेषां जनकं परम् ।
ईशानं परमं विद्यात्प्रेरकं बुद्धिसाक्षिणम् ॥

आकाशात्मकमव्यक्तमोङ्कारस्वरभूषितम् ।
सर्वदेवमयं शान्तं शान्त्यतीतं स्वराद्बहिः ॥

अकारादिस्वराध्यक्षमाकाशमयविग्रहम् ।
पञ्चकृत्यनियन्तारं पञ्चब्रह्मात्मकं बृहत् ॥

पञ्चब्रह्मोपसंहारं कृत्वा स्वात्मनि संस्थितः ।
स्वशक्तिवैभवात्सर्वान् संहृत्य स्वात्मनि स्थितः ॥

---

[1] नानाष्टक–पा. [2] इति तत्पुरुषं–पा. [3] उपदग्नि–पा. पञ्चाग्निना समायुक्तं–पा, [4] ब्रह्मसंज्ञितम्–पा.

पञ्चब्रह्मात्मकातीतो भासते [1]स्वस्वतेजसा ।
आदावान्ते च मध्ये च भासते नान्यहेतुना ॥

मायया मोहिताः शम्भोर्महादेवं जगद्गुरुम् ।
न जानन्ति सुराः सर्वे सर्वकारणकारणम् ॥

न सन्दृशे तिष्ठति रूपमस्य
परात्परं पुरुषं विश्वधाम ।
येन प्रकाशते विश्वं यत्रैव प्रविलीयते ।
तद्ब्रह्म परमं शान्तं तद्ब्रह्मास्मि परं पदम् ॥

पञ्चब्रह्म परं विद्यात्सद्योजातादिपूर्वकम् ।
दृश्यते श्रूयते यच्च पञ्चब्रह्मात्मकं स्वयम् ॥

पञ्चधा वर्तमानं तत्ब्रह्मकार्यमिति स्मृतम् ।
ब्रह्मकार्यमिति ज्ञात्वा ईशानं प्रतिपद्यते ॥

पञ्चब्रह्मात्मकं सर्वं स्वात्मनि प्रविलाप्य च ।
सोऽहमस्मीति जानीयाद्विद्वान्ब्रह्मामृतो भवेत् ॥

इत्येतद्ब्रह्म जानीयाद्यः स मुक्तो न संशयः ।
पञ्चाक्षरमयं शम्भुं पञ्चब्रह्मस्वरूपिणम् ॥

नकारादियकारान्तं ज्ञात्वा पञ्चाक्षरं जपेत् ।
सर्वं [2]पञ्चात्मकं विद्यात्पञ्चब्रह्मात्मकत्वतः ॥

पञ्चब्रह्मात्मिकां विद्यां योऽधीते भक्तिभावितः ।
स पञ्चात्मकतामेत्य भासते पञ्चधा स्वयम् ॥

एवमुक्त्वा महादेवो गालवस्य महात्मनः ।
कृपां चकार तत्रैव स्वान्तर्धिमगमत्स्वयम् ॥

वायवीयसंहितायाम्—

ज्ञानामृतेन तृप्तस्य भक्त्या च विवशात्मनः ।
नान्तर्न च बहिः कृष्ण कृत्यमस्ति कदाचन ॥

तस्मात्क्रमेण सन्त्यज्य बाह्यमाभ्यन्तरं तथा ।
ज्ञानेन ज्ञेयमालोक्याज्ञानं चापि परित्यजेत् ॥

---

[1] स्वरतेजसा—चा.  [2] पञ्चाक्षरं—पा.

नैकाग्रं चेच्छिवे चित्तं किं कृतेनापि कर्मणा ।
(एकाग्रमेव चेच्चित्तं किं कृतेनापि कर्मणा)
तस्मात्कर्माण्यकृत्वा वा कृत्वा वान्तर्बहिः क्रमात् ॥

येन केनाप्युपायेन शिवे चित्तं निवेशयेत् ।
शिवे निविष्टचित्तानां प्रतिष्ठितधियां सताम् ॥

परत्रेह च सर्वत्र निर्वृतिः परमा भवेत् ।
इहोंनमः शिवायेति मन्त्रेणानेन सिद्धयः ॥

स तस्मादधिगन्तव्यः परापरविभूतये ।

श्रीकृष्णः—

महर्षिवर सर्वज्ञ सर्वज्ञानमहोदधे ॥

पञ्चाक्षरस्य माहात्म्यं वक्तुमर्हसि साम्प्रतम् ॥

उपमन्युः—

पञ्चाक्षरस्य माहात्म्यं वर्षकोटिशतैरपि ।
न शक्यं विस्तराद्वक्तुं तस्मात्संक्षेपतः शृणु ॥

वेदे शिवागमे चायमुभयत्र षडक्षरः ।
मन्त्रःस्थितः सदा मुख्यो लोके पञ्चाक्षरः स्मृतः ॥

सर्वमन्त्राधिकश्चायमोङ्काराद्यः षडक्षरः ।
सर्वेषां शिवभक्तनामशेषार्थप्रसाधकः ॥

तदल्पाक्षरमर्थाढ्यं वेदसारं विमुक्तिदम् ।
आज्ञासिद्धमसन्दिग्धं वाक्यमेतच्छिवात्मकम् ॥

नानासिद्धियुतं दिव्यं लोकचित्तानुरञ्जकम् ।
सुनिश्चितार्थं गम्भीरं वाक्यं तत्पारमैश्वरम् ॥

मन्त्रं सुखमुखोच्चार्यमशेषार्थप्रसिद्धये ।
प्राहों नमः शिवायेति सर्वज्ञः सर्वदेहिनाम् ॥

तद्बीजं सर्वविद्यानां मन्त्रमाद्यं षडक्षरम् ।
अतिसूक्ष्मं महार्थं च ज्ञेयं तद्वटबीजवत् ॥

देवो गुणत्रयातीतः सर्वज्ञः सर्वकृत्प्रभुः ।
ओमित्येकाक्षरे मन्त्रे स्थितः सर्वगतः शिवः ॥

ईशानाद्यानि सूक्ष्माणि ब्रह्माण्येकाक्षराणि तु ।
मन्त्रे नमः शिवायेति संस्थितानि यथाक्रमम् ॥

मन्त्रे षडक्षरे सूक्ष्मपञ्चब्रह्मतनुः शिवः ।
वाच्यवाचकभावेन स्थितः साक्षात्स्वभावतः ॥

वाच्यः शिवः प्रमेयत्वान्मन्त्रस्तद्वाचकः स्थितः ।
वाच्यवाचकभावोऽयमनादिः संस्थितस्तयोः ॥

यथानादिःप्रवृत्तोऽयं घोरः संसारसागरः ।
शिवोऽपि हि तथानादिः संसारान्मोचकः स्थितः ॥

व्याधीनां भेषजं यद्वत्प्रतिपक्षं स्वभावतः ।
तद्वत्संसारदोषाणां प्रतिपक्षः शिवः स्मृतः ॥

असत्यस्मिन् जगन्नाथे तमोभूतमिदं भवेत् ।
आदित्येन यथा हीनं निरालोकमिदं जगत् ॥

अभावादीश्वरस्येयं जगत्सृष्टिः कथं भवेत् ।
अचेतनत्वात्प्रकृतेरज्ञत्वात्पुरुषस्य च ॥

प्रधानपरमाण्वादि यावत् किंचिदचेतनम् ।
न तत्कर्तृ स्वयं दृष्टं बुद्धिमत्कारणं विना ॥

धर्माधर्मोपदेशश्च बन्धमोक्षविचारणा ।
न सर्वज्ञं विना पुंसामादिसर्गः प्रसिध्यति ॥

वैद्यं विना निरानन्दाः क्लिश्यन्ते रोगिणो यथा ।
शिवं विना निराक्रान्तं क्लिश्यते हि जगत्तथा ॥

तस्मादनादिः सर्वज्ञः परिपूर्णः सदाशिवः ।
अस्ति नाथः परित्राता पुंसां ससारसागरात् ॥

आदिमध्यान्तनिर्मुक्तः स्वभावविमलः प्रभुः ।
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमैः ॥

तस्याभिधानमात्रोऽयमभिधेयश्च स स्मृतः ।
अभिधानाभिधेयत्वान्मन्त्रसिद्धः परः शिवः ॥

एतावद्धि शिवज्ञानमेतावत्परमं पदम् ।
यदों नमः शिवायेति शिववाक्यं षडक्षरम् ॥

विधिवाक्यमिदं शैवं नार्थवादं शिवात्मकम् ।
यः सर्वज्ञः स सम्पूर्णः स्वभावविमलः शिवः ॥

लोकानुग्रहकर्ता यः स मृषार्थं कथं वदेत् ।
यद्यथावस्थितं वस्तु गुणदोषैः स्वभावतः ॥

यावत्फलं च यत्पूर्णं सर्वज्ञस्तु यथा वदेत् ।
रागाज्ञानादिभिर्दोषैर्ग्रस्तत्वादनृतं वदेत् ॥

ते चेश्वरे न विद्यन्ते ब्रूयात्स कथमन्यथा ।
अजाताशेषदोषेण सर्वज्ञेन शिवेन यत् ॥

प्रणीतममलं वाक्यं तत्प्रमाणं न संशयः ।
तस्मादीश्वरवाक्यानि श्रद्धेयानि विपश्चिता ॥

यथार्थं पुण्यपापेषु तदश्रद्धः पतत्यधः ।
स्वर्गापवर्गसिध्यर्थं भाषितं यत्सुशोभनम् ॥

वाक्यं मुनिवरैः शान्तैस्तद्विज्ञेयं सुभाषितम् ।
रागद्वेषानृतक्रोधकामतृष्णानुसारि यत् ॥

वाक्यं निरयहेतुत्वात्तदभाषितमुच्यते ।
संस्कृतेनापि किं तेन मृदुना ललितेन च ॥

अविद्यारागवाक्येन संसारक्लेशहेतुना ।
यच्छ्रुत्वा जायते श्रेयो रागादीनां च संक्षयः ॥

विरूपमपि तद्वाक्यं विज्ञेयमतिशोभनम् ।
बहुत्वेऽपि हि मन्त्राणां सर्वज्ञेन शिवेन यत् ॥

प्रणीतो विमलो मन्त्रो न तेन सदृशः क्वचित् ।
साङ्गानि वेदशास्त्राणि संस्थितानि षडक्षरे ॥

न तेन सदृशस्तस्मान्मन्त्रोऽस्त्यप्यपरं क्वचित् ।
सप्तकोटिमहामन्त्रैरुपमन्त्रैरनेकधा ॥

मन्त्रष्षडक्षरो भिन्नः सूत्रं वृत्त्यात्मना यथा ।
शिवज्ञानानि यावन्ति विद्यास्थानानि यानि च ॥

षडक्षरस्य सूत्रस्य तानि भाष्यं समासतः ।
किं तस्य बहुभिर्मन्त्रैः शास्त्रैर्वा बहुविस्तरैः ॥

यस्यों नमः शिवायेति मन्त्रोऽयं हृदि संस्थितः ।
तेनाधीतं श्रुतं तेन तेन [1] सर्वमनुष्ठितम् ॥

येनों नमः शिवायेति मन्त्राभ्यासः स्थिरीकृतः ।
नमस्कारादिसंयुक्तं शिवायेत्यक्षरत्रयम् ॥

जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम् ।
अन्त्यजो वाधमो वाऽपि मूर्खो वा पण्डितोऽपि वा ॥

पञ्चाक्षरजपे निष्ठो मुच्यते पापपञ्जरात् ।
इत्युक्तं परमेशेन देव्या पृष्टेन शूलिना ॥

हिताय सर्वमर्त्यानां द्विजातीनां विशेषतः ।

देव्युवाच—

कलौ कलुषिते काले दुर्जये दुरतिक्रमे ।
अपुण्यतमसा छन्ने लोके धर्मपराङ्मुखे ॥

क्षीणे वर्णाश्रमाचारे सङ्कटे समुपस्थिते ।
सर्वाधिकारे संदिग्धे निश्चिते वापि पर्यये ॥

तदोपदेशे विहते गुरुशिष्यक्रमे गते ।
केनोपायेन मुच्यन्ते भक्तास्तव महेश्वर ॥

ईश्वरः—

आश्रित्य परमां विद्यां हृद्यां पञ्चाक्षरीं मम ।
भक्त्या च भावितात्मानो मुच्यन्ते कलिजा नराः ॥

मनोवाक्कायजैर्दोषैर्वक्तुं स्मर्तुमगोचरैः ।
दूषितानां कृतघ्नानां निर्दयानां खलात्मनाम् ॥

लुब्धानां वक्रमनसामपि मत्प्रवणात्मनाम् ।
मम पञ्चाक्षरी विद्या संसारभयतारिणी ॥

मयैवमसकृद्देवि प्रतिज्ञातं धरातले ।
पतितोऽपि विमुच्येत मद्भक्तो विद्ययानया ॥

---

[1] सर्वमधिष्ठितम्—पा.

देवी—

कर्मायोग्यो भवेन्मर्त्यः पतितो यदि सर्वथा ।
कर्मायोग्येन यत्कर्म कृतं तन्नरकाय हि ॥

ततः कथं विमुच्येत पतितो विद्ययाऽनया ।

ईश्वरः—

सत्यमेतत्त्वया प्रोक्तं तथापि शृणु सुन्दरि ॥

रहस्यमिति मत्वैतद्गोपितं यन्मया पुरा ।
समन्त्रकं मां पतितः पूजयेद्यदि मोहितः ॥

नारकी स्यान्न सन्देहो मम पञ्चाक्षरीं विना ।
अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः ॥

तेषामेतैर्व्रतैर्नास्ति मम लोकसमागमः ।
भक्त्या पञ्चाक्षरेणैव योऽहि मां सकृदर्चयेत् ॥

सोऽपि गच्छेन्मम स्थानं मन्त्रस्यास्यैव गौरवात् ।
तस्मात्तपांसि यज्ञाश्च व्रतानि नियमास्तथा ॥

पञ्चाक्षरार्चनस्यैते कोट्यंशेनापि नो समाः ।
बद्धो वाप्यथ मुक्तो वा पाशा[1]त्पञ्चाक्षरेण यः ॥

पूजयेन्मां स मुच्येत नात्र कार्या विचारणा ।
अरुद्रो वा विरुद्रो वा सकृत्पञ्चाक्षरेण यः ॥

पूजयेत्पतितो वापि मूढो वा मुच्यते नरः ।
षडक्षरेण वा देवि तथा पञ्चाक्षरेण वा ॥

स ब्रह्माङ्गेन मां भक्त्या पूजयेद्यदि मुच्यते ।
पतितोऽपतितो वापि मन्त्रेणानेन पूजयेत् ॥

मम भक्तो जितक्रोधो ह्यलुब्धो लुब्ध एव वा ।
अलब्धा लब्ध एवेह कोटिकोटिगुणाधिकः ॥

तस्माल्लब्ध्वैव मां देवि मन्त्रेणानेन पूजयेत् ।
लब्ध्वा संपूजयेद्यस्तु मैत्र्यादिगुणसंयुतः ॥

---

[1] पञ्चाक्षरे क्षमः–पा.

ब्रह्मचर्यरतो भक्त्या मत्सायुज्यमवाप्नुयात् ।
किमत्र बहुनोक्तेन भक्ताः सर्वेऽधिकारिणः ॥

मम पञ्चाक्षरे मन्त्रे तस्माच्छ्रेष्ठतरो हि सः ।
पञ्चाक्षरप्रभावेण लोका वेदा महर्षयः ॥

तिष्ठन्ति शाश्वता धर्मा देवाः सर्वमिदं जगत् ।
प्रलये समनुप्राप्ते नष्टे स्थावरजङ्गमे ॥

सर्वं प्रकृतिमापन्नं तत्र संलयमेष्यति ।
एकोऽहं संस्थितो देवि न द्वितीयोऽस्ति कुत्रचित् ॥

तदा वेदाश्च शास्त्राणि सर्वे पञ्चाक्षरे स्थिताः ।
ते नाशं नैव सम्प्राप्ता मच्छक्त्यानुप्रपालिताः ॥

ततः सृष्टिरभून्मत्तः प्रकृत्यात्मविभेदतः ।
गुणमूर्त्यात्मनां चैव ततोऽवान्तरसंहृतिः ॥

तदा नारायणः शेते देवो मायामयीं तनूम् ।
आस्थाय भोगिपर्यङ्के शयानस्तोयमध्यगः ॥

तन्नाभिपङ्कजाज्जातः पञ्चवक्त्रः पितामहः ।
सिसृक्षमाणो लोकांस्त्रीन्न सक्तो ह्यसहायवान् ॥

मुनीन् दश ससर्जादौ मानसानमितौजसः ।
तेषां सिद्धिविवृध्यर्थं मां प्रोवाच पितामहः ॥

मत्पुत्राणां महादेव शक्तिं देहि महेश्वर ।
इत्येवं प्रार्थितस्तेन पञ्चवक्त्रधरो ह्यहम् ॥

पञ्चाक्षराणि क्रमशः प्रोक्तवान् पद्मयोनये ।
स पञ्चवदनैस्तानि गृह्णन् लोकपितामहः ॥

वाच्यवाचकभावेन ज्ञातवान्मां महेश्वरम् ।
ज्ञात्वा प्रयोगं विधिवत् सिद्धमन्त्रः प्रजापतिः ॥

पुत्रेभ्यः प्रददौ मन्त्रं मन्त्रार्थं च यथातथं ।
ते लब्ध्वा मन्त्ररत्नं तु साक्षाल्लोकपितामहात् ॥

तदाज्ञप्तेन मार्गेण मदाराधनकाङ्क्षिणः ।

मेरोस्तु शिखरे रम्ये मुञ्जवान्नाम पर्वतः ।
मत्प्रियः सततं श्रीमान् मद्भक्तैः परिरक्षितः ॥

तस्याभ्याशे तपस्तीव्रं लोकसृष्टिसमुत्सुकाः ।
दिव्यं वर्षसहस्रं तु वायुभक्षाः समाचरन् ॥

तेषां भक्तिमहं दृष्ट्वा सद्यः प्रत्यक्षतामियाम् ।
ऋषिं छन्दश्च कीलं च वीजं शक्तिं च दैवतम् ॥

न्यासं षडङ्गं दिग्बन्धं विनियोगमशेषतः ।
प्रोक्तवानहमार्याणां जगत्सृष्टिविवृद्धये ॥

ततस्ते मन्त्रमाहात्म्यादृषयस्तपसैधिताः ।
सृष्टिं वितेनिरे सम्यक् सदेवासुरमानुषाम् ॥

अस्याः परमविद्यायाः स्वरूपमधुनोच्यते ।
आदौ नमः प्रयोक्तव्यं शिवायेति ततः परम् ॥

सैषा पञ्चाक्षरी विद्या सर्वश्रुतिशिरोगता ।
शब्दजातस्य सर्वस्य बीजभूता सनातनीः ॥

प्रथमं मन्मुखोद्गीर्णा सा ममैवास्ति वाचिका ।
तप्तचामीकरप्रख्या पीनोन्नतपयोधरा ॥

चतुर्भुजा त्रिणयना बालेन्दुकृतशेखरा ।
पद्मोत्पलकरा सौम्या वरदाभयपाणिका ॥

सर्वलक्षणसम्पन्ना सर्वाभरणभूषिता ।
[1] सितपद्मासनासीना नीलकुञ्चितमूर्धजा ॥

अस्याः पञ्चविधा वर्णाः प्रस्फुरद्रश्मिमण्डलाः ।
पीतः कृष्णस्तथा धूम्रः श्वेताभो रक्त एव च ॥

पृथक् प्रयोज्या यद्येते विन्दुनादविभूषिताः ।
अर्धचन्द्राकृतिर्विन्दुर्नादो दीपशिखाकृतिः ॥

बीजं द्वितीयं बीजेषु मन्त्रस्यास्य वरानने ।
दीर्घपूर्वं तत्तुरीयं पञ्चमं शक्तिमादिशेत् ॥

---

[1] सिद्ध–पा.

वामदेवो नाम ऋषिः पङ्क्तिश्छन्द उदाहृतम् ।
देवता शिव एवाहं मन्त्रस्यास्य वरानने ॥
गौतमोऽत्रिर्वरारोहे विश्वामित्रस्तथाङ्गिराः ।
भारद्वाजश्च वर्णानां क्रमशो ऋषयः स्मृताः ॥
गायत्र्यनुष्टुप् त्रिष्टुप् च छन्दांसि बृहती विराट् ।
इन्द्रो रुद्रो हरिर्ब्रह्मा स्कन्दस्तेषां च देवताः ॥
मम पञ्चमुखान्याहुः स्थानं तेषां वरानने ।
पूर्वादि चोर्ध्वपर्यन्तं नकारादि यथाक्रमम् ॥
उदात्तः प्रथमो वर्णश्चतुर्थश्च द्वितीयकः ।
पञ्चमः स्वरितश्चैव मध्यमो निहतः स्मृतः ॥
मूलविद्या शिवं शैवं सूत्रं पञ्चाक्षरं तथा ।
नामान्यस्य विजानीयाच्छैवं मे हृदयं महत् ॥
नकारः शिर उच्येत मकारस्तु शिखोच्यते ।
शिकारः कवचं तद्वद्वाकारो नेत्रमुच्यते ॥
यकारोऽस्त्रं नमः स्वाहा वषट्हुंवौडित्यपि ।
फडित्यपि च वर्णानां मन्त्राङ्गत्वं [1]यथा तथा ॥
तत्रापि मूलमन्त्रोऽयं किंचिद्भेदसमन्वयात् ।
तत्रापि पञ्चमो वर्णो द्वादशस्वरभूषितः ॥
तस्मादेतेन मन्त्रेण मनोवाक्कायभेदतः ।
आवयोरर्चनं कुर्याज्जपहोमादिकं तथा ॥
यथाप्रज्ञं यथाश्रद्धं यथा कालं यथा मति ।
यथाशक्ति यथासम्पद्यथायोगं यथारति ।
यदाकदापि वा भक्त्या यत्र कुत्रापि वा कृता ।
येन केनापि वा देवि पूजा मुक्तिं नयिष्यति ॥
मय्यासक्तेन मनसा यत्कृतं मम सुन्दरि ।
मत्प्रियं च शिवं चैव क्रमेणाप्यक्रमेण वा ॥

---

[1] यदा तदा—पा.

तथापि मम भक्ता ये नात्यन्तविवशाः पुनः ।
तेषां सर्वेषु शास्त्रेषु मयैव नियमः कृतः ॥

तत्रादौ सम्प्रवक्ष्यामि मन्त्रसङ्ग्रहणं शुभम् ।
यद्विना निष्फलं जाप्यं येन वा सफलं भवेत् ॥

ईश्वरः—

आज्ञाहीनं क्रियाहीनं श्रद्धाहीनं वरानने ।
आज्ञार्थं दक्षिणाहीनं सदाजप्तं च निष्फलम् ॥

आज्ञासिद्धं क्रियासिद्धं श्रद्धासिद्धं ममात्मकम् ।
एवं चेद्दक्षिणासिद्धं मन्त्रसिद्धं महत्फलम् ॥

उपगम्य गुरुं विप्रमार्यं तत्वार्थवेदिनम् ।
जापिनं सद्गुणोपेतं ध्यानयोगपरायणम् ॥

तोषयेत्तं प्रयत्नेन भावशुद्धिसमन्वितः ।
वाचा च मनसा चैव कायेन द्रविणेन च ॥

आचार्यं पूजयेच्छिष्यः सर्वदातिप्रयत्नतः ।
हस्त्यश्वरथरत्नानि क्षेत्राणि च गृहाणि च ॥

भूषणानि च वासांसि धान्यानि च धनानि च ।
एतानि गुरवे दद्याद्भक्तया च विभवे सति

वित्तशाठ्यं न कुर्वीत यदीच्छेत्सिद्धिमात्मनः ।
पश्चान्निवेदय स्वात्मानं गुरवे सपरिच्छदम् ॥

एवं सम्पूज्य विधिवद्यथाशक्ति त्ववञ्चयन् ।
आददीत गुरोर्मन्त्रं ज्ञानं चैव क्रमेण तु ॥

एवं तुष्टो गुरुः शिष्यं पूजकं वत्सरोषितम् ।
शुश्रूषुमनहङ्कारं स्नातं शुचिसुपोषितम् ॥

स्नापयित्वा विशुध्यर्थं पूर्णकुम्भधृतेन वै
जलेन मन्त्रसिद्धेन पुण्यद्रव्ययुतेन च ॥

अलङ्कृत्य सुवेषं च गन्धस्रग्वस्त्रभूषणैः ।
पुण्याहं वाचयित्वा तु ब्राह्मणानभिपूज्य च ॥

समुद्रतीरे नद्यां च गोष्ठे देवालयेऽपि वा ।
शुचौ देशे गृहे वापि काले सिद्धिकरे तिथौ ॥

नक्षत्रे शुभयोगे च सर्वदोषविवर्जिते ।
अनुगृह्य ततो दद्याज्ज्ञानं मम यथाविधि ॥

स्वरेणोच्चारयेत्सम्यगेकान्तेऽतिप्रसन्नधीः ।
उच्चार्योच्चारयित्वा तमावयोर्मन्त्रमुत्तमम् ॥

शिवं चास्तु शुभं चास्तु शोभनं च प्रियोऽस्त्विवति ।
एवं दद्याद्गुरुर्मन्त्रमाज्ञां चैव ततः परम् ॥

एवं लब्ध्वा गुरोर्मन्त्रमाज्ञां चैव समाहितः ॥

सङ्कल्प्य च जपेन्नित्यं पुरश्चरणपूर्वकम् ।
यावज्जीवं जपेन्नित्यमष्टोत्तरसहस्रकम् ॥

अनन्यस्तत्परो भूत्वा स याति परमां गतिम् ।
जपेदक्षरलक्षं वै चतुर्गुणितमादरात् ॥

नक्ताशी संयमी यः स पौरश्चरणिकः स्मृतः ।
यः पुरश्चरणं कृत्वा नित्यजापी भवेत्पुनः ॥

तस्य नास्ति समो लोके स सिद्धः सिद्धिदो भवेत् ।
स्नानं कृत्वा शुचौ देशे बध्वा रुचिरमासनम् ॥

त्वया मां हृदि संचित्य स्वगुर्वन्तान् गुरूंस्तथा ।
प्राङ्मुखोदङ्मुखो वापि मौनी चैकाग्रमामसः ॥

विशोध्य पञ्चतत्त्वानि दहनप्लावनादिभिः ।
मन्त्रन्यासादिकं कृत्वा सकलीकृतविग्रहः ॥

आवयोर्विग्रहं ध्यायेत्प्राणापानौ नियम्य च ।
विद्यास्थानं स्वरं रुपमृषिं छन्दोऽधिदैवतम् ॥

वीजं शक्तिं तथा वाच्यं स्मृत्वा पञ्चाक्षरीं जपेत् ।
उत्तमं मानसं जाप्यमुपांशुं मध्यमं विदुः ॥

अधमं वाचिकं प्राहुरागमार्थविशारदाः ।
उत्तमं रुद्रदैवत्यं मध्यमं विष्णुदैवतम् ॥

अधमं ब्रह्मदैवत्यमित्याहुरनुपूर्वशः ।
यदुच्चनीचस्वरितैः स्पष्टास्पष्टपदाक्षरैः ॥

मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः।
जिह्वामात्रपरिस्पन्दादीषदुच्चारितोऽपि वा ॥

अपरैरश्रुतः किंचित् श्रुतो वोपांशुरुच्यते ।

धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ।
शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः ॥

वाचिकस्त्वेक एव स्यादुपांशुः शतमुच्यते ।
साहस्रं मानसः प्रोक्तः सगर्भस्तु शताधिकः ॥

प्राणायामसमायुक्तः सगर्भो जप उच्यते ।
आद्यन्तयोरगर्भोऽपि प्राणायामः प्रशस्यते ॥

चत्वारिंशत्समावृत्तीः प्राणानायम्य संस्मरेत् ।
मन्त्रं मन्त्रार्थविद्धीमानशक्तः शक्तितो जपेत् ॥

पञ्चकं त्रिकमेकं वा प्राणायामं समाचरेत् ।
अगर्भं वा सगर्भं वा सगर्भस्तु प्रशस्यते ॥

सगर्भादपि साहस्रं सध्यानो जप उच्यते ।
एषु पञ्चविधेष्वेकः कर्तव्यः शक्तितो जपः ॥

अङ्गुल्या जपसङ्ख्यानमेकमेवमुदाहृतम् ।
रेखयाऽष्टगुणं विद्यात्पुत्रजीवैर्दशाधिकम् ॥

शतं स्याच्छङ्खमणिभिः प्रवालैस्तु सहस्रकम् ।
स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥

पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते ।
कुशग्रन्थ्या च रुद्राक्षैरनन्तं फलमुच्यते ॥

त्रिंशदक्षैः कृता माला धनदा जपकर्मणि ।
सप्तविंशतिसङ्ख्याकैरक्षैः पुष्टिप्रदा भवेत् ॥

पञ्चविंशतिसङ्ख्याकैः कृता मुक्तिं प्रयच्छति ।
अक्षैस्तु पञ्चदशभिरभिचारफलप्रदा ॥

अङ्गुष्ठं मोक्षदं विद्यात्तर्जनीं शत्रुनाशिनीम् ।
मध्यमां धनदां शान्तिं करोत्येषा ह्यनामिका ॥

अष्टोत्तरशतं माला तत्र स्यादुत्तमोत्तमा ।
शतसङ्ख्योत्तमा माला पञ्चाशद्भिस्तु मध्यमा ।
चतुष्पञ्चाशदक्षैस्तु ह्यधमा परिकीर्तिता ॥

इत्येवं मालया कुर्याज्जपं कस्मै न दर्शयेत् ।
कनिष्ठाऽकर्षणी प्रोक्ता जपकर्मणि शोभना ।
अङ्गुष्ठेन जपेज्जप्यमन्यैरङ्गुलिभिः सह ॥

अङ्गुष्ठेन विना जप्यं कृतं तदफलं यतः ।
गृहे जपं समं विद्याद्गोष्ठे शतगुणं भवेत् ॥

पुण्यारण्ये तथारामे सहस्रगुणमुच्यते ।
अयुतं पर्वते पुण्ये नद्यां लक्षमुदाहृतम् ॥

कोटिं देवालये प्राहुरनन्तं मम सन्निधौ ।
सूर्यस्याग्नेर्गुरोरिन्दोर्दीपस्य च जलस्य च ॥

विप्राणां च गवां चैव सन्निधौ शस्यते जपः ।
तत्पूर्वाभिमुखं वश्यं दक्षिणं चाभिचारकम् ॥

पश्चिमं धनदं विद्यादौत्तरं शान्तिदं भवेत् ।
सूर्याग्निविप्रदेवानां गुरूणामपि सन्निधौ ॥

अन्येषां च प्रशस्तानां मन्त्रं न विमुखो जपेत् ।
उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः ॥

अपवित्रकरोऽशुद्धो विलपन्न जपेत्क्वचित् ।
क्रोधं मदं क्षुतं तन्द्रां निष्ठीवनविजृम्भणे ॥

दर्शनं च श्वनीचानां वर्जयेज्जपकर्मणि ।
आचामेत्संभवे तेषां स्मरेद्वा मां त्वया सह ॥

ज्योतींषि च प्रपश्येद्वा कुर्याद्वा प्राणसंयमम् ।
अनासनः शयानश्च गच्छन्नुत्थित एव वा ॥

रथ्यायामशिवे स्थाने न जपेत्तिमिरान्तरे ।
प्रसार्य न जपेत्पादौ कुक्कुटासन एव वा ॥

यानशय्याधिरूढो वा चिन्ताव्याकुलितोऽपि वा ।
शक्तश्चेत्सर्वमेवैतदशक्तः शक्तितो जपेत् ॥

किमत्र बहुनोक्तेन समासोक्तिमिमां शृणु ।
सदाचारो जपन् जुह्वन् ध्यायन् भद्रं समश्नुते ॥

आचारः परमो धर्म आचारः परमं धनम् ।
आचारः परमा विद्या ह्याचारः परमा गतिः ॥

आचारहीनः पुरुषो लोके भवति निन्दितः ।
परत्र च सुखी न स्यात्तस्मादाचारवान् भवेत् ॥

यस्य यद्विहितं कर्म वेदैः शास्त्रैश्च वैदिकैः ।
तस्य तेन समाचारः सदाचारो न चेतरः ॥

सद्भिराचरितत्वाच्च सदाचारः स उच्यते ।
सदाचारस्य तस्याहुरास्तिक्यं मूलकारणम् ॥

आस्तिकश्चेत्प्रमादाद्यैः सदाचारादविच्युतः ।
न दुष्यति नरोऽत्यन्तं तस्मादास्तिकतां व्रजेत् ॥

यथेहास्ति सुखं दुःखं सुकृतैर्दुष्कृतैरपि ।
तथा परत्र चास्तीति मतिरास्तिक्यमुच्यते ॥

रहस्यमन्यद्वक्ष्यामि गोपनीयमिदं प्रिये ।
न वाच्यं यस्य कस्यापि नास्तिकस्याथवा पशोः ॥

सदाचारविहीनस्य पतितस्यान्त्यजस्य वा ।
पञ्चाक्षरात्परं नास्ति परित्राणं कलौ युगे ॥

गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः ।
अशुचेर्वा शुचेर्वापि मन्त्रोऽयं न च निष्फलः ॥

अनाचारवतां पुंसामविशुद्धषडध्वनाम् ।

अनादिष्टोऽपि गुरुणा मन्त्रोऽयं न च निष्फलः ।
अन्त्यजस्यापि मूढस्य मूर्खस्य पतितस्य च ॥

निर्मर्यादस्य नीचस्य मन्त्रोऽयं नच निष्फलः ।
सर्वावस्थां गतस्यापि मयि भक्तिमतः परम् ॥

सिध्यत्येष न सन्देहो नापरस्य तु कस्यचित् ।
न लग्नतिथिनक्षत्रवारयोगादयः प्रिये ॥

अस्यात्यन्तमवेक्ष्याः स्युर्नैव [1] सुप्तो न ताडितः ।
न कदाचन कस्यापि रिपुरेष महामनुः ॥

सुसिद्धो वाऽथ सिद्धो वा साध्यो वापि भविष्यति ।
सिद्धेन गुरुणादिष्टः सुसिद्ध इति कथ्यते ॥

असिद्धेनापि वा दत्तः सिद्धः साध्यस्तु केवलः ।
असाधितः साधितो वा सिध्यत्येव न संशयः ॥

श्रद्धातिशययुक्तस्य मयि मन्त्रे तथा गुरौ ।
तस्मान्मन्त्रान्तरांस्त्यक्त्वा सापायानधिकारतः ॥

आश्रयेत्परमां विद्यां साक्षात् पञ्चाक्षरीं बुधः ।
मन्त्रान्तरेषु [2] सिद्धेषु मन्त्र एष न सिध्यति ॥

अस्मिन् सिद्धे महामन्त्रे तेऽपि सिद्धा भवन्त्युत ।
यथा देवेष्वलब्धोऽस्मि लब्धेष्वपि महेश्वरि ॥

मयि लब्धे तु ते लब्धा मन्त्रेष्वेषु समो विधिः ।
ये दोषाः सर्वमन्त्राणां न तेऽस्मिन् संभवन्त्यपि ॥

अस्य मन्त्रस्य जात्यादीननपेक्ष्य प्रवर्तनात् ।
तथापि नैव क्षुद्रेषु फलेषु प्रतियोगिषु ॥

सहसा विनियुञ्जीत यस्मादेष महाफलः ।

(उपमन्युः)—

एवं साक्षान्महादेव्यै महादेवेन शूलिना ॥
हिताय जगतामुक्तः पञ्चाक्षरजपक्रमः ।

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञश्रीनीलकण्ठशिवाचार्यकृते
निगमागमसारसङ्ग्रहे क्रियासारे पञ्चाक्षरजपविधिक्रमो नाम
द्वादशोपदेशः समाप्तः

---

[1] सुप्तः सदोदितः–पा. [2] सर्वेषु–पा.

## त्रयोदशोपदेशप्रारम्भः

त्रयोदशोपदेशेऽस्मिन् पञ्चाक्षरमनोः परम् ।
[1]प्रभावं वर्णरूपोऽसौ जगाद परमेश्वरः ॥

वायवीये श्रीकृष्णः—

भगवन्मन्त्रमाहात्म्यं भवता कथितं श्रुतम् ।
तत्प्रयोगविधानं च साक्षाच्छ्रुतिसमं [2]मया ॥
इदानीं श्रोतुमिच्छामि शिवसंस्कारमुत्तमम् ।
मन्त्रसङ्ग्रहणे किञ्चित्सूचितं न तु विस्तृतम् ॥

उपमन्युः—

हन्त ते कथयिष्यामि सर्वपापविशोधनम् ।
संस्कारं परमं पुण्यं शिवेन परिभाषितम् ॥
सम्यक्कृताधिकारः स्यात्पूजादिषु नरो यतः ।
संस्कारः कथ्यते तेन षडध्वपरिशोधनम् ॥
दीयते येन वै ज्ञानं क्षीयते पाशबन्धनम् ।
तस्मात्संस्कार एवायं दीक्षेत्यपि च कथ्यते ॥
शाम्भवी चैव शाक्ती च मान्त्रिकी च शिवागमे ।
दीक्षोपदिश्यते त्रेधा शिवेन परमात्मना ॥
गुरोरालोकमात्रेण स्पर्शात्संभाषणादपि ।
[3]सद्यः सञ्ज्ञायते प्रज्ञा पाशोपक्षयकारिणी ॥
सा दीक्षा शाम्भवी प्रोक्ता सा पुनर्भिद्यते द्विधा ।
तीव्रा तीव्रतरा चेति पाशोपक्षयभेदतः ॥
यया स्यान्निर्वृतिः सद्यः सैव तीव्रतरा मता ।
तीव्रा तु जीवतोऽत्यन्तं पुंसः पाशविशोधिका ॥
शाक्ती ज्ञानवती दीक्षा शिष्यदेहं प्रविश्य तु ।
गुरुणा योगमार्गेण क्रियते योगचक्षुषा ॥

---

[1] प्रभावं वर्णये वर्णे रूपोऽसौ परमेश्वरः—पा. [2] यथा—पा. [3] सद्यः संज्ञा भवेज्जन्तोः—पा.

मान्त्री क्रियावती दीक्षा कुण्डमण्डलपूर्विका ।
मन्दमन्दतरोद्देशात्कर्तव्या गुरुणा बहिः ॥

शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति ।
शैवधर्माधिकारस्य तन्मूलत्वात्समासतः ॥

यत्र शक्तिर्न [1] पतिता तत्र शुद्धिर्न जायते ।
न विद्या न शिवाचारो न मुक्तिर्न च सिद्धयः ॥

तस्माल्लिङ्गानि संवीक्ष्य शक्तिपातस्य [2] भूयसः ।
ज्ञानेन क्रियया वाथ गुरुः शिष्यं विशोधयेत् ॥

योऽन्यथा कुरुते मोहात् स विनश्यति दुर्मतिः ।
तस्मात्सर्वप्रकारेण गुरुः शिष्यं परीक्षयेत् ॥

लक्षणं शक्तिपातस्य प्रबोधानन्दसम्भवः ।
सा यस्मात्परमा शक्तिः प्रबोधानन्दरूपिणी ॥

आनन्दबोधयोर्लिङ्गमन्तःकरणविक्रियाः ।
यथा स्यात्कम्परोमाञ्चस्वरनेत्राङ्गविक्रियाः ॥

शिष्योऽपि लक्षणैरेभिः कुर्याद्गुरुपरीक्षणम् ।
[3] तत्सम्पर्के शिवार्चादौ [4] स्वगतैर्वाथ तद्गतैः ॥

शिष्यस्तु शिक्षणीयत्वाद्गुरोर्गौरवकारणात् ।
तस्मात्सर्वप्रयत्नेन गुरोर्गौरवमाचरेत् ॥

यो गुरुः स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः ।
गुरुर्वा शिव एवाथ विद्यारूपेण संस्थितः ॥

यथा शिवस्तथा विद्या यथा विद्या तथा गुरुः ।
शिवविद्यागुरूणां च [5] पूजया सदृशं फलम् ॥

सर्वदेवात्मकश्चासौ सर्वमन्त्रमयो गुरुः ।
तस्मात्सर्वप्रयत्नेन तस्याज्ञां शिरसा वहेत् ॥

श्रेयोर्थी यदि गुर्वाज्ञां मनसापि न लङ्घयेत् ।
गुर्वाज्ञापालको यस्माज्ज्ञानसम्पत्तिमश्नुते ॥

---

[1] पतति–पा. [2] भूरिशः–पा. [3] तत्संपर्कैः. [4] संगतै. [5] पूजायां–पा.

गच्छंस्तिष्ठन् स्वपन् भुञ्जन्नान्यत्कर्म समाचरेत् ।
समक्षं यदि कुर्वीत तत्सर्वं गुर्वनुज्ञया ॥

गुरोर्गेहे समक्षं वा न यथेष्टासनो भवेत् ।
गुरुर्देवो यतः साक्षात्तद्गृहं देवमन्दिरम् ॥

पापिनां च यथा सङ्गात्तत्पापफलभाग्भवेत् ।
तद्वदाचार्यसङ्गेन तद्धर्मफलभाग्भवेत् ॥

यथेह वह्निसम्पर्कान्मलं त्यजति काञ्चनम् ॥
तथैव गुरुसम्पर्कात्पापं त्यजति मानवः ।

यथा वह्निसमीपस्थो घृतकुम्भो विलीयते ॥
तथा पापं विलीयेत ह्याचार्यस्य समीपतः ।

यथा प्रज्वलितो[1] वह्निर्निष्ठां काष्ठस्य निर्दहेत् ॥
तथायमपि सन्तुष्टो गुरुः पापं क्षणाद्दहेत् ।

मनसा कर्मणा वाचा गुरोः क्रोधं न कारयेत् ॥
तस्य क्रोधेन दह्यन्ते ह्यायुःश्रीज्ञानसत्क्रियाः ।

तत्क्रोधकारिणो ये स्युस्तेषां धर्माश्च निष्फलाः ॥
यमाश्च नियमाश्चैन नात्र कार्या विचारणा ।

गुरोर्विरुद्धं यद्वाक्यं न वदेज्जातुचिन्नरः ॥
वदेद्यदि महामोहाद्रौरवे पतति ध्रुवम् ।

मनसा कर्मणा वाचा गुरुमुद्दिश्य यत्नतः ॥
श्रेयोऽर्थी चेन्नरो धीमान्न मिथ्याचारमाचरेत् ।

नैर्गुण्ये ख्यापिते तस्य नैर्गुण्यशतभाग्भवेत् ॥
गुणे तु ख्यापिते तद्वत्सर्वपुण्यफलं भवेत् ।

गुरोर्हितं प्रियं कुर्यादादिष्टो वा नवा सदा ॥
असमक्षं समक्षं वा तस्य कार्यं समाचरेत् ।

इत्थमाचारवान् भक्त्या नित्यमुद्युक्तमानसः ॥
गु प्रियकरः शिष्यः शैवान्धर्मांस्ततोऽर्हति ।

गुरुश्चेद्गुणवान् प्राज्ञः परमानन्दभासकः ॥

---

[1] वह्निः शुष्कमार्द्रं च–पा.

तत्त्ववित्-छिवसंसक्तो मुक्तितो न तु चापरः ।
संवित्संजननं तत्त्वं परानन्दसमुद्भवम् ॥

तत्तत्त्वं विदितं येन स एवानन्ददर्शकः ।
न पुनर्नाममात्रेण संविदा रहितस्तु यः ॥

अन्योऽन्यं [1] तारयेन्नौका किं शिला तारयेच्छिलाम् ।
[2] एषां तन्नाममात्रेण मुक्तिर्वै नाममात्रिका ॥

यैः पुनर्विदितं तत्त्वं ते मुक्ता मोचयन्त्यपि ।
तत्त्वहीने कुतो बोधः कुतो ह्यात्मपरिग्रहः ॥

परिग्रहविनिर्मुक्तः पशुरित्यभिधीयते ।
पशुभिः प्रेरितश्चापि पशुत्वं [3] नातिवर्तते ॥

तस्मात्तत्त्वविदेवेह मुक्तो मोचक इष्यते ।
सर्वलक्षणसंयुक्तः सर्वशास्त्रविदप्ययम् ॥

सर्वोपायविधिज्ञोऽपि तत्त्वहीनस्तु निष्फलः ।
यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रतिष्ठिता ॥

तस्यावलोकनाद्यैश्च परानन्दोऽभिजायते ।
तस्मादस्यैव सम्पर्कात्प्रबोधानन्दसंभवः ॥

गुरुं तमेव वृणुयान्नापरं मतिमान्नरः ।
स शिष्यैर्विनयाचारचतुरैरुचितो गुरुः ॥

यावद्विज्ञायते तावत्सेवनीयो मुमुक्षुभिः ।
ज्ञाते तस्मिन्स्थिरा भक्तिर्यावत्तत्त्वं समाश्रयेत् ॥

न ततस्तं त्यजेज्जातु नोपेक्षेत [4] कदाचन ।
यत्रानन्दः प्रबोधो वा नाल्पमप्युपलभ्यते ॥

वत्सरादपि शिष्येण सोऽन्यं गुरुमुपाश्रयेत् ।
गुरुमन्यं प्रपन्नोऽपि नावमन्येत [5] पूर्वकम् ॥

गुरोर्भ्रातॄंस्तथा पुत्रान् बोधकान्प्रेरकानपि ।
तत्रादावुपसङ्गम्य ब्राह्मणं वेदपारगम् ॥

---

[1] तारयेन्नावं–पा. [2] एतस्य नाम. [3] नातिवर्तयेत्–पा. [4] कथंचन–पा.
[5] पौर्विकम्–पा.

गुरुमाराधयेत्प्राज्ञं सुभगं प्रियदर्शनम् ।
सर्वाभयप्रदातारं करुणाक्रान्तमानसम् ॥

तोषयेत्तं प्रयत्नेन मनसा कर्मणा गिरा ।
तावदाराधयेच्छिष्यः प्रसन्नोऽसौ भवेद्यथा ॥

तस्मिन् प्रसन्ने शिष्यस्य सद्यः पाशक्षयो भवेत् ।
तस्माद्धनानि रत्नानि क्षेत्राणि च गृहाणि च ॥

भूषणानि च वासांसि यानशय्यासनानि च ।
एतानि गुरवे दद्याद्भक्त्या वित्तानुसारतः ॥

वित्तशाठ्यं न कुर्वीत यदीच्छेत्परमां गतिम् ।
स एव जनको माता भ्राता बन्धुर्धनं सुखम् ॥

सखा मित्रं च यत्तस्मात्सर्वं तस्मै निवेदयेत् ।
निवेद्य पश्चात्स्वात्मानं सान्वयं सपरिग्रहम् ॥

समर्प्य सोदकं तस्मै नित्यं तद्वशगो भवेत् ।
यदा शिवाय स्वात्मानं दत्तवान् देशिकात्मने ॥

तदा शैवो भवेद्देही न ततोऽस्ति पुनर्भवः ।
देशिकाकृतिमास्थाय पशोः पाशानशेषतः ॥

छित्वा परं पदं देवो नयत्येनमिति श्रुतिः ।
गुरुश्च [1]स्वाश्रमे शिष्यं वर्षमेकं [2]परीक्षयेत् ॥

ब्राह्मणं क्षत्रियं वैश्यं द्विवर्षं च त्रिवर्षकम् ।
प्राणद्रव्यप्रदानाद्यैरादेशैश्च समागमैः ॥

उत्तमं चाधमे कृत्वा नीचानुत्तमकर्मसु ।
आक्रुष्टास्ताडिता वापि ये विषादं न यान्त्यपि ॥

ते योग्याः संयताः शुद्धाः शिवसंस्कारकर्मणि ।
अहिंसका दयावन्तो नित्यमुद्युक्तचेतसः ।

अमानिनो बुद्धिमन्तस्त्यक्तस्पर्धाः प्रियंवदाः ।
ऋजवो मृदवः स्वच्छा विनीताः स्थिरचेतसः ॥

---

[1] स्वाश्रितं. [2] प्रतीक्षयेत्–पा.

शैवाचारसमोपेताः शिवभक्ता द्विजातयः ।
एवं वृत्तसमोपेता वाङ्मनःकायकर्मभिः ॥

शोध्या बोध्या यथान्यायमिति शास्त्रविनिश्चयः ।
नाधिकारः स्वतो नार्याः शिवसंस्कारकर्मणि ॥

नियोगाद्भर्तुरस्त्येव [1] यदि भक्ता महेश्वरे ।
तथैव भर्तृहीनायाः पुत्रादेरभ्यनुज्ञया ॥

अधिकारो भवत्येव कन्यायाः पितुराज्ञया ।
शूद्राणामन्यजातीनां पतितानां विशेषतः ॥

तथा संकरजातीनां नाध्वशुद्धिर्विधीयते ।
तेऽप्यकृत्रिमभावाश्चेच्छिवे परमकारणे ॥

पादोदकप्रदानाद्यैः कुर्यात्पापविशोधनम् ।
[2]अतोऽनुलोमजाता ये युक्ता एव द्विजातिषु ॥

तेषामध्वविशुध्यादि कुर्यान्मातृकुलोचितम् ।
या तु कन्या स्वपित्राद्यैः शिवधर्मे नियोजिता ॥

सा भक्ताय प्रदातव्या नापराध विरोधिने ।
दत्ता चेत्प्रतिकूलाय प्रमादाद्बोधयेत्पतिम् ॥

अशक्ता तं परित्यज्य मनसा धर्ममाचरेत् ।
यथा [3] पुरा मुनिं त्यक्त्वा [4] पतिमन्यं पतिव्रता ॥

कृतकृत्याभवत्पूर्वं तपसाराध्य शङ्करम् ।
यथा नालायनी देवं तपसाराध्य पाण्डवान् ॥

पतीन् लब्धवती धर्मे गुरुभिर्न नियोजिता ।
अस्वातन्त्र्यकृतो दोषो नेहास्ति परमार्थतः ॥

शिवधर्मनियुक्तायाः शिवशासनगौरवात् ।
किमत्र बहुनोक्तेन योऽपि कोऽपि शिवाश्रितः ॥

संस्कार्यो गुर्वधीनश्चेत्संस्क्रिया न प्रभिद्यते ।
गुरोरालोकनादेव स्पर्शात्संभाषणादपि ॥

---

[1] भक्तियुक्ता यदीश्वरे–पा. [2] अत्रानुलोम–पा. [3] मुनिवरं–पा. [4] पतिमत्रि–पा.

यस्य सञ्जायते प्रज्ञा तस्य [1] नास्त्यपरा क्रिया ।
मनसा यस्तु संस्कारः क्रियते योगवर्त्मना ॥

स नेह कथ्यते गुह्यो गुरुवक्त्रैकगोचरः ।
क्रियावान्यस्तु संस्कारः कुण्डमण्डपपूर्वकः ॥

स वक्ष्यते समासेन तस्य शक्यो न विस्तरः ।
इत्यादिवचनैरन्यैर्निगमैरागमैरपि ॥

पञ्चाक्षर्यैव सा प्रोक्ता संसारभयहारिणी ।
संसारबन्धहेतुः स्यात्सर्वं कर्म भयाकुलम् ॥

पञ्चाक्षरोऽयं मन्त्रस्तु बन्धच्छेदाय कल्पते ।
तस्मात्पाशविमोक्षार्थी पञ्चाक्षरमनुं स्मरेत् ॥
शिवशब्देन भात्येष पञ्चाक्षरमनुः स्वयम् ।
मनुना रुद्रसूक्तं स्याद्रुद्रसूक्ताद्यजुश्श्रुतिः ॥

यजुषा मध्यरत्नेन ऋक्सामा भाति सुस्फुटम् ।
तस्मात्पञ्चाक्षरसमो नास्ति लोकत्रयेऽपि च ॥

केचिदैहिकसाध्याः स्युर्मन्त्रा आमुष्मिकाः परे ।
पञ्चाक्षरोऽयं मन्त्रः स्यादिहामुत्रफलप्रदः ॥

लौकिकाद्वचनान्मुख्यं देवतानामकीर्तनम् ।
देवतानामपठनाज्जगत्कारणचिन्तनम् ॥

कारणानां च यो धाता ध्याता परमकारणम् ।
तन्नामपठनं श्रेष्ठं नामान्यतस्य भूरिशः ॥

शिवनाम ततः श्रेष्ठं ततो नम इति द्वयम् ।
विशिष्टपठनं तस्मात्प्रणवादिस्ततोऽपि च ॥

समष्टिव्यष्टिभूतोऽसौ मन्त्रो मन्त्रोत्तमोत्तमः ।
उत्तमोत्तममन्त्रस्य पठनादुत्तमोत्तमम् ॥

फलं हि पठतां प्राज्ञ तत्फलं मोक्ष एव हि ।
तस्मान्मोक्षार्थिभिः सर्वैर्जप्यः पञ्चाक्षरो मनुः ॥

पञ्चाक्षरप्रभावेन सर्वे कामाः समाहिताः ।
सत्यं सत्यं पुनः सत्यं सर्वसञ्जीवनौषधम् ॥

पञ्चाक्षरामृतं पीत्वा शिवसायुज्यमाप्नुयात् ।
नावर्तते पुनर्मर्त्यः पुनर्नावर्तते ध्रुवम् ॥

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञश्रीनीलकण्ठशिवाचार्यकृते
निगमागमसारसङ्ग्रहे क्रियासारे पञ्चाक्षरस्वरूपप्रशंसा नाम
त्रयोदशोपदेशः समाप्तः

---

## चतुर्दशोपदेशप्रारम्भः

चतुर्दशोपदेशेऽस्मिञ्छिवपूजाविधिक्रमः ।
निगमागमसंमिश्रो भक्तिमत्प्रीतये कृतः ॥ १

द्वात्रिंशदुपदेशास्ते शिवपूजान्तरा[1] मताः ।
भक्तिभाव्यः समस्तोऽपि शिवसायुज्यसाधकः ॥ २

अथ पक्षान्तरमाश्रित्योच्यते—

अवश्यकार्यं शैवानामात्मार्थं शिवपूजनम् ।
तच्च वैदिकमिश्राभ्यामेतेषां शैवमुत्तमम् ॥ ३

तदप्यशक्तिकाच्छुद्धान्मिश्रात्सौरादिकादपि ।
[2] सशक्ति केवलं श्लाघ्यं संक्षिप्तं भुक्तिमुक्तिदम् ॥ ४

तस्मादात्मार्थयजनं शम्भोरम्बिकया सह ।
सङ्गृह्य दर्शयिष्यामि सर्वदिव्यागमोदितम् ॥ ५

दिव्यागमार्थसाङ्कर्यमैकतन्त्र्यान्न दोषकृत् ।
किंतु पाशुपताद्यर्थसाङ्कर्यं तेषु दोषकृत् ॥ ६

तेष्वप्येकं समाश्रित्य ग्राह्यमन्यदुपेक्षते ।
इत्येतन्मानुषे लिङ्गे न तु स्वायम्भुवादिषु ॥ ७

---

[1] रागताः–पा. [2] अशक्ति–पा.

एकागमावलम्बेऽपि प्रविहाय तदीरितम् ।
प्रशस्तमन्यतो ग्राह्यमित्यन्वादिशदीश्वरः ॥ ८

[1] प्राशस्त्यस्योभयोः साम्येऽप्यर्चनाङ्गमपेक्षितम् ।
तत्रोक्तमन्यत्रोक्तं च सममित्यप्युपादिशत् ॥ ९

तस्माद्दिव्यागमेभ्योऽसावखिलेभ्यः समुद्धृतैः ।
अपेक्षितांशैः क्रियते श्रीशिवार्चनपद्धतिः ॥ १०

आचम्य भस्मरुद्राक्षविभूषितकलेवरः ।
सकलीकृत्य संस्कुर्यात्सामान्यार्घ्यं यथाविधि ॥ ११

शुद्धविद्यात्मकं ध्यात्वा शिवपूजानिकेतनम् ।
तद्द्वारेऽप्युत्तरे कुर्याद्द्वारपालार्चनं क्रमात् ॥ १२

विघ्नत्रयं विनिस्सार्य प्रविश्यास्त्रादिपूजनम् ।
कृत्वा पूजोपकरणं सकलं सन्निधापयेत् ॥ १३

देवस्य दक्षिणे भागे पावकस्योत्तरामुखः ।
विहितासनमास्थाय पञ्चशुद्धीः समाचरेत् ॥ १४

आदित्यस्योदयात्पूर्वं मुहूर्तद्वितये स्थिते ।
उत्थाय धौताङ्घ्रिकरः कृतभस्मावकुण्ठनः ॥ १५

हृदि सामान्य[2]समयां चिन्तयेत्परमेश्वरीम् ।
[3] विशिष्टसमयां बिन्दौ मूर्ध्नि निर्वाणदीक्षितः ॥ १६

[4] आचार्यं साधकश्चैनं द्वादशान्ते विचिन्तयेत् ।
नामानि चास्य हृद्यानि चरित्राणि च कीर्तयेत् ॥ १७
विण्मूत्रोत्सर्जनं कुर्याद्गत्वा देशं यथोचितम् ।
इत्याद्युक्तेन रूपेण शुद्धः पूतमनाः स्वयम् ॥ १८
वीरशैवो भस्मनैव कृतस्नानस्त्रिपुण्ड्रवान् ।
वारुणे यस्य वै बुद्धिस्तस्यायं विधिरुच्यते ॥ १९
[5] उद्धूलनं त्रिपुण्ड्रं च भस्मना च प्रकीर्तितम् ।

---

[1] प्राशस्त्यशोभयोः—पा. [2] सामान्यसमयी-पा. [3] विशिष्टसमयी—पा.
[4] आचार्यः—पा. [5] इदमर्धं मातृकयोर्नास्ति.

आचान्तः कृतकरन्यासः प्राणानायम्य दर्भान् धारयन् अमुके वर्षे अमुके मासे अमुके वारे शिवप्रीत्यर्थं "देव स्नानं करिष्येऽहं त्वत्पूजार्थं प्रसीद मे" इति विज्ञाप्य शुद्धभूमिं चतुरङ्गुलपर्यन्तं हुं फडन्तास्त्रमन्त्रेण खात्वा तेनैव मन्त्रेण मृदमुद्धृत्य तदधस्तनीं मृदं मूलमन्त्रेण नमोऽन्तहृदयेन वादाय नमोऽन्तहृदयेनैव प्रथममुद्धृतया मृदा खातमापूर्य, नमोऽन्तं सरित्सरस्तटाकादितीरे विशुद्धे निक्षिपेत्। सरिदादीनां दक्षिणतीरं स्नानार्थमतिप्रशस्तं गतो हुं फडन्तास्त्रेण मृदमभ्युक्ष्य नमोऽन्तशिरसा मृदस्तृणमूलादीन्युद्धृत्य नमोऽन्तकवचेन तां त्रिधा विभज्य नाभ्यादि पादान्तं एकांशेन प्रक्षाल्य द्वितीयं सप्तवारमस्त्रमन्त्रजप्तं अस्त्ररश्मिसम्पर्कोद्दीप्तं विभाव्य सर्वमङ्गं मन्त्रेण लिप्त्वा जलं प्रविश्य जलमस्त्रेणालोड्य अङ्गुष्ठाभ्यां कर्णौ तर्जनीभ्यामक्षिणी मध्यमाभ्यां नासिके च दृढं पिधाय प्रणवं मूलसहितं वा जपन् हृदये ज्वलदस्त्रं देहं तत्तेजःपुञ्जपिञ्जरं च विभाव्य जले निमग्नो यावच्छक्त्यवतिष्ठेत् ॥

अथवा मृदं द्विधा विभज्य अस्त्रजपेनैकेन भागेन सर्वमङ्गमालिप्य स्नायात्। तदेतन्मलस्नानम्। यद्वा वक्ष्यमाणविधिस्नानार्थमेव मृदाहरणम्। मलस्नानं तु हरिद्रामलकादिपिष्टैरेव कार्यम्। अत्र रेतोविण्मूत्रचक्षुश्श्रोत्रनासिकामुखनखपादमलरूपाणां शारीरमलानां शोधनादिमलस्नानान्तकर्मान्तर्गतैर्मृद्दन्तकाष्ठहरिद्रामलकादि [1]घर्षणैरुदासेकः शुद्धिः। वाचिकमलानां स्नानकालिकैः प्रणवादिजपैः। मानसमलानां मन्त्रध्यानादिभिः। ततो जलादुत्थाय अस्त्रमन्त्रेणादित्यं निरीक्ष्य मूर्ध्नि निषिच्य जलादुत्तीर्याचम्याविरक्तो द्विजश्चेद्वैदिकीं सन्ध्यामुपास्य संक्षेपतः शैवीमपि सन्ध्यामुपासीत। विरक्तो द्विज अत्याश्रमी च शैवीमेवोपासीत ॥

संक्षिप्तशैवसन्ध्याप्रकारः—

अस्त्रमन्त्रेण शिरसि त्रिवारमङ्गुल्यग्रगतैर्जलबिन्दुभिः प्रोक्ष्य, शिवास्त्राय विद्महे, कालानलाय धीमहि, [2]तन्नो अस्त्रः प्रचोदयात्।

---

[1] घर्षणैरुदासेचनैः शुद्धिः, उदासीनैः शुद्धिः—पा. [2] तन्नः शस्त्रः—पा.

इत्यस्त्रगायत्र्या सूर्यमण्डलस्थायास्त्राय त्रिवारमर्घ्यं दत्वा यथा-शक्ति गायत्रीं जपेत्। अस्त्रसन्ध्यास्नाने ज्वलन्तमस्त्रमन्त्रं ध्यायेत्। ततो विधिस्नानार्थं बिन्दुस्थानाद्गङ्गादितीर्थानां मध्य एकतमं तीर्थमङ्कुशमुद्रया वौषडन्तहृदयेनाकृष्योद्भवमुद्रया नमोन्तहृदयेन पुरतः संस्थाप्य तेनापूरितं सरस्तटाकादिकं सञ्चिन्तयेत्। तदनु विधिस्नानार्थं स्थापितं मृद्भागमादाय नाभिदघ्नं जलं प्रविश्य नदीषु प्रवाहाभिमुखोऽन्यत्र प्राङ्मुख उदङ्मुखो वा मत्स्यमण्डूकादिवास-भूतजलदोषपरिहारार्थं हस्तमात्रं चतुरश्रं शिवतीर्थं पुरतः कल्प-येत्। तत्रायं क्रमः—मृद्भागं वामकरे पूर्वयाम्यसौम्यदिक्षु त्रिधा विभज्य सर्वं सप्तवारावृत्तेन शिवेन चाभिमन्त्र्य तत्रास्त्रपातं हुं फडन्तास्त्रेण नाराचमुद्रया पूर्वादिषु सर्वासु दिक्षु क्षिपेत्। एवं दिवि विघ्नानामधिपस्येन्द्रस्येन्द्रदिशि स्थितस्य मृद्भागस्य दिक्षु क्षेपेण दिगवस्थिताः सर्वे विघ्नाः शमं यान्ति। तदनु शिवजप्त-मृद्भागार्धं मूलेन जले शिवतीर्थासिद्ध्यर्थं निक्षिप्य तदपरार्धं शिवतीर्थे बाहुपरिभ्रमणेन समन्तान्निक्षिपेत्। एवं सोमदिशि स्था-पितं मृद्भागं केवलममृतमयः सन् शिवमन्त्रेण लोलनात् क्षरतीति तीर्थममृतमयं भवतीति शिवतीर्थं परिकल्प्य विधिना स्नानाय तदर्धं प्रथमं ब्रह्माङ्गजप्तेन मृद्भागेन सर्वमङ्गं लिम्पेत्॥

अथ धर्मराजदिशि स्थितस्य मृद्भागस्य संस्पर्शनात्सर्व-पापक्षयो भवति। एवं षण्मुखीकरणमुद्रया श्रोत्रादिद्वाराणि पिधाय शिवतीर्थमध्ये निमज्य शिवमन्त्रं ध्यायन्नन्तर्जले यावच्छक्त्यव-तिष्ठेत। अन्तर्जले सर्वाङ्गनिमज्जनमुत्तमम्। अर्धाङ्गमज्जनं मध्यमम्। मुखमात्रनिमज्जनं कनीयः। ततो जलादुत्थाय वामद-क्षिणहस्तौ [1]सोमसूर्यात्मकौ शक्तिशिवाभ्यां कृतया कुम्भकमुद्रया वौषडन्तसंहिताभिमन्त्रितजलैः शिरस्यभिषिच्य हुंफडन्तास्त्रेण [2]विघ्ननाशनतीर्थं जलं दिक्षु विनिक्षिप्य तीर्थं संहारमुद्रयोप-संहारेत्। इत्थं सरिदादिकं गत्वा कर्तुमशक्तौ गृह एव शुद्धे गोमयालिप्ते भूभागे [3]पिठरस्थशीतजलपूरितैः शिवमन्त्रजप्तैर्नव-भिरष्टभिः पञ्चभिर्वा कुम्भैः स्नायात्। राजानः स्त्रीबालरोगिणः

[1] सोमसूर्यकृती—पा. [2] विघ्नशमनतीर्थं जलं दिक्षु विदिक्षु च विनिक्षिप्य तत्तीर्थं जले शिवतीर्थसिध्यर्थं निक्षिप्य तदपरार्धं शिवतीर्थसीमनि संहार. [3] पीठस्थ—पा

प्रवासिनश्च शीतोदकेन स्नानाशक्तावुष्णोदकेन स्नानं कुर्युः। राजानश्चेच्छिवपूजार्थं शिवस्नापनोक्तसर्वोपचारसहितस्नानविधानात् स्वर्णपीठे स्थित्वा स्वर्णकुम्भाहृतैर्जलैः शङ्खादिमङ्गलवाद्यघोषपुरस्सरं स्नानं कुर्युः। शिरस्स्नानाशक्तौ तु कण्ठस्नानादिकं कुर्युः। तदनु शुद्धमृदुवस्त्रेण देहसम्मार्जनम्। धौतवस्त्रद्वयपरिधानम्। [1] आत्मतत्त्वाय नमः। विद्यातत्त्वाय नमः। शिवतत्त्वाय नम इति त्रिराचमनम्। लिङ्गतत्त्वाङ्गतत्वयोः सकलीकरणं, भस्मस्नानं, त्रिपुण्ड्रधार[2]णादिकं निर्वर्त्य शैवीं सन्ध्यामुपासीत।

तत्प्रकारः संहितायां—त्रिः प्राणानायम्य ह्रौं नेत्राभ्यां नम इति अङ्गुष्ठाभ्यां नेत्रयोर्दिव्यमुद्रां प्रविन्यस्य नमोन्तमूलेन जलं निरीक्ष्य तेनैव सन्ताड्य वौषडन्तकवचेनाभ्युक्ष्य वौषडन्तहृदयेनाङ्कुशमुद्रया बिन्दुस्थानाद्गङ्गादीनामेकतमं तीर्थमाकृष्य नमोऽन्तहृदयेनोद्भवमुद्रया तीर्थं जले निक्षिप्य मूलेनाभिमन्त्र्य हुंफडन्तास्त्रेण संरक्ष्य नमोन्तकवचेनावकुण्ठ्य वौषडन्तशक्तिमन्त्रेण धेनुमुद्रया अमृतीकुर्यात्। अथ चिच्छक्तिरूपां सन्ध्यां ध्यायेत्॥

सन्ध्या त्रिविधा —ब्राह्मी वैष्णवी रौद्रीति। तत्र —

रक्तस्रग्वसना रक्ता रक्तालङ्कारशोभिता।
हंसासनसमासीना जटाचन्द्रकलाधरा॥

चतुर्भुजा चतुर्वक्त्रा लोचनाष्टकभूषिता।
अक्षमालां स्रुचं सव्ये वामे दण्डं कमण्डलुम्॥

दधाना ब्रह्मदैवत्या प्रातः सन्ध्या त्रिधा च सा।
प्रातः कालेऽल्पनक्षत्रे सुबाला मुक्तिदा प्रभा॥

प्रातस्तु लुप्तनक्षत्रे भुक्तिमुक्तिप्रदायिनी।
ज्ञानशक्तिस्वरूपा सा मध्यमा बाल्यमाश्रिता॥

भुक्तिप्रदायिनी भानोरर्धमण्डलदर्शने।
क्रियाशक्तिस्वरूपा सा प्रौढा बाल्यं समाश्रिता॥

---

[1] "आत्मतत्त्वाय नम इति" इति कस्मिंश्चित्पुस्तके, "आत्मतत्त्वाय नमः शिवतत्त्वाय नम इति" कस्मिंश्चित्पुस्तके च वर्तते। [2] णमित्यादिकं—पा.

सुवर्णपङ्कजासीना सितवस्त्रसमन्विता ।
वनमालोपवीताभ्यां भूषिता च द्विलोचना ॥

एकवक्त्रा चतुर्हस्ता दक्षिणे सगदाम्बुजा ।
शङ्खचक्रधरा वामे मध्या सन्ध्या तु वैष्णवी ॥

सा च द्वितीया यामस्य तुर्यभागे त्रिधाभवेत् ।
आद्यांशे मुक्तिदा [1]सा च किंचिदुद्भिन्नयौवना ॥

मध्यांशे मध्यतारुण्या वागीशी भुक्तिमुक्तिदा ।

ज्वालाभिधा तृतीयांशे मुक्तिदा प्रौढयौवना ।
वृषपङ्कजमध्यस्था त्रिणेत्रा चन्द्रशेखरा ॥

त्रिशूलाक्षधरा सव्ये वामे साभयशक्तिदा ।
सायं सन्ध्या स्मृता रौद्री सापि पूर्वेव च त्रिधा ॥

आरक्तार्ककरे काले किंचिच्चलितयौवना ।

यौवनार्धच्युतार्धार्के ज्येष्ठाख्या भुक्तिमुक्तिदा ।
भुक्तिदास्तमिते सूर्ये रौद्र्याख्या गतयौवना ॥

एवं नवविधा सन्ध्याः शिवशास्त्रे शिवोदिताः ।
साक्षिभूताः समस्तस्य पूजिता वाञ्छितप्रदाः ॥

ब्राह्मी हृत्पङ्कजगता वैष्णवी बिन्दुमध्यगा ।
ब्रह्मरन्ध्रगता रौद्री स्वस्वकालेषु चिन्तयेत् ॥

प्रातस्सन्ध्या समयिनो मध्यमा च विशेषिणः ।
निर्वाणदीक्षितस्यैव सन्ध्यात्रितयमिष्यते ॥

वीरशैवोऽथवा कुर्यान्न कुर्याद्वा समाहितः ।
कृतेऽभ्युच्चय एव स्यादकृते च न दोषभाक् ॥

तत्रयं स्यात्सप्तकाल[2]प्रासादप्रवणो बुधः ।
सबिन्दुशक्तिसामान्यस्थानत्रितय[3]वर्तिनी ॥

मृणालतन्तुवत्तन्वी आरक्तश्वेतमेचका ।
सन्ध्या क्रियादृगिच्छाख्या[4] प्रासादोच्चारपूर्वकम् ॥

---

[1] वाचा—पा. [2] प्रसाद—पा. [3] वर्तकी—पा. [4] ख्यं—पा.

यस्य तु द्वादशकले प्रासादे निष्ठिता मतिः ।
तेन सन्ध्या परा चिन्त्या या निशीथे विभाव्यते ।
नाभ्यादिद्वादशान्तान्तं ततो नाभ्यवसानकम् ॥

गमागमवती तुर्या नीरूपा मेचकाथवा ।
ज्ञानिनां तु परा सन्ध्या शिवबोधस्वरूपिणी ॥

द्वादशान्तस्थितं शम्भुं चन्द्रिकेन्दुमिवाश्रिता ।
एकैव वस्तुतः सन्ध्या शिवशक्तिस्वरूपिणी ॥

कालाधिकारिभेदेन सैव भिन्नात्र वर्णिता ।
सन्ध्याचिन्तनमेवेदं सन्ध्यावन्दनमुच्यते ॥

अङ्गमस्य प्रधानस्य यदन्यन्मार्जनादिकम् ः

एवं कृतसन्ध्योपासनादिकर्मणा शिवपूजारम्भणीया । तत्रायं क्रमः—[1]ततोऽङ्गुष्ठमध्यमानामिकाभिरमृतकलां च ध्यात्वा अङ्गुष्ठायुक्तयानामिकया चक्षुषी नासिके श्रोत्रे अंसौ हृदयं नाभिं शिरश्च क्रमेण [2]आदित्यस्तृप्यतु विष्णुस्तृप्यत्विति भावयन्नेव स्पृशेत् । एवं कृते शिवतेजस्सम्पर्कक्षुभितानामिका[3]कृतप्रवाहतृप्ता नेत्राद्यधिष्ठातारः सूर्यादयो विष्णवन्ता देवाः कर्तुरनुष्ठानोपबृंहिका भवन्ति । तदनन्तरं (शरीरगतपञ्चत्रिंशत्तत्त्वशुध्यर्थं) [4]चिन्मात्राचमनं कुर्यात् तत्रायं विशेषः—सुवर्णवर्णं पद्माक्षमालास्रकु[5]ण्डिकालङ्कृतकरचतुष्टयं चतुर्वक्त्रमात्मतत्त्वरूपं ब्रह्माणं ध्यायामीत्यात्मतत्त्वध्यानपूर्वकं 'ह्रां आत्मतत्त्वाय [6]स्वाहेति प्रथममाचामेत् । अनेन स्वशरीरे पृथिव्यादिमायान्तैकत्रिंशत्तत्त्वशुद्धिं भावयेत् ॥

ततो नीलवर्णं चक्रबाणकमलचिन्मुद्राशङ्खकार्मुककमण्डलवभयमुद्रालङ्कृतकराष्टकमेकवक्त्रं विद्यातत्त्वरूपं विष्णुं ध्यायामीति विद्यातत्त्वध्यानपूर्वकं ह्रिं विद्यातत्त्वाय स्वधेत्याचामेत् । अनेन शुद्धविद्येश्वरसदाशिवाख्यत्रितत्त्वशुद्धिं भावयेत् । ततः स्फटिकवर्णं पद्माक्षमालाशूलकमण्डलुधरकरचतुष्टयं पञ्चवक्त्रं शिवतत्त्वरूपं

---

[1] ततोऽङ्गुष्ठमीशानमनामिकामसृतकलां च ध्यात्वा–पा. [2] अदित्यास्तृप्यन्तु–पा.
[3] कामृत–पा. [4] चिन्मन्त्राचमनं–पा. [5] कुण्डलालङ्कृत–पा. [6] स्वधेति.

रुद्रं ध्यायामीति शिवतत्त्वध्यानपूर्वकं हुं शिवतत्त्वाय स्वधेत्याचामेत्। अनेन शक्तितत्त्वशुद्धिं भावयेत्। ततोऽस्त्रमन्त्रेण [1]करौ प्रमृज्य हृदयमन्त्रेण नेत्रादीनि स्पृशेत्। अन्यत्तु तत्तद्देवतातृप्त्यर्थध्यानादिकं पूर्ववत्कुर्यात्। इत्याचमनक्रमः ॥

ततोऽभिषिच्य देवेशं निवेश्य कमलासने।
तत्रासनं च मूर्तिं च विद्यादेहं च पूजयेत् ॥

अथावाह्य महादेवं सम्पूज्य स्नपनादिभिः।
मनसा स्नापयित्वा च दद्याद्वस्त्रोपवीतकम् ॥

ततः सम्पूज्य देवेशं गन्धपुष्पविभूषणैः।
धूपं दीपं च दत्वाथ कुर्यादावरणार्चनम् ॥

नैवेद्यं मुखवासं च ताम्बूलं च समर्पयेत्।
बलिं दत्वाथ पाद्याद्यैर्गन्धपुष्पैश्च पूजयेत् ॥

अग्नौ कुर्यादग्निकार्यमग्निकार्याधिकारवान्।
ततः शिवान्तिकं गत्वा शिवपूजां समर्पयेत् ॥

धूपमारार्तिकं दत्वा पवित्रं च समर्पयेत्।
धारयित्वा सितं भस्म दर्पणाद्यैः प्रपूजयेत् ॥

जपस्तोत्रनमस्कारप्रदक्षिणपुरस्सरम्।
अष्टपुष्पिकयाभ्यर्च्य विशेषार्घ्येण पूजयेत् ॥

पराङ्मुखार्घ्येणोद्वास्य शिवं सावरणादिकम्।
काले शिवं हृदि ध्यायन्नाश्नीयात्तन्निवेदितम् ॥

एवं संक्षिप्य कथितं शिवपूजाविधिक्रमम्।
विविच्य दर्शयिष्यामो नातिसङ्कोचविस्तरम् ॥

तत्र तावदाचमनमुच्यते—आजानु पादावामणिबन्धं पाणी च प्रक्षाल्य प्राङ्मुख उदङ्मुखो वा कुक्कुटासनस्थः पाणिद्वयं जानुनी अन्तरा निधाय पाणिद्वयेऽपि कनिष्ठिकादिष्वङ्गुलिषु [2]हां हृदयाय नमः, हीं शिरसे नमः, हूं शिखायै नमः, हैं कवचाय नमः, हः

---

[1] ओष्ठौ [2] मातृकासु—हं हिं हुं इति दृश्यते.

अस्त्राय फडिति विन्यस्य दक्षिणं पाणिं गोकर्णाकृतिं कृत्वा तन माषमज्जनार्हं जलं गृहीत्वा [1]संक्षिप्याङ्गुष्ठकनिष्ठिके मुक्त्वा तर्जन्यङ्गुष्ठ-संयोगेन पूर्वपक्षे सोमरूपं कृष्णपक्षे सूर्यरूपं च विचिन्त्य तत्प्राशनेन रसनाग्रस्थिताया भारत्याः [2]सप्तशुद्धिं [2]स्वस्य वहिर्देह-शुद्धिं च ध्यात्वानन्तरं हस्तप्रक्षालनपूर्वकं ब्रह्मतीर्थेन स्वधान्तेन मूलमन्त्रेण त्रिराचामेत् । ततः स्वस्याननशुद्धिं ओष्ठसम्पुट-स्थितायाः प्रणवदेवतायास्तृप्तिं च भावयन्नङ्गुष्ठमूलेन द्विरोष्ठौ मार्जयेत् ॥

इति स्नानसन्ध्यादिप्रकरणम्

## अथ भस्मधारणम्

चतुर्विधं भस्म । कल्पमनुकल्पमुपकल्पमकल्पं चेति । तत्र व्याध्यादिरहितां सवत्सां गां सम्पूज्य तदीयं गोमयं भूमावपतित-माकाशस्थमेव गृहीत्वा पिण्डीकृत्य विशोष्य पञ्चब्रह्ममन्त्रैः शिववह्नौ दग्ध्वा मूलेन विशोध्य यत्सम्पादितं यच्चाग्निहोत्र-समुद्भूतं तदुभयं कल्पम् । वने शुष्कं गोमयं गृहीत्वा शिव-वह्नौ दग्ध्वा मूलेन विशोध्य सम्पादितमनुकल्पम् ॥

[3]अटवीगृहगोवाटीषु, इष्टकापाकादिषु दावाग्न्यादिभिर्दग्धं भस्म गृहीत्वा वस्त्रेण संशोध्य गोमूत्रेण पिण्डीकृत्य पुनः शिवाग्नौ दग्धं मूलेन शोधितमुपकल्पम् । मन्त्रादिहीनं ब्राह्मणैः स्त्री-शूद्रादिभिर्वा शुचि गोमयं गृहीत्वा सम्पादितं श्रोत्रियागारचु-ल्ल्यादिभ्यो गृहीतं वा यत्तदकल्पम् । अकल्पं चेत्तद्गृहीत्वास्त्र-मन्त्रेण दिग्बन्धनं कृत्वा [4]हों ईशानमूर्ध्ने नमः । हें तत्पुरुष-वक्त्राय नमः । हुं अघोरहृदयाय नमः । हिं वामदेवगुह्याय नमः । हं सद्योजातमूर्तये नमः । हां हृदयाय नमः । हीं शिरसे नमः । हूं शिखायै नमः । हैं कवचाय नमः । हौं नेत्रत्रयाय नमः । हः अस्त्राय नमः । [5]हां निवृत्तिकलायै नमः ।

---

[1] संवीक्ष्य–पा. [2] तृप्तिं स्वस्यान्तर्देहशुद्धिं–पा. [3] अटवीगृहे गोवासे इष्ट–पा.
[4], [5] हां, हीं, हूं, हैं–पा.

[1]ह्रीं प्रतिष्ठाकलायै नमः । [2]ह्रूं विद्याकलायै नमः । ह्रैं शान्तिकलायै नमः । [3]ह्रौं शान्त्यतीतकलायै नमः । इति पञ्चब्रह्मषडङ्गेन कलामन्त्रैः संशोधयेत् । एवम्भूतस्य भस्मनो धारणं द्विविधम् । उद्धूलनं त्रिपुण्ड्रं चेति । उद्धूलनमपि द्विविधम् । मलस्नानरूपं विधिस्नानरूपं चेति । अम्भसा स्नातस्य द्विविधभस्मस्नानेऽधिकारः ॥

तदशक्तौ कण्ठपर्यन्तं कटिपर्यन्तं जानुपर्यन्तं वा संक्षाल्य क्षालितान्यार्द्रवस्त्रेण संमृज्य वस्त्रान्तरं परिधायाचम्य हुंफडन्तास्त्रेण दक्षिणपादाङ्गुष्ठोद्गतेन वह्निना देहगत[4]बाह्यमलमात्रं दग्धं विचिन्त्य वह्निसम्बधक्षुभितबिन्दुस्थानस्थितशक्तिमण्डलस्रवदमृतप्रवाहेण शरीरमाप्लावयेत् । अथ मनसा मूलमन्त्रं नादान्तमुच्चरन्नेव तत्संपर्कक्षुभितशक्तिपरिस्रुतबहुलामृतधारया देहमभिषिक्तं भावयेत् । इदं मानसस्नानमशुचित्वशङ्कायां सर्वदा सर्वत्र विधेयम् । अथवा तामेव शक्तिं गोरूपां ध्यात्वा तत्पुच्छकिरणामृतप्रवाहेण शरीरमाप्लयेत् । एतद्भावस्नानम् ॥

गङ्गायमुनादिदिव्यजलैर्वा शरीरं प्रोक्षयेत् । तत्तत्क्षेत्रमृत्तिकारजोभिर्वा पञ्चब्रह्मषडङ्गमूलमन्त्रैर्देहं स्पृशेत् । एषामेकतमं प्रकारं कृत्वा पञ्चब्रह्मषडङ्गमूलमन्त्रानेकवारं त्रिवारं वा जपेत् । ततः [5]प्राग्वदाचमनद्वयं कृत्वा संभावितसकलबाह्याभ्यन्तराशुद्धिनिकर[6]निवारकं भस्मस्नानं कुर्यात् । तत्क्रमः—गोब्राह्मणदेवाग्निगुरुविद्यासन्निधिं परिहृत्य म्लेच्छान्त्यजकृतप्रदर्शनादिवर्जिते मार्गभिन्ने शुचौ देशे प्राङ्मुख उदङ्मुखो वा निवेश्य कल्पानुकल्पादिरूपं मुष्टिमात्रं विप्रादिक्रमेण निष्कसार्धनिष्कद्वयप्रमाणं वा भस्मादाय नैरृत्यकोणे [7]तद्राक्षसांशं निरस्य, अकल्पं भस्मचेद्दिग्बन्धनपूर्वकं पञ्चब्रह्मषडङ्गमन्त्रैः संशोध्य चतुर्विधमपि भस्म सप्तवारं हुंफडन्तास्त्रेणाभिमन्त्र्य तेन विरक्तश्चेत्पादादारभ्य मस्तकान्तं, अविरक्तश्चेन्मस्तकादारभ्य पादान्तं दक्षिणाङ्गुष्ठतर्जनी-

---

[1], [2] ह्रां, ह्रीं, ह्रूं, ह्रैं-पा. [3] ह्रः-पा. [4] मलमूत्रं-पा. [5] आचमनं-पा.
[6] निरासकं-पा. [7] तद्राक्षसान्निर-पा.

गृहीतेन स्वल्पेन भस्मना तद्गम्यकरपादतलव्यतिरिक्ताङ्गसंस्पर्श-रूपमुद्धूलनं कुर्यात्। तदेतन्मलस्नानम्॥

ततः षडङ्गमन्त्रप्रजप्तेन भस्मना ईशानादिपञ्चब्रह्ममन्त्रै-र्मूर्धाननहृदयगुह्यपादावयवानां सद्योजातमन्त्रेणैवांसयोस्तदितरा-वयवानां च दक्षिणहस्तेन तदगम्याङ्गानां वामहस्तेन चोद्धूलनं कुर्यात्। अवशिष्टं भस्म मूलेन [1]कुम्भमुद्रया शिरस्यभिषि-ञ्चेत्। एवं सर्वाङ्गोद्धूलनं वीरशैवः कुर्यात्। अन्ये तु क्रमेण ललाटे चतुरश्रत्र्यश्रवृत्तानि कृत्वा कण्ठादधो नाभेरूर्ध्व-मुद्धूलयेयुः। शूद्र उद्धूलनं वर्जयित्वा वक्ष्यमाणत्रिपुण्ड्रात्मकमेव भस्मस्नानं कुर्यात। तदेतत्तपस्विव्यतिरिक्तशूद्रविषयम्। अत एव ज्ञानरत्नावल्यां—तपस्वी चेद्विधिवद्भस्म परिगृह्य तेन स्नान-माचरेदित्यादिना मलस्नानविधिस्नानरूपयोरुद्धूलनयोरधिकार-विशेषणं तपस्वित्वमुक्तम्। एवं क्षत्रियवैश्यावप्यतपस्विनौ त्रिपुण्ड्रात्मकमेव वा भस्मस्नानं कुर्याताम्। ब्राह्मणादयश्चत्वा-रोऽप्युद्धूलनाशक्तौ त्रिपुण्ड्रात्मकमेव भस्मस्नानं कुर्युः। केवल-त्रिपुण्ड्रात्मकभस्मस्नानाभिप्रायेणैव केषुचिदागमेषु वीरशैवा-दिक्रमेणैव निष्कं निष्कार्धं तदर्धं (तदर्धं) चेति भस्मप्रमाणमुक्तम्। तत्र दीक्षितगृहस्थैः सन्ध्यात्रयेऽपि जलसंयुक्तं कार्यम्।

[2](स्त्रीभिर्यतिभिश्च जलवर्जितं व्रतिवानप्रस्थकन्यकादिभिर्दी-क्षाहीनैश्च मध्याह्नात्प्राग्जलसंयुक्तं परतो जलवर्जितं कार्यम्।) एवं भस्मस्नानानुष्ठाने वस्त्रान्तरं परिधायाचामेत्। अपरिधाय वा केवलमाचामेत्॥

अथ त्रिपुण्ड्रम्॥

तच्च वर्णानां क्रमेण सप्तपञ्चचतुस्त्र्यङ्गुलं सर्वेषां वा ललाटे हृदये बाह्वोश्च चतुरङ्गुलं अवयवान्तरेष्वेकाङ्गुलमित्यादिनानागमोक्त-पक्षाणां मध्ये पूर्वाचार्योक्तं कंचित्पक्षं परिगृह्य ललाटादिषु

---

[1] कुन्तमुद्रया-पा. [2] आगमान्तरसंमतः पाठः.

तर्जनीमध्यमानामिकाभिस्तिसृभिरङ्गुलीभिः कर्तव्यम् । ललाटे मध्यमानामिकाङ्गुष्ठैर्वा कर्तव्यम् । त्रिपुण्ड्रं सान्द्रवलित्रयं व्यक्तं च यथा भवति तथा कर्तव्यम् ॥

त्रिपुण्ड्रधारणं च भस्मस्नानं च त्रिवक्त्रं त्रिहस्तं त्रिपदं त्रिणेत्रं [1](भस्मरूषितं ताण्डवं कुर्वन्तं रौद्रं रक्तपुष्पालङ्कृतं भस्मदेवं ध्यात्वा कर्तव्यम् ।) त्रिपुण्ड्रस्थाने कुलाचारप्राप्तं चतुरश्रार्धचन्द्रदीपं त्रिपुण्ड्रान्तरं वा धारणीयम् । सर्वं च पुण्ड्रं केवलभस्मना चन्दनयुक्तभस्मना वा जलसिक्तेन कार्यम् । ललाटे यादृशं पुण्ड्रं हृदयनाभिबाहूदरवक्षस्थलेषु शिवमहेश्वररुद्रविष्णुपितामहदैवत्यं, शिरोललाटगलांसहृदयनाभिपृष्ठेष्वष्टसु स्थानेषु ब्रह्माणीलक्ष्मीविष्णुशिवसूर्याग्निचन्द्रदैवत्यं, शिरोललाटकन्धरावक्षस्थलांसबाहुकूर्परमणिबन्धकुक्षिनाभिपार्श्वयुगपृष्ठेषु षोडशसु स्थानेषु शिवमहेश्वरादिपञ्चकवामादिनवकाश्विद्वयदैवत्यं [2](शिरोललाटनेत्रकर्णनासावक्त्रगलांसकूर्परस्थानेषु शिवशक्तिमहेश्वरसदाशिवशुद्धविद्यामायाकलारागकालनियतिपुरुषप्रकृत्यहङ्कारबुद्धिमनश्श्रोत्र—त्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धादिकम् । अथ पृथिवी सलिलादिभूततत्वदैवत्यं देशकालविद्याकलापेक्षया यथासंभवं कर्तव्यम् ।) षट्त्रिंशत्स्थानपक्षे शिवाद्याकाशान्ततत्त्वानि वृत्ताकाराणि स्फटिकचन्द्रकान्तसूर्यकान्तगोक्षीरविद्रुमहरिताञ्जनेन्द्रायुधेन्द्रगोपमेघपद्मरागाविद्रुमेन्द्रनीलकुङ्कुमजपाकुसुमेन्द्रायुधसूर्यकान्तकनकदूर्वाहरिद्राकरवीरकालमेघनीलमणि—मौक्तिकमाणिक्यकनकस्फटिकवर्णानि ; कृष्णं चतुरश्रं वायुं, रक्तं त्र्यश्रं वह्निं, सितमर्धचन्द्राकारं जलं, पीत चतुरश्रं पृथिवी-

---

[1] आगमान्तरसंमतः पाठः. [2] शिरोललाटनेत्रकर्णनासावक्त्रगलांसकूर्परपणिबन्धहृदयपार्श्वनाभिगुह्यद्वयस्फिगूरुजानुजङ्घापादरूपेषु द्वात्रिंशत्स्थानेषु अष्टमूर्त्यष्टविघेश्वराष्टदिक्पालाष्टवसुदैवत्यं, करपादाङ्गुलिभिः सह षट्त्रिंशत्स्थानेषु शिवशक्तिमहेश्वरसदाशिवशुद्धविद्यामायाविद्याकलारागकालनियति पुरुषप्रकृत्यहंकारबुद्धिमनश्श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलपृथिवीभूततत्त्वदेवताकं देशकालाद्यपेक्षया यथासंभवं कर्तव्यम् । इति युक्तः पाठः ॥

तत्त्वं चेति विभाव्य हां शिवतत्त्वरूपाय शिवाय नम इत्यादिमन्त्रैस्तत्तत्स्थानेषु पुण्ड्राणि धारयेत्। एवं पक्षान्तरेऽप्यूहनीयम्। तत्तत्पूर्वाचार[1]प्राप्तानां भस्मत्रिपुण्ड्रं फालाद्युक्तस्थानेषु सर्वान्तरदेवतान्तरयुक्तानि वा पुण्ड्राणि धारणीयानि। इति भस्मधारणप्रकारः॥

## रुद्राक्षधारणविधिः

अथ रुद्राक्षधारणम्। तदपि भस्मधारणवत् शिवपूजायां नित्यम् "स्मरारिनेत्रादभवच्छिवपूजार्थ" मित्यारभ्य रुद्राक्षं च ब्राह्मणादिभिर्वीरशैवै [2]र्विशेषेण श्वेतरक्तपीतकृष्णवर्णं ग्राह्यम्। उक्तवर्णालाभे वीरशैवैश्चतुर्विधमपि धारणीयम्। रक्तादित्रयं क्षत्रियैः। पीतादिद्वयं वैश्यैः। शूद्रैस्तु कृष्णवर्णमेव धार्यम्। सर्वैर्वा सर्वं यथा लाभं धार्यम्। शिरसि कण्ठे कर्णयोर्बाह्वोर्मणिबन्धयोरुरसि च स्वस्वशिरःप्रमाणाद्युचितसङ्ख्याविशेषयुक्तं वा। शिरसि चत्वारिंशत्। कण्ठे द्वात्रिंशत्। कर्णयोः प्रत्येकं षट्। बाह्वोः प्रत्येकं षोडश। मणिबन्धयोः प्रत्येकं द्वादश। वक्ष्यस्यष्टोत्तरशतम्। इत्येवमष्टाचत्वारिंशदधिकशतद्वयसङ्ख्याकम्। शिखायामेकमित्येकाधिकं वा। शिखायामेकम्। मस्तके षट्त्रिंशत्। वक्षसि पञ्चाशत्। साष्टशतमुपवीतम्। कण्ठकर्णबाहुमणिबन्धेषु पूर्ववदिति पञ्चनवत्युत्तरद्विशतसङ्ख्याकं वा, शिरस्यष्टोत्तर [3]शतसङ्ख्यानामलाभे त्रयम्। कण्ठकर्णबाहुवक्षोमणिबन्धेषु पूर्ववदिति [4]द्व्युत्तरपञ्चशतसङ्ख्याकं वा धरणीयम्। वज्रमाणिक्यवैडूर्यप्रवालमौक्तिकरूपपञ्चरत्नसहितरुद्राक्षधारणं ज्वरग्रहपिशाचमेहकुष्ठभगन्दरकुमारग्रहापस्मारनिवारकम्। मकुटकुण्डलकर्णिकाहारकेयूरकटकोदरबन्धादिषु तद्धारणमपमृत्युविनाशनम्। आयुःश्रीकीर्तिवर्धनमन्यत्र रुद्राक्षधारणम्।

---

[1] प्राप्तनानादिव्यागमस्मृतिपुराणाद्युक्तस्थानसंख्यादिव्यान्तरदेवतान्तरयुक्तानि वा- इति युक्तः पाठः. [2] क्रमेण-पा. [3] शतसंख्या नाम्नान्तमालिकात्रयं-पा. [4] द्व्यशीत्युत्तर-पा.

शिखायां तद्धारणं कोटिगुणफलम् । कर्णभुजयोरुत्तरोत्तरदशगुण-
फलम् । हस्तयोरपरिमितफलम् । एकवक्त्ररुद्राक्षस्य शिखायां संगो-
प्यधारणं ब्रह्महत्यादिदोषशस्त्राग्न्यशनिपातचोरवृष्टिमहाभयहरम्,
आयुःश्रीकीर्तिकरम्, भुक्तिमुक्तिकरं सर्वसिद्धिप्रदम् । द्विवक्त्रं
गोहत्यादिदोषहरम् । त्रिवक्त्रं स्त्रीहत्यादिदोषहरम् । चतुर्वक्त्रं अग-
म्यागमनाभक्ष्याभक्षणदोषहरम् । पञ्चवक्त्रं सर्वपापहरम् । षड्वक्त्रं
दक्षिणकरे धृतं भ्रूणहत्याहरम् । सप्तवक्त्रं स्वर्णस्तेयगोहत्यादोषहरं
विषहरं च । अष्टवक्त्रं गुरुतल्पदोषहरं सर्वक्रूरव्यवहारदोषहरं च ।
नववक्त्रं वामकरधृतं लक्षकोटिमहापातकदोषहरम् । दशवक्त्रं
ग्रहपिशाचवेतालब्रह्मराक्षससर्पसिंहव्याघ्रादिभयहरम् । एकादश-
वक्त्रं शिखायां धृतं सहस्राश्वमेधशतवाजपेयशतसहस्रगोदानफल-
प्रदम् । द्वादशवक्त्रं कण्ठदेशे धृतं बहुदक्षिणासहितगोमेधाश्वमेध-
फलप्रदमैश्वर्याभिवृद्धिकारि दंष्ट्रिशृङ्गिचोराग्निभयहरं सर्वपापक्ष-
यकरं च । त्रयोदशवक्त्रं अतुलभोगप्रदं रसरसायनधातुवादघुटिकादि-
सिद्धिकरम्, पितृमातृभ्रातृस्त्रीवधदोषहरं च । चतुर्दशवक्त्रं
सर्वकार्यसिद्धिकरं सकलव्याधिपापहरं ज्ञानयोगसिद्धिकरं च ।
मूर्धभुजकर्णव्यतिरेकेणान्येष्वङ्गेषु क्षयवृद्धिसूतकस्त्रीसङ्गमलमूत्रो
त्सर्जनमद्यमांसलशुनपलाण्ड्वादिभक्षणसमयेषु रुद्राक्षधारणं वर्जनी-
यम् । रुद्राक्षदानकल्पोक्तप्रकारेण तद्दानं सर्ववेदपुराणाध्ययनसर्व-
यज्ञानुष्ठानसर्वतीर्थाभिगमनफलप्रदं सर्वरोगहरं शतलिङ्गदान-
शतलिङ्गस्थापनसहस्रशिवभक्तान्नदानसहस्रकन्यादानफलप्रदं पुत्र-
मित्राहितसकलभोगप्रदं शिवसायुज्यदं प्रतिग्रहीतुरपि शिव-
भक्तस्य तावत्फलदं च । पौर्णमास्यमावास्यासङ्क्रात्युपरागजन्म-
नक्षत्रादि पुण्यदिवसेषु रुद्राक्षधारणं सर्वपापक्षयकरम् । पूजाकाले
रुद्राक्षधारणम्—ईशानमन्त्रेण शिरसि कार्यम् । कर्णयोस्तत्पुरुष-
मन्त्रेण, कण्ठादिष्वघोरमन्त्रेण, वक्षसि व्योमव्यापिमन्त्रेण । अति-
वर्णाश्रमिणां तु तदेकनिष्ठानां यावज्जीवदीक्षितानां श्रीमद्वीरशैवानां
सदातिपरिशुद्धानां सर्वस्यापि कालस्याभ्यार्हितत्वादीशानादिमन्त्रैः
पञ्चाक्षरमन्त्रैश्च धृता रुद्राक्षाः सर्वदा धार्याः । सर्वस्यापि कायिकस्य
वाचिकस्य मानसिकस्य दुःखस्य वा सुखस्य वा शिवैकसमर्पणीय-
त्वेन निषेधविषयकालाभावात् । पूजाकाले त्वतिशयितकालत्वा-
द्विशेषेण धार्याः ॥

ननु भस्मधारणरुद्राक्षधारणयोस्तत्तत्प्रकरणनिरूपणीयत्वेन तत्तत्प्रकरणप्रतिज्ञानुसारेण निरूपितत्वाच्छिवपूजाभिधानरूपप्रतिज्ञाविरोधाच्च नात्र निरूपणीये भस्मधारणरुद्राक्षधारणे इति चेन्न, अग्नीनाधास्य इति सङ्कल्पानुरूपेण प्रत्येकं कर्म सोमेन यक्ष्यमाणोऽग्नीनाधास्य इति [1]सोमपूर्वाधाने यथा आधानस्य सोमयागाङ्गत्वं तद्वद्भूतिरुद्राक्षधारणं प्रत्येकं कर्म अथ च शिवपूजाङ्गमपीति। किमेतावताध्वगमनेनेति चेदत्रोच्यते; अपूर्वाधानवद्रुद्राक्षाधारणं त्रिपुण्ड्रधारणं च प्रत्येकं कर्म दीक्षाभेदेनानारब्धशिवपूजनेन बालेनापि शिवलाञ्छनधारणमवश्यं कर्तव्यमिति सिद्धान्तीकृत्य प्रत्येकं प्रकरणे निरूपितमपि शिवपूजाङ्गमपीति शिवपूजाप्रकरणे पुनर्निरूपितमिति नात्र शङ्कावकाशलेशः[2]॥

ननु यान्यङ्गानि षड्यागादीनि तानि शेषिणा सहैकवाक्यतामासाद्य शेषिणा सन्नियोगशिष्टं कर्म, तथा नाङ्गमन्तराङ्गिनः प्रवृत्तिः, प्रकृते चाकृतशिवपूजारम्भणेन क्रियमाणे भूतिरुद्राक्षधारणे न शिवपूजाङ्गत्वकल्पना युक्तिमती; विनापि शेषिणमङ्गस्यानुष्ठानदर्शनात्प्रकृतेऽङ्गाङ्गित्वापत्तिर्दुर्घटेति चेन्न; सोमेन यक्ष्यमाणोऽग्नीनाधास्य इतिवच्छिवपूजां करिष्यमाणोऽधिकारसम्पत्यर्थं भस्मधारणं रुद्राक्षधारणं च करिष्य इति सङ्कल्पितस्य तस्य अन्यत्वात्। यथा नानाहिताग्निः सोमेऽधिकृतो भवति तद्वदरुद्रलाञ्छनो रुद्रं यष्टुमधिकार्यपि न भवति। शिवो भूत्वा शिवं यजत् इति शिवपूजाङ्गधारणमन्यदेवेति सिद्धान्तः॥

## अथ सकलीकरणपद्धतिः

वीरशैवानां गुरुकृतसकलीकरणस्यैवानुदिनमनुस्मरणम्। इतरेषां तात्कालिकं सकलीकरणमिति विशेषः।

अथ करन्यासाङ्गन्यासरूपं सकलीकरणम्। तत्त्रिविधम्। गृहस्थानां सृष्टिन्यासरूपम्, ब्रह्मचारिणां स्थितिन्यासरूपम्, यति-

---

[1] सोमप्रकरणपठिताधानस्य यथा सोमयागाङ्गत्वमपि तद्वदित्यर्थः! [2] शिवपूजाङ्गभूतिरुद्राक्षधारणं केवलभूतिरुद्राक्षधारणं च भिन्नभिन्नम्, अत्र शिवपूजाङ्गस्य विचार इति तात्पर्यार्थः।

वनस्थानां संहारन्यासरूपम्। वीरशैवानां यथारुचि त्रयमपि। तत्रादौ सृष्टिन्यास उच्यते—करौ चन्दनादिचर्चितौ कृत्वा वामकरत [लांतं]लं तत्पृष्ठं च मणिबन्धात्समारभ्य दक्षिणपाणिना हः अस्त्रायफडिति प्रतिमार्जनं[1] मार्जनमावृत्तेन मन्त्रेण [1]द्विः प्रमृज्य तेनैव मन्त्रेण दक्षिणकरतलं तत्पृष्ठं च वामकरेणैकवारं प्रमृज्य करावामणिबन्धमस्त्रतेजसा व्याप्तौ संचिन्त्य, सम्पुटीकृत्याङ्गुष्ठद्वयमध्येऽमृतरूपं शक्तिमण्डलं ध्यात्वा, तेनामृतेन [2](तथा नयनद्वयमाप्लाव्य), योजिताङ्गुष्ठद्वयकर्णिके [3]करसम्पुटकमले हां शिवासनाय नम इति शिवासनं विन्यस्य [4]हां हः शिवमूर्तये नम इति तेजोमयीं [5]स्थिरविद्यां तरुणां शिवस्य सूक्ष्ममूर्तिं विन्यस्य, हों ईशानमूर्धाय नम इत्युङ्गुष्ठयोस्तर्जनीभ्यां विन्यस्य, तर्जन्यादिकनिष्ठिकान्तमङ्गुष्ठाभ्यां हें तत्पुरुषवक्त्राय नम इत्यादींश्चतुरो मन्त्रान् विन्यस्य, हां हौं विद्यादेहाय नम इत्यङ्गुष्ठे करतलयोरष्टत्रिंशत्कलामयं सदाशिवात्मकं स्थूलं विद्यादेहं विन्यस्य, नेत्रेभ्यो नम इति नेत्रं करतलयोर्विन्यस्य, हां हौं शिवाय नम इत्यङ्गुष्ठानामिकाभ्यां सदाशिवदेहव्यापकं शिवमावाहयेत्। आवाहनं गुरुकृतसामरस्यस्यैव मन्त्रेणा [6]विच्छेदेनानुसन्धानम्। अन्येषां तु तात्कालिकमिति विशेषः। ततः कनिष्ठिकादिषु हां हृदयाय नम इत्यादिनेत्रमन्त्रव्यतिरिक्तान् पञ्च मन्त्रान् क्रमेण विन्यस्य, वामदक्षिण [भुजौ] करौ तदितरकराभ्यां कवचाय नमः इत्यवकुण्ठ्य करद्वयं संयोज्य वौषडन्तमूलेन परमीकुर्यात्। न्यस्तानां हृदयशिरश्शिखादीनां कलानां च भिन्नभिन्नवर्णानामावाहितपरमशिवतेजसातिधवलेन तद्वर्णताप्तिभावनं परमीकरणम्।

ततोऽऽङ्गन्यासं कुर्यात्। दक्षिणाङ्गुष्ठानामिकाभ्यां हां शिवासनाय नम इति देहमध्ये हृदि वा मूलाधारात्समुद्भूतं श्वेतं शिवस्यासनपङ्कजं विन्यस्य [7]हं हां शिवमूर्तये नम इति (मनो) नाभिकन्दादि हृदयादि वा भ्रूमध्यपर्यन्तं तेजोमयीं शिवस्य सूक्ष्म-

---

[1] अस्त्रमन्त्रेण द्विः. [2] हांशक्तये वौषडिति कवचद्वयमाप्लाव्य–पा. [3] करसम्पुटं–पा. [4] तन्मध्ये ओं हांहं हौं शिव–पा. [5] स्थिरविद्युन्निभां सितवर्णां. [6] विच्छिन्नानु–पा. [7] आं हां हां हां–पा.

मूर्तिं विन्यस्य मुष्टिं बध्वा, अङ्गुष्ठेनेशानमन्त्रं मूर्ध्नि विन्यस्य अङ्गुष्ठयुक्ततर्जन्यादिभिर्वक्त्रे हृदि गुह्ये पादयोश्च तत्पुरुषमन्त्रादीन् क्रमेण विन्यस्य (इन्द्रमन्त्रेण) भ्रूमध्यादिब्रह्मरन्ध्रान्तं हां हौं विद्यादेहाय नम इति विद्यादेहं विन्यस्य, [1]नेत्रमन्त्रेण त्रिषु मध्यमाङ्गुलीभिस्तिसृभिर्विन्यस्य, तस्मिन्नङ्गुष्ठानामिकाभ्यां हां हौं शिवाय नम इति परमशिवमावाहयेत्। ततो [2]हृदयशिरस्स्थिताः शिवस्थानेषु हृदयशिरश्शिखास्वङ्गुष्ठकनिष्ठिकानामिकामयध्यमाभिर्विन्यस्य, [4]कर्णप्रावरणत्वेन स्तनमध्यान्तं [5]कवचं तर्जनीभ्यां विन्यस्य, हस्ततलयोरस्त्रमनामि[6]काभ्यां विन्यसेत्। सर्वेऽप्येते मन्त्रा नमोन्ताः। अस्त्रमन्त्रस्तु [7]फडन्तः। नमोहुंफड(न्ता)स्त्रमन्त्रेण तालत्रयपुरस्सरं दिग्बन्धनं कृत्वा कवचेनावेष्ट्य वौषडन्तमूलेन महामुद्रां प्रदर्शयेत्। मस्तकादिपादान्तं हस्ताभ्यां संस्पर्शनं महामुद्रा। ततः शिवसमानरूपतामात्मनश्चिन्तयेत्। इत्थं कृताङ्गन्यासो बद्धपट्टशिरोवेष्टनमस्तकत्राणकङ्कणकरगृहीतास्त्रभीषणो भट इव क्षुद्राणामप्रधृष्यो भवतीति सकलीकरणं वीरशैवैरभिज्ञैः कार्यमेव॥

अथ सामान्यार्घ्यपात्रमस्त्रमन्त्रेण प्रक्षाल्य बिन्दुस्थानस्रवदमृततया भावितेन शुद्धजलेन हांहृदयाय वौषडित्यापूर्य हां हृदयाय नम इति सप्तवारमभिमन्त्र्य कवचेनावकुण्ठ्य गन्धपुष्पादिभिरभ्यर्च्य धेनुमुद्रां प्रदर्शयेत्। इदं सामान्यार्घ्यजलं शिवमपहायान्येषां सर्वेषां द्वारपालकादीनां साधारणम्।

## अथ द्वारपालकार्चनम्

तस्यायं क्रमः। अस्त्रपञ्जरमध्यस्थमात्मानं [8]भावयान् पृथिव्यादिमायान्तमेकत्रिंशत्तत्त्ववर्गं मनसातिलङ्घ्य शिवपूजामन्दिरं वृत्ताकारं रक्तवर्णं शुद्धविद्यातत्त्वात्मकं भावयन् भोगमोक्षकामः पूर्वद्वारे द्वारपा[9]लमर्चयेत्। कीर्तिविजयसौभाग्यकामो दक्षिण-

---

[1] नेत्रमन्त्रं नेत्रेषु. [2] हृदयशिरश्शिखास्थानेषु स्वङ्गुष्ठयुक्त कनिष्ठिकानां मध्यमाभिः—पा. [4] कण्ठ. [5] कवचतर्ज. [6] काङ्गुष्ठाभ्यां त्रिवारं विन्यसेत्. [7] हुं फडन्तः. [8] भावयामि—मृ—पा. [9] कानर्च.

द्वारे। केवलमोक्षैककामः पश्चिमद्वारे। उदग्द्वारे पूजनं न कार्यम्। सामान्यार्घ्योदकेन द्वारमस्त्रमन्त्रेण संप्रोक्ष्य (प्रथमं) बहिर्द्वारपालानर्चयेत्। ते च गणपत्यादयः। तत्र द्वारस्योर्ध्वोदुम्बरमुखे दक्षिणवामभागयोर्मध्ये च गणपतिसरस्वतीमहालक्ष्म्य उपविष्टाः। वामदक्षिणव्यवस्था च देवमपेक्ष्य द्वारे प्रविशन्तं पूजकमपेक्ष्य वा ग्राह्या। द्वारस्य बहिः प्रदेशे दक्षिणपार्श्वे नन्दी, दक्षिणपार्श्वे एव नन्दिन उत्तरभागे गङ्गा, वामपार्श्वे महाकालः वामपार्श्व एव तस्य दक्षिणभागे यमुना च स्थिताः। हां गणपतये नमः श्यामवर्णं [1]दन्ताक्षसूत्रपाशाङ्कुशान् पुष्करेण बीजपूरं च धारयन्तं गणपतिं पूजयामि। हां सरस्वत्यै नमः श्वेतवर्णामक्षमालापुस्तकधरां वीणावादनव्यपृताधःकरद्वयां सरस्वतीं पूजयामि। हां महालक्ष्म्यै नमः श्रीफलकमलाभयवरधारिणीं उभयपार्श्वस्थितगजयुगलहस्तोद्धृतहेमकुम्भामृतधाराभिः परिषिच्यमानां महालक्ष्मीं पूजयामि। हां नन्दिने नमः, अरुणजटामकुटधरं त्रिशूलाक्षमालातर्जनीमुद्गरधारिणं [2]स्थूलमुखं नन्दिनं पूजयामि। हां गङ्गायै नमः, धवलवर्णां मकरवाहनां अमृतकलशचामरधारिणीं गङ्गां पूजयामि। हां महाकालाय नमः। कृष्णवर्णं दंष्ट्राकरालभ्रुकुटिभीषणस्थूलदेहं शूलकपालमुद्गरतर्जनीमुद्राधारिणं महाकालं पूजयामि। हां यमुनायै नमः। श्यामवर्णां कूर्मवाहनां चामरामृतकलशधारिणीं यमुनां पूजयामीति तत्तत्स्थानेषु पूजयेत्। सर्व एते द्वारपाला गङ्गायमुने विना त्रिणेत्राः, सर्वे चैते द्वारसमानमुखाः॥

वेदान्तवेद्याखिलविश्वमूर्ते
विभो विरूपाक्ष विषेशशून्य।
विश्वेश्वराशेषविशेषमूल
कवाटमुद्धाटय कालकाल॥

इति श्लोकेन कवाटोद्घाटनप्रार्थनां सञ्जिकायां भावयेत्। पूजकोऽस्त्रमन्त्रेण कवाटमुद्घाट्य हौं शिवाय नम इति नेत्रयोर्विन्यस्य

---

[1] ततोऽक्षसूत्र. [2] स्थूलमिभम्; स्थूलदेह.

दिवि स्थितान् विघ्नान् दिव्यध्यानदृष्टिसन्त्रस्तान् कृत्वा नभोगतान् विघ्नान् तर्जन्यङ्गुष्ठयोगोत्क्षिप्तपुष्पसन्त्रस्तान् भूमिगतान् विघ्नात् दक्षिण [पाद] पार्ष्णिघातत्रयसन्त्रस्तान् कृत्वा अस्त्राय फडिति मन्त्रेण त्रिविधान् विघ्नानुत्सारयेत् । अथ द्वारस्य देहलीशाखां वामां संश्रितो दक्षिणां देहलीमस्पृशन् दक्षिणपादेन शिवमन्दिरं प्रविश्य हां अस्त्राय नमः, अग्निवर्णं चतुर्वक्त्रं शक्तिशूलाभयवरान्वितकरद्वयचतुष्टयं जटामकुटालङ्कृतमर्धेन्दुशेखरं सकलविघ्ननिवारकं अस्त्रराजं पूजयामीति देहलीमध्ये शिवमूर्तेरभिमुखतया स्थितं अस्त्रराजं परावृत्य तदभिमुखः पूजयेत्। ततो द्वारस्याभ्यन्तरे दक्षिणपार्श्वे [ह्रां] हां श्रीनन्दिकेश्वराय नमः रक्तवर्णं त्रिणेत्रं चन्द्रकलालङ्कृतजटामकुटं मृगपरशुनमस्कारमुद्रान्वितकरचतुष्टयं बाहुमूले वेत्रं कट्यां क्षुरिकां च धारयन्तं भस्मरुद्राक्षधारिणं वानरास्यं नन्दिकेश्वरं पूजयामीति द्वारस्याभ्यन्तरे-दक्षिणपार्श्वे पूजयेत्। हां सुं सुयशादेव्यै नमः श्यामवर्णां उत्पलालङ्कृतदक्षिणकरां सुयशादेवीं पूजयामीति द्वारस्याभ्यन्तरे सुयशादेवीं पूजयेत्। ततः शिवं प्रदक्षिणीकृत्य निरृतिकोणे ब्रह्माणं पूजयेत्। पूजा चैतेषां आसनदानावाहन स्थापन सन्निधापन सन्निरोधन पाद्याचमनार्घ्यं गन्धपुष्प धूपदीपदानान्तं नैवेद्यताम्बूलदानान्तं वा प्रत्येकं कर्तव्या। अशक्तौ मध्य एव सर्वेभ्यो द्वारपालेभ्यो नम इति गन्धपुष्पादिभिः पूजयेत्।

"द्वारपा देव देवस्य द्वारं रक्षत यत्नतः। निवार्य विघ्न सङ्घातमित्याज्ञा पारमेश्वरी" इति शिवाज्ञां श्रावयेत् । आत्मार्थ पूजायां आगमभेदेन तदभिहितप्रतिषिद्धत्वाद्वैकल्पिकमिति न वैकल्यं तदकरणे, करणेऽभ्युच्चयः [1]षोडशिग्रहन्यायेन विकल्प एव ॥

अथ पूजोपकरणं सर्वं शिवाग्रे सन्निधाप्य देवस्य दक्षिणभागे आग्नेयभागे वा, उत्तराभिमुखः स्थित्वा रुचिरं स्वस्तिकं वाभ्यस्तमास(नं बध्वा)नमास्थाय-(शोणक्षौमचित्रान्यतमेन चतुर्विंशत्याख्य-

[1] अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीत्यत्र यथा षोडशिग्रहणस्य विहितप्रतिषिद्धत्वाभ्यां विकल्पेनानुष्ठानं तद्वदित्यर्थः ।

हस्तमानेन त्रिधासनमास्थाय) पञ्चानामात्मस्थानद्रव्यमन्त्रलिङ्ग-
शुद्धीनां मध्ये प्रथमं आत्मशुद्धिं कुर्यात्। अयमूर्ध्वोदुम्बरादिषु
गणपत्यादिपूजाप्रकारो यथोक्तलक्षणशिवमन्दिरसद्भावे आत्मशुद्धेः
पूर्वं कर्तव्यः। तच्चैवं विहितम्। गृहस्येशानदिग्भागे शिलामध्य-
मकेष्टकामयं शुद्धदारुमयं (मृन्मयं) वा चतुरश्रमायतं वृत्तं वा यज
मानमध्याङ्गुलिमध्यपर्वतृतीयपर्वपरिमितं वा त्रिपञ्चसप्तनवत्रयो-
दशसप्तदश विंशत्येकविंश द्वात्रिंशद्दैर्ध्यरूपोत्तममध्यमाधमभेदभि-
न्नाङ्गुलिचतुर्विंशत्याख्यहस्तमानेन तद्धस्तान्यतमप्रमाणकमेकभूमं
द्विभूमं वा चतुर्विंशत्याख्यहस्तमानेन त्रिभूमं वा पूजागारं निर्माय
तत्पञ्चधा विभज्य तन्मध्यभागे शिलासुधे वर्जयित्वा मृण्मयीमिष्टका-
चितां वा [1] चतुष्कोणहस्तोभयाङ्कां वा षोडशाङ्गुलोत्सेधां वा अष्टा-
ङ्गुलोत्सेधां वा वेदिकां विरच्य्य तदुपरि पश्चिमभागे एकताल-
विस्तारायामं पञ्चाङ्गुलोत्सेधं गर्भगृहस्थानीयदेशं तस्य पूर्वभागे
तादृशायामविस्तारोत्सेधमर्घपण्डपस्थानीयं देशं च कृत्वा तस्य
पूर्वभागे पञ्चतालायामं चतुस्तालविस्तारमष्टाङ्गुलोत्सेधं बेर-
मण्टपस्थानीयदेशं च कल्पयेत्। तत्र गर्भगृहस्थानीयदेशे सौवर्णं
राजतं ताम्रं दारुमयं वा चतुरश्रमायतं वृत्तं वा सज्जिकाभिधपेटकं
कल्पयेत्। बेरमण्टपस्थानीयदेशे द्विहस्तायतमेकहस्तविस्तृतं
द्वादशाङ्गुलोच्छ्रायं वा कमलभूषितपेटकं विन्यस्य [2]तदुपरि
नमनीं तन्मानां (ना) प्रसार्य तन्मध्ये गजदन्तादिनिर्मितं पीठं विन्यस्य
तदुपरि सुवर्णादिरचितं पद्मपीठं पश्चिमभागरचितप्रभामण्डल-
सहितं पूर्वाभिमुखं स्थापयेत्। अस्मिन् पक्षे ऊर्णासूत्रत्रयेण
परिवीय "पवित्रं ते विततं ब्रह्मणस्पते। प्रभुर्गात्राणि पर्येषि
विश्वतः। अतप्ततनूर्नतदामो अश्नुते। शृतास इद्वहन्तस्तत्समाशत"
इति जपति। अयं दिव्यागमोक्तपक्षः। [3]करपीठाख्यमुख्यपक्षे तु मान-
समेवेदं सर्वमिति विशेषः। पूजामण्टपं च प्रकीर्णकुसुमामोदचन्द-
नचर्चावितानमुक्ता [4]दामध्वजपताकादर्पण प्रदीपादिभिरलङ्कृत्येति।
एवंविधपूजामण्टपाभावे शिवपूजास्थानमेव तादृशपूजामण्टपं

---

[1] चतुष्कोणस्तम्भयुक्तां स्तम्भरहितां वा–पा. [2] तदुपरिननमनीतन्मानामप्रसार्य–पा.
[3] परपीठाख्य–पा. [4] मुख्य–पा.

मनसा भवायित्वा शिवपीठसमीपोपविष्टः (शिव एव) तत्रैव द्वारपालार्चनमात्मशुद्धेः पूर्वं पश्चाद्वा कुर्यात् ॥

इति द्वारपालार्चनविधिः

नन्वेतत्सर्वमसङ्गतम् । पशुर्जीवः, पतिः परमेश्वरः, तदुभयातिरिक्तजडाजडप्रपञ्चजालं पाशः, तत्र पतिशब्दवाच्यः परमेश्वर एक एव पूज्यः प्रपत्तव्यो ध्यातव्यः श्रोतव्य इति । तत्र "एकमेवाद्वितीयं" इति श्रुतिपर्यालोचनया शिवव्यतिरिक्तस्य सर्वस्य देवतान्तरस्य पशुशब्दवाच्यत्वेनाध्यवसाय एव वीरशैवत्वमिति शिवव्यतिरिक्तद्वारपालार्चनं न सङ्गतमिति चेन्न, नन्दिकेश्वरादिद्वारपालानां शिवविभूतिविशेषत्वेन [1]एक एवानेकधा वर्तत इति श्रुत्यनुरोधाच्च । तदेकतानत्वरूपवीरशैवत्वं च तदितरदेवतान्तरतद्भजकभजनातिरेकः । प्रकृते च द्वारपालानां शिवैकाज्ञापरिपालकत्वेन तेष्वपि शिवाभेदबुद्धिरेव कार्या । तथैवागमान्तरैकवाक्यतायां प्रतिभाति । जङ्गममूर्तीनां शिवमूर्त्यभेदप्रति[2]पत्तिं, स्वेष्टलिङ्गापेक्षया जङ्गमप्राबल्यं च वर्णितम् । नन्दिकेशादिशिवगणभजनस्यागमान्तरेषु बहुशः प्रतिपादनाच्च द्वारपालार्चनं यद्युक्तं तत्सर्वं कार्यमिति सिद्धान्तः ॥

ननु धेनुमुद्रादिपूजाङ्गमुद्रादीनां हस्तद्वयव्यापारसाध्यत्वेन पीठान्तरावस्थानं वाच्यम ; अङ्गीकृते च तस्मिन् प्राणलिङ्गविच्छेदः स्यात्, अतः कथमेतदुपपद्यतामिति चेत्—वातुलोत्तरे रथादि सुवर्णैरेव निर्माय तस्मिन्निष्टलिङ्गस्थापनपुरस्सरं शिवपूजा, ऊर्णासूत्रेण चान्वारम्भः, तत्र च 'पवित्रं त' इति वैदिको मन्त्रो हृदयमन्त्रेण नमोऽन्तेन सहित इति बहुशः प्रतिपादनात् ॥

अथवा पूजायां मानसधर्मस्यैव वैशेष्यात्सर्वं मानसमेवेति सर्वं समञ्जसम् ॥

अथाभिधीयते सम्यङ्निगमागमदर्शितः ।
शिवपूजाविधिः स्पष्टमुपदेशे चतुर्दशे ॥

---

[1] एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् । इति श्रुतेरर्थानुवादः । [2] पत्तेः—पा.

आदौ शैवस्त्रिधा प्रोक्तः सामान्यः प्रथमः स्मृतः ।
विशेषस्तु द्वितीयः स्यान्निराभारस्तृतीयकः ॥

त्रिधैवं वीरशैवः स्यादथ केवलवैदिकः ।
वेदागमानुसारी च तन्त्रागमविशारदः ॥

अभक्तो वाथ भक्तो वा त्रिधदीत शिवार्चनाम् ।
अभक्तश्चेद्भक्तिमेति भक्तः सायुज्यमेति च ॥

भक्तोऽपि द्विविधः प्रोक्त एकतानश्च तन्द्रितः ।
तन्द्रितो मूलमन्त्रेण शिवभक्तथार्चयेच्छिवम् ॥

तन्मात्रेण स सन्तुष्टः क्रमात्सायुज्यदायकः ।
अथ भक्तस्त्वेकतानः शिवभक्तोत्तमोत्तमः ॥

निगमागमपन्थानमाश्रित्य शिवपूजकः ।
यादृशे पूजने यस्य भक्तिरव्याहता भवेत् ॥

तादृशी तेन वै पूजा कार्या स्वविभवैरनु ।
दारिद्र्यं पूजने नैव कार्यं मनसि पूजकैः ॥

स्वमनोविभवेनैव यजेत्साम्बं त्रिलोचनम् ।
पूजको यदि सम्पन्नो धनलोभेन पूजयेत् ॥

न पूजाफलमाप्नोति स दरिद्रो नरः स्मृतः ।
शिवार्चने यस्य मनः स्वधनैः स्वजनैर्युतम् ॥

स सम्पन्नो भवेद्भक्तः शिवार्पितधनः स्वयम् ।
शिवानुकूला ये मर्त्याः स्वजना इति तान्वदुः ॥

नानुकूला जना ये तु न स्वीयास्ते जना इति ।
द्विव्यागमोक्तरीत्याहं मनोनैर्मल्यसाधनम् ॥

देहात्मशुद्धिमन्वक्षं वदन्वक्ष्ये शिवार्चनाम् ।

अथात्मशुद्धिः । सा द्विविधा । पूजकजीवस्य [1]शिवभावापादनात्मिका जीवशुद्धिरूपा, पूजकजीवस्य शिवदेहत्वापादनात्मिका देहशुद्धिरूपा च । तत्रायं जीवशुद्धिप्रकारः । त्रिः प्राणानायम्य देहान्तर्गतमशुद्धं वायुं रेचकप्राणायामेनास्त्रमन्त्रेणोत्सार्य बाह्यवा-

---

[1] शिवपूजाभावापादन—पा.

युनोदरं प्रपूर्य पादाङ्गुष्ठद्वयादारभ्य यावन्मूलाधारं द्विधाभूतां तत ऊर्ध्वमाब्रह्मरन्ध्रान्तमेकीभूतामधोमुखैः पद्ममुकुलैर्युक्तां शरीरान्तरालेऽतिसूक्ष्मां विद्युल्लेखामिव भास्वरामन्तःसुषिरयुक्तां सुषुम्नानाडीं संचिन्त्य, तन्मध्ये हूमिति शिखाबीजं ज्वलन्तं संचिन्त्य, हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रेष्वधोमुखतया स्थितानि पद्ममुकुलानि [1]पूरककुम्भकरेचकैर्विकसितोत्तम्भितोर्ध्वमुखीकृतानि भावयित्वा मूलाधारप्रदेशे दीपशिखावज्ज्वलन्तं हूंकारं हुं फडिति सन्ततोच्चारणादूर्ध्वमुद्गच्छन्तं ध्यायन्, तेन पद्मापि [ब्रह्महृत्पद्म] ब्रह्मादिग्रन्थीन् पद्मनालग्रन्थीन् भिन्नान् भावयित्वा, हूंकारं प्रतिनिवृत्य वायुं विरेचयेत्। पुनरपि हूंकारमन्त्रं मूलाधारे ध्यायन्पूरकवायुनोपसंहृतसर्वशरीरव्यापकचैतन्यं हृत्पङ्कजाश्रितं पुर्यष्टकरूपसूक्ष्मदेहान्वितं जीवं पुर्यष्टकादादाय स्फुरत्तारकाकारमतिसूक्ष्ममेकाकिनं हां इति हृदयबीजं संपुटितं कृत्वा हूंकारं मूर्ध्नि निवेश्य कुम्भकं कृत्वा वायुमूर्ध्वं प्रवर्तयन् संहारमुद्रया तमादाय द्वादशान्तपर्यन्तं नीत्वा तदुपरि स्थिते परमशिवे योजयेत्। एवं च जीवः स्थूलसूक्ष्मवर्धकदेहोपाधि[2]निर्मुक्तः शिवसायुज्यान्निर्मलज्ञानक्रियाशक्तियुक्तः शुद्धो भवति॥

यद्वा जीवं द्वादशान्तपर्यन्तं नीत्वा हृदयकमल एव शक्तिमण्डलसंपुटितं कृत्वा [3]भूतशुद्धिं [4]कुर्यात्। तत्रायं क्रमः—हृत्कमलकर्णिकोपरि हां सूर्यमण्डलाय नमः। हां सोममण्डलाय नमः। हां अग्निमण्डलाय नमः। हां शक्तिमण्डलाय नमः। इति विन्यस्य हां हं हां आत्मने नमः इति देहव्यापकं जीवात्मानमादायोपसंहृतव्यापकरूपं स्फुरत्तारकाकारं संचिन्त्य तं शक्तिमण्डलस्योपरि विन्यस्य तस्योपरि च शक्तिवह्निसोमसूर्यमण्डलानि क्रमेण विन्यस्योर्ध्वाधस्स्थितशक्तिमण्डलद्वयविनिस्सृतामृतपूरपरिप्लुतं भावयेत्।

---

[1] पूरककुम्भकाभ्यां इत्येव भवितव्यम्, अनुपदमेव वायुं विरेचयेत् इति विरेचनस्य वक्ष्यमाणत्वात्. [2] निर्मुक्तः शिवसायुज्यं निर्मलज्ञानक्रियाशक्तियुक्तं भवति—पा. [3] भूतशुद्धिसमयकर्तव्यदेहदाहतो रक्षेत्. [4] कर्तव्यम्। देहतां गतो रक्षेत् पाठः। अत्र—भूतशुद्धिं कृत्वा देहव्यापकं रक्षेत् इति ग्रन्थेन भाव्यम्.

एवं जीवस्य रक्षामात्रं कर्तव्यम् । तस्य दीक्षाकाल एव शुद्धत्वात् प्रतिदिवसं पूजासमये शुद्धिर्नापेक्षितेति ॥

देहशुद्धिः—

अथ देहशुद्धिः । सा द्विविधा । सूक्ष्मदेहशुद्धिः स्थूलदेहशुद्धिश्चेति । तत्र शब्द-स्पर्श-रूप-रस-गन्ध-बुध्य-हङ्कार-मनो-रूप पुर्यष्टकात्मकसूक्ष्मशरीरशुध्यर्थं हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रस्थितेषु ब्रह्मादिषु कारणपुरुषेषु ब्रह्मणि शब्दस्पर्शौ प्रविलापयामि, रसं विष्णौ प्रविलापयामि, रूपगन्धौ रुद्रे प्रविलापयामि, बुद्ध्यहङ्कारावीश्वरे प्रविलापयामि, मनः सदाशिवे प्रविलापयामि इति सूक्ष्मशरीरांशान् शब्दादीन् प्रविलापयेत् । ततः स्थूलशरीरशुध्यर्थं स्वशरीरे पादादिद्वादशान्तपर्यन्तस्थानेषु स्थितानि (वक्ष्यमाणस्थानानि) वक्ष्यमाणस्थानाकृतिरूपादियुक्तानि पञ्चमहाभूतानि ध्यात्वा पृथिवीमप्सु प्रविलापयामि, आपोऽग्नौ प्रविलापयामि, अग्निं वायौ प्रविलापयामि, वायुमाकाशे प्रविलापनयामि, आकाशं पराशक्तौ प्रविलापयामि, पराशक्तिं परशिवे प्रविलापयामीति भावयेत् । इयं स्वकारणेषु पृथिव्यादिप्रविलापनरूपा भूतशुद्धिः । अन्या तत्तद्गुणक्षपणादिरूपा भूतशुद्धिः । गुणक्षपणरूपा च द्विविधा । प्रत्येकशोधनरूपा परस्परशोधनरूपा च । तत्राद्या यथा—पादादारभ्य जानुपर्यन्तं चतुरश्रं पीतवर्णं कठिनस्वभावं वज्रलाञ्छितं ह्रामिति हृदयबीजेन पार्थिवबीजसहितेन युक्तं ब्रह्मणा कारणेश्वरेणाधिष्ठितं निवृत्तिकलारूपं पार्थिवमण्डलं भावयामीति विचिन्त्य, ह्रां निवृत्तिकलायै हुंफडिति मन्त्रेण पञ्चभि-[1]रुद्घातैः पृथिव्या गन्धरूपरसस्पर्शशब्दगुणानुत्सारयेत् । ततो जान्वादिनाभिपर्यन्तमर्धचन्द्राकारं श्वेतवर्णं द्रवस्वभावं पद्मलाञ्छितं ह्रीं इति शक्तिबीजेनाप्यबीजसहितेन युक्तं विष्णुना कारणेश्वरेणाधिष्ठितं प्रतिष्ठाकलारूपमाप्यमण्डलं भावयामीति विचिन्त्य ह्रीं प्रतिष्ठाकलायै हुं फडिति मन्त्रेण चतुरुद्घातैरपां रसरूपस्पर्शशब्दगुणानुत्सारयेत् । ततो नाभ्यादिकण्ठपर्यन्तं त्र्यश्रं रक्तवर्णं

---

[1] रुत्सारितैः–पा.

पचनस्वभावं स्वस्तिकलाञ्छितं ह्रूं इति शिखामन्त्रेणाग्निबीजसहितेन युक्तं रुद्रेण कारणेश्वरेणाधिष्ठितं विद्याकलारूपमग्निमण्डलं भावयामीति विचिन्त्य ह्रूं विद्याकलायै हुं फडिति मन्त्रेण त्रिभिरुद्घातैरग्निगतान् रूपस्पर्शशब्दानुत्सारयेत्। ततः कण्ठादिभ्रूमध्यपर्यन्तं षडश्रं कृष्णवर्णं चलनस्वभावं षड्बिन्दुलाञ्छितं ह्रैमिति कवचमन्त्रेण वायुबीजसहितेन युक्तं महेश्वरेण कारणपुरुषेणाधिष्ठितं शान्तिकलारूपं वायुमण्डलं भावयामीति संचिन्त्य ह्रैं शान्तिकलायै हुं फडिति मन्त्रेण द्वाभ्यामुद्घाताभ्यां वायोः स्पर्शशब्दगुणावुत्सारयेत्। ततो भ्रूमध्यादिद्वादशान्तपर्यन्तं वृत्ताकारं धूम्रवर्णमाकाशस्वभावं बिन्दुशक्तिलाञ्छितं ह्रः इत्यस्त्रमन्त्रेण संयुक्तं सदाशिवेन कारणेश्वरेणाधिष्ठितमाकाशमण्डलं भावयामीति संचिन्त्य ह्रौं शान्त्यतीतकलायै हुं फडिति मन्त्रणैकोद्घातेनाकाशस्य शब्दगुणमुत्सारयेत्। एतानि पृथिव्यादिमण्डलानि हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रगतानि वा विभाव्य विशोधयेत्। इति प्रत्येकशोधनप्रकारः। परस्परशोधने त्वयं विशेषः। सर्वाणि पृथिव्यादिमण्डलानि तत्तच्छोधनसमये पादादिमूर्धान्तव्यापकानि भावयेत्। पृथिवीशोधने तद्गुणपञ्चकोत्सारणानन्तरं पृथिवीं स्वविरुद्धवाय्वभिभूतां वाय्वाकारापन्नां, वायुशोधनसमये वायुं स्वविरुद्धपृथिव्यभिभूतं पृथिव्याकारापन्नं च भावयेत्। एवं जलानलावपि तत्तद्गुणोत्सारणानन्तरं स्वविरुद्धानलजलाभिभूतावनलजलाकारापन्नौ भावयेत्। आकाशगुणोत्सारणानन्तरमाकाशं नित्यत्वव्यापकत्वशुद्धत्वादितद्विरुद्धगुणयुक्तपराशक्त्यात्मकपराकाशाभिभूतं तदाकारापन्नं शुद्धस्फटिकनिर्मलं भावयेदिति। इत्थं महाभूतानां प्रत्येकशोधनेन परस्परशोधनेन वा गुणक्षयात् क्षीणशक्तिकस्य भूतसमुदायात्मकस्य शरीरस्य शोधनं विभाव्य पादाङ्गुष्ठस्थितेन शिवशक्त्यधिष्ठितेन कालाग्निना [1] हः अस्त्राय हुंफडिति मन्त्रेण शरीरं दग्धं निरवशेषं निवृत्त्यादिकलामात्रशेषं शरीरगतदोषमात्रं [2] वक्तव्यरूपं भावयित्वा द्वादशान्तस्थितशक्तिमण्डलस्रवदमृतवर्षेणाप्लावयेत्। एवं शरीरशोषार्थं उक्तप्रकारं शरीरारम्भ-

---

[1] हुं अथवा हं—पा. [2] वक्तव्यं रूपं, वा दग्धं भावयित्वा—पा.

कभूतगुणोत्सारणं कृत्वा, स्थूलशरीरं पृथिव्यादिपञ्चभूतबीजं माया-क्षेत्रविनिक्षिप्तं धर्माधर्ममूलं इन्द्रियशाखोपशाखं शब्दादिविषया-लोचनपल्लवं प्रपञ्चकुसुमं सुखदुःखफलं पुरुषविहङ्गोपभोग्यमूर्ध्व-मूलमधश्शाखं वटवृक्षं विभाव्य प्राणायामं कुर्वन्, षण्मात्रेण पूरकपूर्वार्धेन ह्रामित्युच्चारपञ्चकयुक्तेन पत्रपुष्पफलरहितं स्तब्धं विचिन्त्य, पूरकापरार्धेन ह्रीमित्युच्चारचतुष्टययुक्तेन स्निग्धपत्रपुष्प-फलोपेतं विभाव्यैकस्मिन्नेवोद्घातेन द्वादशमात्रेण कुम्भकेन ह्रूमि-त्युच्चारत्रययुक्तेन सव्यपादाङ्गुष्ठेन कालाग्निना शुष्कं दग्धं च विभाव्य रेचकपूर्वार्धेन ह्रैमित्युच्चारद्वययुक्तेन भस्मीभूय दिक्षु विप्रकीर्णं विभाव्य रेचकापरार्धेन ह्रौमित्येकोच्चारयुक्तेन स्फटिक-निर्मलं शुद्धव्योमरूपं चिन्तयित्वाऽमृतेनाप्लावयेत्। एवं देहदाहं कृत्वा यथोक्तसङ्ख्यैरुद्घातैस्तत्तद्गुणोत्सारणपर्यन्तामेव वा, गुणो-त्सारणभावनां विना पृथिव्यादिकं बन्धकत्वान्निवृत्तं भवति इत्यनुसन्धानपूर्वकं तत्तत्स्थानेषु वायुमनोधारणापर्यन्तामेव वा भूतशुद्धिं कुर्यात्। उद्घातशब्देन उद्धन्यतेऽनेनेति व्युत्पत्त्या भूत-गुणानां तदशुद्धेर्वोत्सारणसाधनमुच्यते। तत्तत्कलामन्त्रोच्चारण-पूर्वकं पूरकं कृत्वा सुषुम्नया यावद्द्वादशान्तं प्राणवायोरूर्ध्वप्रवर्तन-रूपं कर्म, तच्च पूरकं कृत्वा कुम्भककाले प्राणवायोरूर्ध्वं प्रेरणं कृत्वा तं प्रतिनिवर्त्य दक्षिणनाड्या तद्रेचनपर्यन्तम्। एवं चैकैक-स्मिन्नुद्घाते पूरकाद्यास्त्रयस्त्रयः प्राणायामा इति पृथिव्यां पञ्चाना-मुद्घातानां पञ्चदश प्राणायामाः सम्पद्यन्ते। जलादिषु द्वादश नव षट् त्रयश्च भवन्ति। एकैकस्मिंश्च रेचकादिरूपे प्राणायामे द्वादश द्वादशमात्राकालास्त्रयः। ततश्चैकैकोद्घातः षट्त्रिंशन्मात्राकालो भवति। यद्वा (धारणार्थं) पूरणार्थं कुम्भकप्राणायाम एव द्वादश-मात्राकालनियमः। पूरकरेचकयोर्यथासंभवं कालो ग्राह्यः। जानु-मण्डलमद्रुतमविलम्बितमेकवारं प्रदक्षिणीकृत्याङ्गुलिस्फोटकालो मात्राकालः। त्रिःप्रदक्षिणीकृत्याङ्गुलिस्फोटकाल इति तु सिद्धान्त-शेखरादिषूक्तम्। अयं च कनिष्ठो मात्राकालः। द्विगुणो मध्यमः। त्रिगुण उत्तमः। इत्थं कालविशेषावच्छिन्नप्राणवायुप्रवर्तनात्मक-मुद्घातमनपेक्ष्य तत्तद्गुणसमसङ्ख्यकलामन्त्रोच्चारणेन तत्तद्गुणोत्सार-णानुसन्धानरूपां वा, एकवारं तत्तत्कलामन्त्रोच्चारणेन तत्तत्कला-

तत्त्वभुवनवर्णपदमन्त्रयुक्तानां पार्थिवमण्डलादीनां स्वात्मानं प्रति प्रतिबन्धकत्वनिवृत्त्यनुसन्धानात्मकपाशच्छेदमात्ररूपां वा भूतशुद्धिं कुर्यात् ॥

पार्थिवादिमण्डलानि च निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीतकलामयानि शरीरे पादादिजान्वादिनाभ्यादिकण्ठादिभ्रूमध्यादि च स्थितानि, हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्राश्रितानि वा शतयोजनपरिमाणमारभ्योत्तरोत्तरदशगुणपरिमाणानि चतुरश्रार्धचन्द्रत्रिकोणषडश्रवृत्तरूपाणि वज्रपद्मद्वयस्वस्तिकषड्विन्द्वेकविन्दुलाञ्छितानि पीतरक्तश्वेतकृष्णधूम्रवर्णानि कठिनद्रवोष्णचलनावकाशस्वभावानि गन्धादिपञ्चचतुस्त्रिद्व्येकगुणानि ब्रह्मविष्णुरुद्रेश्वरसदाशिवाधिष्ठितानि विन्दुयुक्तलकारवकाररेफयकारहकाररूपैः पार्थिवादिवीजैर्युक्तानि भावनीयानि। तत्र निवृत्तिकलायां पृथिवीतत्त्वमेकमष्टोत्तरशतं भुवनानि क्कार एको वर्णः, अष्टाविंशतिपदानि सद्योजातहृदयाख्यौ द्वौ मन्त्रौ। प्रतिष्ठाकलायां जलादिप्रकृत्यन्तानि त्रयोविंशतितत्त्वानि षट्पञ्चाशद्भुवनानि खादिमान्ताश्चतुर्विंशतिवर्णा द्वात्रिंशत्पदानि वामदेवशिरस्समाख्यौ द्वौ मन्त्रौ। विद्याकलायां पुरुषादिमायान्तानि सप्ततत्त्वानि सप्तविंशतिर्भुवनानि यादिसान्ताः सप्त वर्णा एकविंशतिपदानि अघोरशिखाख्यौ द्वौ मन्त्रौ। शान्तिकलायां शुद्धविद्या महेश्वरश्चेति द्वे तत्त्वे अष्टादशभुवनानि हक्षौ वर्णौ द्वादशपदानि, पुरुषकवचाख्यौ द्वौ मन्त्रौ। शान्त्यतीतकलायां सदाशिवः शक्तिश्चेति द्वे तत्त्वे, पञ्चदशभुवनानि, स्वराः षोडश वर्णाः, एकं पदम्, मूलेशानास्त्राख्यास्त्रयो मन्त्राः। एवमेकादशमन्त्रात्मको मन्त्राध्वा। व्योमव्यापी मन्त्रगतचतुर्नवतिपदात्मकः पदाध्वा। अनाश्रितादिद्वाविंशत्युत्तरद्विशतभुवनात्मको भुवनाध्वा। पञ्चाशद्वर्णात्मको वर्णाध्वा। निवृत्त्यादिपञ्चकलात्मकः कलाध्वा। एवं सकलाध्वगर्भाणि पृथिव्यादिमण्डलानि विभावनीयानि। यद्वा संक्षेपेण सर्वाध्वगर्भत्वं विभावनीयम्। तद्यथा— सद्यादिपञ्चमन्त्रात्मको मन्त्राध्वा। जाग्रत्स्वप्नसुषुप्तितुरीयतुरीयातीतरूपपञ्चावस्थात्मकः पदाध्वा। पदादि हृदयादि वा पार्थिवमण्डलादिस्थापनपञ्चकरूपो भुवनाध्वा।

अकारादिवर्णत्रयबिन्दुनादात्मको मूलमन्त्रपञ्चवर्णात्मको वा वर्णाध्वा। पञ्चकलात्मकः कलाध्वेत्येवं वा सर्वाध्वगर्भाणि विभाव्य [1]प्रागुक्तप्रकारेष्वन्यतमेन प्रकारेण शोधनीयानि। सर्वाध्वगर्भत्वं विना प्रागुक्तप्रकारेण संस्थानवर्णस्वभावलाञ्छनबीजयुक्तानि विभाव्य शोधनीयानि॥

एवं पृथिव्यादिप्रविलापन[2]रूपा, तत्तद्गुणक्षेपणेन देहदाहरूपा, देहगतवाह्याभ्यंतरदोषमात्रदाहरूपा, गुणक्षपणं विना केवलदेहदाहरूपा वा, दाहं विना केवलतत्तद्गुणक्षपणरूपा, बन्धकृत्वनिवृत्त्यनुसन्धानात्मकपाशच्छेदमात्ररूपा च भूतशुद्धिः॥

सर्वाप्येषा सोद्घाता निरुद्घाता चेति द्विविधा। तत्तद्गुणक्षपणं च प्रत्येकशोधनरूपं परस्परशोधन[3]मात्रं चेति द्विविधम्। सर्वाध्वगर्भत्वेन संस्थानं च द्विविधम्। भूतचिन्तनमपि सर्वाध्वगर्भत्वेन संस्थानमात्रेण चेति द्विविधम्। सर्वाध्वगर्भत्वचिन्तनं च प्रपञ्चेन संक्षेपेण चेति द्विविधम्। एवमुक्तप्रकारासु भूतशुद्धिषु पूर्वाचारदेशकालाद्यनुसारेण या काचिद्भूतशुद्धिरनुष्ठेया। एवं भूतशुध्यात्मिका देहशुद्धिरुक्ता॥

तत्त्वशुध्यात्मिकां वा देहशुद्धिं कुर्यात् यथा—प्रकृत्यहङ्कारबुद्धिमनश्श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्श - रूपरसगन्धाकाशवायुवह्निसलिलभूतत्त्वरूपमशुद्धमात्मतत्त्वं स्थूलदेहं, मायाकलाविद्यारागकालनियतिपुरुषतत्त्वरूपं शुद्धाशुद्धं विद्यातत्त्वं सूक्ष्मदेहं, शिवशक्तीश्वरसदाशिवशुद्धविद्यातत्त्वरूपं शुद्धं शिवतत्त्वं परदेहं च विभाव्य, स्थूलदेहं सूक्ष्मदेहे तं परदेहे च प्रविलायेत्। उक्तप्रकाराणामन्यतमशोधनानुष्ठानानन्तरं हौं शान्त्यतीतकलायै नम इत्यादिभिर्मन्त्रैः सूक्ष्मपञ्चकलामयस्य सूक्ष्मशरीरस्य सृष्टिं [4]शान्त्यतीतकलामन्त्रैरेव स्थूलपञ्चकलामयस्य स्थूलदेहस्य सृष्टिं च तत्तध्वंसनपक्षे विभाव्य, हां शक्तये वौषडिति शक्तिमण्डलस्रुतामृतधारयाऽऽप्लावयेत्। ततो हृत्कमलकर्णिकायां

---

[1] प्रागुक्तप्रकारेण संस्थानवर्णस्वभावलाञ्छनबीजगात्रयुक्तानि वा विभाव्य शोधनीयानि. [2] न पूर्वतद्गुण-पा. [3] मात्रेण चेति-पा. [4] शान्तिकलामन्त्रैरेव, पञ्चभिः कलामन्त्रैरेव-पा.

हां आधारशक्तये नमः, हां धर्माय नमः, हां ज्ञानाय नमः, हां वैराग्याय नमः, हां ऐश्वार्याय नमः, हां पद्माय नमः, इति मध्याग्नेयादिकोणचतुष्टयमध्येषु षड्विधमासनं विन्यस्य तत्र स्थूलसूक्ष्मदेहात्मिकामविभक्तकरचरणादिरूपां मूर्तिं हां आत्ममूर्तये नमः इति विन्यस्य, हौं विद्यादेहाय नम इत्यष्टत्रिंशत्कलामयं सदाशिवरूपं ध्यात्वा, हां शिवाय नम इति द्वादशान्तस्थपरमशिवसायुज्यं निर्मलं ज्ञानक्रियाशक्तिकं यजमानमूर्तिरूपं जीवात्मानं तत्रावाह्य, हृदयादिस्थानेषु हृदयादिमन्त्रान् विन्यस्य, मूलेन परमीकृत्य, वौपडन्तशक्तिमन्त्रेण द्वादशान्तस्थितशक्तिमण्डलस्रुतबहुलामृतधारयाभिषिञ्चेत्। ततो दण्डमुण्डकलाश्रीकण्ठादिन्यासान् कुर्यात् ॥

तत्रायं क्रमः—शिवासनं अव्यक्तां शिवमूर्तिं च हृदये न्यसेत्। हों ईशानमूर्धाय नम इति समुष्टिकाङ्गुष्ठाग्रेण मूर्ध्नि, हें तत्पुरुषवक्त्राय नम इत्यङ्गुष्ठतर्जनीभ्यां मुखे, हुं अघोरहृदयाय नम इत्यङ्गुष्ठमध्यमाभ्यां हृदये, हिं वामदेवगुह्याय नम इत्यङ्गुष्ठानामिकाभ्यां गुह्ये, हं सद्योजातमूर्तये नम इत्यङ्गुष्ठकनिष्ठिकाभ्यां पादे, हों ईशानायोर्ध्ववक्त्राय नमः, हें तत्पुरुषाय पूर्ववक्त्राय नमः, हुं अघोराय दक्षिणवक्त्राय नमः, हिं वामदेवायोत्तरवक्त्राय नमः, हं सद्योजाताय पश्चिमवक्त्राय नम इत्यूर्ध्वे पूर्वदक्षिणोत्तरपश्चिमवक्त्रस्थानेषु पूर्वोक्तप्रकारेण तत्तदङ्गुलिभिर्न्यसेयुः ॥

एवं दण्डवक्त्रभङ्गिन्यासानन्तरं सशक्तिकाः कला शक्तिरहिता वा वक्ष्यमाणस्थानेषु त्रैवर्णिका न्यसेयुः। तदितरे शक्तिभिरेव न्यसेयुः। यथा हों शशिन्यै नमः, हों अङ्गदायै नमः, हों इष्टदायै नमः, हों मरीच्यै नमः, । हों ज्वालिन्यै नमः, इत्यूर्ध्वपूर्वदक्षिणोत्तरपश्चिममूर्धसु समुष्टिकाङ्गुष्ठाग्रमुद्रया न्यसेत्। हें शान्त्यै नमः, हें विद्यायै नमः, हें प्रतिष्ठायै नमः. हें निवृत्त्यै नमः, इति पूर्वदक्षिणोत्तरपश्चिमवक्त्रेषु अङ्गुष्ठतर्जनीभ्यां न्यसेत् हुं तमायै नमः, हुं मोहायै नमः, हुं क्षुधायै नमः, हुं निद्रायै नमः, हुं मृत्यवे नमः, हुं मायायै नमः, हुं भयायै नमः, हुं तारायै नमः, इत्यङ्गुष्ठमध्यमाभ्यां हृत्कण्ठबाहुद्वयनाभिजठरपृष्ठवक्षस्सु न्यसेत्। हिं रजायै नमः, हिं रक्षायै नमः, हिं रत्यै नमः, हिं पाल्यै नमः, हिं कामायै नमः, हिं संयमायै

नमः, हिं क्रियायै नमः, हिं बुध्यै नमः, हिं कार्यै नमः, हिं धात्र्यै नमः, हिं ब्राह्मण्यै नमः, हिं मोहिन्यै नमः, हिं मनोन्मन्यै नमः, इत्यङ्गुष्ठानामिकाभ्यां मूलाधारगुह्यवृषणोरुद्वयजानुद्वयजङ्घाद्वयस्फिग्द्वयकटिदक्षिणपार्श्ववामपार्श्वेषु विन्यसेत्। हं सिध्यै नमः, [1] (हं ऋध्यै नमः), हं द्युत्यै नमः, हं लक्ष्म्यै नमः, हं मेधायै नमः, हं स्वधायै नमः, हं स्वाहायै नमः, हं धृत्यै नमः, इत्यङ्गुष्ठकनिष्ठिकाभ्यां पादद्वयकरद्वयघ्राणशिरोबाहुद्वयेषु विन्यसेत्। नमस्स्वाहादि [जाति] षट्कयुतमङ्गन्यासं कुर्यात्। यस्यावसरोऽस्ति मतिक्षोभश्च न भवति स श्रीकण्ठादिन्यासषडध्वन्यासादिकमपि कुर्यात्॥

एवं जीवशुद्धिदेहशुद्धिपूर्वकं न्यस्तमन्त्रतनुस्वरूपेण विग्रहेण च शिवरूपतां प्राप्तः शिवार्चायोग्यो भवति। नाशिवः शिवमर्चयेदिति ह्यामनन्ति। एवं जीवदेहशुद्धिकरणाशक्तौ न्यासमात्रं कुर्यात्। न्यासस्यापि कृत्स्नस्य करणाशक्तौ दण्डन्यासमात्रं षडङ्गन्यासमात्रं वा कुर्यात्। तावतैव देहात्मनोः शुध्या शिवरूपतापत्त्या च शिवार्चनयोग्यो भवति॥

## अन्तर्यागक्रमः

एवं कृताङ्गन्यासोऽन्तर्यागं कुर्यात्। तत्रायं क्रमः—[2] अन्तर्हृदयावकाशे दिव्यरत्नमयं शिवार्चनमण्टपं मनसा संकल्प्य तत्र शिवार्चनोपयुक्तानि सर्वाणि द्रव्याणि मनसोपनीय विशोध्य द्वादशान्तस्थितचन्द्रमण्डलस्रवदमृतधारयार्घ्यपात्रादिपूरणं तत्संस्कारं च कृत्वा द्वारपालार्चनं विधाय वक्ष्यमाणप्रकारेण गणेश [3] गुरुपङ्क्त्यनुज्ञाप्रार्थनपूर्वकं माणिक्यवर्णनाभिकन्दसमुत्थितनीलवर्णनालाञ्चित धवलवर्णाष्टदलहृदयकमलकर्णिकाकारसंस्थितकुण्डलिनीशक्तिरूप [4] विन्द्वात्मके पीठे श्रवणाङ्गुष्ठसंयोगाधिगम्यनादरूपं दीपशिखाकारं लिङ्गं विचिन्त्य पीठे वक्ष्यमाणप्रकारेण शक्त्यादिशक्त्यन्तं शिवासनमभ्यर्च्य लिङ्गे शिवमूर्तिं विद्यादेहं

---

[1] इदमधिकं-पा. [2] अन्तरे हृदया–पा. [3] गुरुवन्दनानुज्ञा–पा. [4] जीवात्मके, चिदात्मके–पा.

चाभ्यर्च्य तत्र परमशिवमावाहनादिक्रमेण ध्यात्वाऽन्तस्संस्कारै-रभिपूज्य द्वादशान्तस्रुतबहुलामृतधारयाभिषिच्य [ध्यान] वस्त्रा-भरणादिभिर्वैराग्यचन्दनेन चालंकृत्य अहिंसापुष्पं समर्पयामीत्या-दिप्रकारेण अहिंसेन्द्रियनिग्रहक्षमादयाज्ञानतपस्सत्यभावरूपैरष्टभिः पुष्पैरभ्यर्चयेत्। ततो [1]मनःपात्रे प्राणाग्निमहङ्कारधूमशिखां च [2]परि-कल्प्य धूपं दद्यात्। शिवज्ञानमेव दीपं संकल्प्य दद्यात्। विष-येभ्यः प्रत्याहृतं मनो नैवेद्यमिति भावयित्वा समर्पयेत्। सुषुम्ना-मार्गेण प्राणस्य गमागमे एव जपत्वेन भावयेत्। पार्थिवादिपञ्च-धारणास्थिरीकृतसदाशिवावयवजातध्यानकल्पितैस्तत्तदवयवो---चितैर्भूषणैश्च भूषयेत्। शिवोऽहमिति शिवसाम्यभावनारूपमात्म-निवेदनं च कुर्यात्। यद्वाभिषेकानन्तरं गन्धशब्दस्पर्शरूपरस-तन्मात्राश्चन्दनपुष्पधूपदीपनैवेद्यात्मना समर्पयेत्। तत्रायं क्रमः—मूलमन्त्रोच्चारणपूर्वकं ह्लां [ह्लां] सद्योजाताय शिवाय गन्ध-तन्मात्रात्मकं चन्दनं समर्पयामि। ह्रौं [ह्रौं] ईशानाय शिवाय शब्द-तन्मात्रात्मकं पुष्पं समर्पयामि। हैं तत्पुरुषाय शिवाय स्पर्शतन्मा-त्रात्मकं धूपं समर्पयामि। हूं अघोराय शिवाय रूपतन्मात्रात्मकं दीपं समर्पयामि। ह्रिं वामदेवाय शिवाय रसतन्मात्रात्मकनैवेद्यं समर्पया-मीति। ततो हस्तक्षालनमुखवासदानानन्तरं सत्वरजस्तमो-गुणात्मकं ताम्बूलं समर्पयामीति भावयेत्। ततो नीराजनं परिकल्प्य—

बुद्धिस्थवायुना क्लृप्तं दर्पणं मङ्गलानि च।
मनोवृत्तिर्विचित्रा ते नृत्तरूपेण कल्पिता॥
ध्वनयो गीतरूपेण शब्दवाद्यप्रभेदतः।
सुषुम्ना ध्वजरूपेण प्राणाद्याश्चामरात्मना॥
अहङ्कारो गजत्वेन क्लृप्तो देहो रथात्मना।
मनः प्रग्रहरूपेण बुद्धिः सारथिरूपतः॥
सर्वमन्यन्मया क्लृप्तं तवोपकरणात्मना।

इति सर्वमात्मीयं बुद्धिमनःप्राणादिकं शिवपूजोपकरणत्वेन समर्पयेत्। आवरणपूजामपि वक्ष्यमाणरूपां [3]तत्समये कुर्यात्।

---

[1] मनसि पात्रे प्राणमग्निमहङ्का–पा. [2] संकल्प्य–पा. [3] तत्समर्पणे–पा.

ततः प्रदक्षिणनमस्कारैः शिवं प्रसादाभिमुखं विधाय तदाज्ञयाग्नि-कार्यं कुर्यात् ॥

अग्निकार्यक्रमः

तत्रायं क्रमः—नाभौ त्रिमेखलं कुण्डं तत्राग्निं च स्वतः सिद्धं विभाव्य तमग्निमस्त्रमन्त्रेण प्रज्वाल्य तत्राग्नौ किंचिदङ्गारं क्रव्यादांशत्वेन भावयित्वा तं निरृतिकोणे परित्यज्य कुण्डस्थमग्निं निरीक्षणादिभिः संशोध्य तस्य शिवाग्नित्वसिध्यर्थं रेचकेन वायुना तं चैतन्यात्मना हृदयं नीत्वा तत्रत्येन ज्ञानाग्निना संयोज्य ततः सुषुम्नया द्वादशान्तं नीत्वा तत्र परमशिवेन संयोज्य तत्तेजःपुञ्जपिञ्जरं सूर्यायुतसमप्रभं भावयित्वा तं ज्ञानाग्निरूपं प्रत्यानीय नाभिकुण्डे स्थापयेत्। एवं कृते संस्कारान्तरमनपेक्ष्य शिवाग्निर्भवति। तत्र शिवाग्निं रक्तवर्णं चतुर्वक्त्रं दशभुजं सदाशिवसमानायुधं ध्यात्वा तस्य हृदयकमले आसनमूर्तिविद्यादेहविन्यासपुरस्सरं शिवमावाह्य सुषुम्नास्रुवेण [1]द्वादशान्तं कृत्वामृतधाराज्यं मूलेनाष्टोत्तरशतमष्टाविंशतिवारमष्टवारं वा कृत्वा शाक्तामृतघृतपरिपूर्णनाभिकन्दकशां हृदयकमलात्मकसुषुम्नादण्डां स्रुचं विभाव्य तया हांशक्त्ये वौषडिति पूर्णाहुतिं हुत्वा होमसन्तर्पितं शिवाग्निं [शिवं] नाभिमार्गेण हृत्पद्मपूजिते शिवे संयोज्य अष्टपुष्पिकयाभ्यर्च्य पूजां समर्पयेत्। तदनन्तरं भ्रूमध्ये सर्वावयवसंपूर्णं शुद्धदीपसमाकृतिं च शिवं सकलनिष्कलरूपेण ध्यात्वा पूज्यपूजकभावेन द्विधा स्थितः शिवोऽहमेवेति मनस्समादधीत। इत्यात्मशुद्धिः ॥

अथ स्थानशुद्धिः

तत्प्रकारः—हृदूर्ध्वमुखौ करौ कृत्वा हः अस्त्राय फडिति तालत्रयं कृत्वा चोटिकया दशसु दिक्षु विघ्नानुत्सार्यास्त्रमन्त्रेण ज्वलदग्निवर्णं प्राकारं कृत्वा ततो बहिः हैं कवचाय नम इति दक्षिणतर्जनीभ्रमणेन [2]परिखात्रयं कृत्वा हां शक्तये वौषडिति शाक्तं ज्योतिरूर्ध्वमधश्च (पतितं) विभाव्य महामुद्रां प्रदर्शयेत्। इति विघ्ननिवारणार्थं स्थानशुद्धिः ॥

---

[1] द्वादशान्तस्रुतामृत—पा.   [2] कायिकां—पा.

## अथ द्रव्यशुद्धिः

सर्वाणि वक्ष्यमाणयागोपयोग्यानि द्रव्याणि देववामभागे निवेश्य वस्त्रपूतशुद्धजलसंपूर्णजलपात्रं दक्षिणभागे च निवेश्य आत्मार्चनावरणपूजार्थं गन्धपुष्पादिकं शिवार्थद्रव्येभ्यः पृथङ्निवेश्यार्घ्यपाद्याचमनीयजलानि पूजयेत्। चत्वार्यर्घ्याणि। सामान्यार्घ्यं, विशेषार्घ्यं, निरोधार्घ्यं, पराङ्मुखार्घ्यमिति। द्वारपालावरणदेवतादीनां सामान्यार्घ्यम्, [1]शिवार्घ्यकालेषु विशेषार्घ्यं, शिवस्यैव निरोधनसंस्कारसमये निरोधार्घ्यम्, विसर्जनसमये पराङ्मुखार्घ्यम्। चतुर्णामेतेषामर्घ्याणां चत्वारि पात्राणि दशपलप्रमाणेन वा पञ्चपलप्रमाणेन वा सार्धद्विपलप्रमाणेन वा सुवर्णरजतताम्रान्यतमद्रव्येण वा पञ्चपर्वोन्नतानि पञ्चपर्वविस्तृतानि वृत्ताकाराणि चतुरश्राकाराणि वा बहिरष्टदलपद्माङ्कितानि एकाङ्गुलप्रमाणान्यष्टाङ्गुलचतुर्थांशघनान्युक्तप्रकारादर्धप्रमाणानि तदर्धप्रमाणानि वा ग्राह्याणि। सुवर्णाद्यभावे शुक्तिखड्गशृङ्गशिलादारुनारिकेलकरङ्कादिनिर्मितानि वा नवमृत्पात्ररूपाणि वा पलाशाब्जकदलीदलादिकृतपर्णपुटरूपाणि वार्घ्यपात्राणि ग्राह्याणि। पाद्याचमनपञ्चगव्यपञ्चामृतगन्धधूपदीपपात्रघण्टादीनपि पूर्वोक्तदशपलादिप्रमाणेनैव कर्तव्यानि। तत्र पाद्यपात्रं षडङ्गुलविस्तारं चतुरङ्गुलोत्सेधं चतुरङ्गुलविस्तारोत्सेधपादं चतुरङ्गुलनासिकमेकाङ्गुलोष्ठं तदर्धमानं तदर्धमानं वा कार्यम्। [आचमनपात्रं] पाद्यक्षेपपात्रं द्व्यङ्गुलत्र्यङ्गुलोत्सेधं षोडशाङ्गुलविस्तारं चतुरङ्गुलोत्सेधमष्टाङ्गुलविस्तारपादयुक्तं एकाङ्गुलोष्ठमुक्तप्रकारार्धप्रमाणं तदर्धप्रमाणं वा वृत्तकङ्कणयुक्तपार्श्वद्वयं कर्तव्यम्। आचमनपात्रं द्वादशाङ्गुलोत्सेधविस्तारकुक्षिकं षडङ्गुलविस्तारेण षडङ्गुलोत्सेधेन द्व्यङ्गुलोत्सेधेन वा पादेन युक्तं द्व्यङ्गुलत्र्यङ्गुलोत्सेधकण्ठमेकाङ्गुलोष्ठं त्र्यङ्गुलविस्तार मुखमैच्छिकप्रमाणं मुकुलाकारपिधानसंयुक्तं [2]द्व्यङ्गुलप्रमाणत्रिकं त्रियवप्रमाणरन्ध्रं मूलप्रभृति क्रमापचित[3]परिमाणनासिकायुक्तं तदर्धपरिमाणं (तदर्धपरिमाणं) वा। यद्वा पाद्याचमनपात्रेऽर्घ्यपात्रवदेव

---

[1] विशेषार्घ्यकालेषु—पा. [2] चतुरङ्गुलप्रमाणत्रिवक्त्रयव—पा. [3] प्रमाणं नासि.

वृत्ताकारे कर्तव्ये। आचमनक्षेपपात्रमपि पाद्यक्षेपपात्रवत्कर्तव्यम्। अर्घ्यपाद्याचमनाधारयन्त्रिकास्तु त्रिपदीरूपास्त्रिवक्रपादसंयुक्ताः अष्टाङ्गुलोत्सेधाः पादादूर्ध्वभागे वलयस्याधस्तात् सिंहवक्त्राङ्किताः कर्तव्याः। सुवर्णाद्यभावे पाद्यादिपात्राण्यपि अर्घ्यपात्रवच्छिला-दारुमयपत्रपुटादिरूपाणि ग्राह्याणि। तत्र सामान्यार्घ्य-द्रव्याणि तिलतण्डुलाः। विशेषार्घ्यस्यैलालवङ्गकर्पूरजम्बूजाती-फलमुर[फलोशीर]व्रीहितिला वा। जलक्षीरकुशाग्रतण्डुल[1]सुम-नास्तिलयवासिद्धार्था वा। [2]दर्भादिव्रीहितिलक्षीरनीरसिद्धार्था वा। यवसिद्धार्थव्यतिरिक्तदर्भादयः षड्वा यवसिद्धार्थजल-तिलाश्चत्वारो वा दूर्वाङ्कुरकुङ्कुमकर्पूरास्त्रयो वा द्रव्याणि। निरोधार्घ्यस्य दर्भदूर्वायवतण्डुलसिद्धार्थाः पञ्च द्रव्याणि। त एव तिलसहिताः षट् पराङ्मुखार्घ्यस्य द्रव्याणि। पाद्यस्य दूर्वाचन्दन-सिद्धार्थोशीरह्रीवेरकुङ्कुमानि षट्, तान्येव कुङ्कुमं विना पञ्च वा, दूर्वासिद्धार्थचन्दनोशीराणि चत्वारि वा, ह्रीवेरचन्दनोशीराणि त्रीणि वा द्रव्याणि। आचमनस्य एलालवङ्गकर्पूजातीकोष्ठजम्बूत्रि-फलचन्दनोशीराण्येकादश वा, एलालवङ्गकर्पूरजम्बूशीरजातीफला-नि षड्वा एलालवङ्गकर्पूरह्रीवेरजातीफलानि पञ्च वा, एलालवङ्गकर्पू-राणि त्रीणि वा द्रव्याणि। एलादीनि चार्घ्यादिद्रव्याणि प्रत्येकं उत्तममध्यमादिभावेनाशीतिचत्वारिंशद्विंशतिदशपञ्चव्रीहिपरिमि-तानि देयानि॥

## पाद्यादिपूजा

अथ पाद्यादिपूजाविधानमुच्यते। पाद्याचमनीयसामान्यार्घ्य-विशेषार्घ्य निरोधार्घ्यपराङ्मुखार्घ्यपात्रत्रिपदीर्देवस्य पुरतो वामादि-क्रमेण विन्यस्य, तासां पादेषु ब्रह्मविष्णुरुद्रान्वलयेषु षडाधारशक्तिं चाभ्यर्च्य पाद्यादिपात्राणि अस्त्रमन्त्रेण वौषडन्तहृदयमन्त्रेण वा शुद्धतोयेनापूर्य कवचमन्त्रेण पाद्यादिद्रव्याणि तत्तत्पात्रेषु निक्षिपेत्।

---

[1] कुशुमास्तिल–पा. [2] दर्भदूर्वादि–चा.

द्रव्यालाभे शुद्धोदकपूरणमात्रं कुर्यात्। ततः पाद्यादिपात्राणि मस्तकान्तं[विन्द्वन्तं] समुद्धृत्य विन्दुप्रसृतामृतधारामयेन गङ्गादिसकलतीर्थोदकेन पात्राणि पूर्णानि भावयित्वा यन्त्रिकाणामुपरि स्थापयेत् । अथवा विन्दुस्थानादङ्कुशमुद्रया दिव्यामृतमयं गङ्गादितीर्थमाकृष्य संहारमुद्रया तमादाय वौषडन्तहृदयेनोद्भवमुद्रया यन्त्रिकान्तस्स्थेष्वेव पाद्यादिपात्रेषु विनिक्षिपेत्। ततो विशेषार्घ्यजले शिवासनमूर्तिपञ्चब्रह्मविद्यादेहनेत्रमूलाङ्गानि विन्यस्य मूलेन गन्धपुष्पाक्षतैः संपूज्य ब्रह्माङ्गमूलैरभिमन्त्रयेत् । केवलं वा ब्रह्माङ्गमूलैरभिमन्त्रयेत् । निरोधार्घ्यं ब्रह्मादिभिः, पराङ्मुखार्घ्यमङ्गैः, सामान्यार्घ्यमस्त्रमन्त्रेणाभिमन्त्रयेत् । पाद्याचमनीये ब्रह्मभिरङ्गैरस्त्रेण वा अभिमन्त्रयेत् । ततोऽस्त्रेण दिग्बन्धनं कृत्वा कवचेनावकुण्ठनं कृत्वा वौषडन्तशक्तिमन्त्रेण धेनुमुद्रां प्रदर्श्यामृतीकुर्यात्। पाद्यादिपराङ्मुखार्घ्यपर्यन्तेषु त्रिपदीविन्यासाद्यमृतीकरणान्तं प्रत्येकं [1] काण्डानुसमयेन कुर्यात् ॥

अथ पराङ्मुखार्घ्यसमीपे शङ्खपूजा कर्तव्या। प्रस्थमानिकाः कुडुवजलपूरणीयाः शङ्खाः उत्तममध्यमकनीयांसः। तथा मूलाग्रमध्यस्थूलाः पुंस्त्रीनपुंसकरूपाः। शङ्खस्य मूले वसुन्धरा, वलये सूर्यः, कुक्षौ विष्णुः, पार्श्वे चन्द्रमाः, धारायामघोरः, मुखे सप्ततीर्थानि च वसन्ति। तथापि शङ्खो बहिर्मूलाग्रयोरस्थिवदशुचिरिति तयोर्हेमरत्नादिभूषणं कर्तव्यम्। एवम्भूतं शङ्खं [2] तदर्धशोधितमस्त्रमन्त्रक्षालितं पूर्ववदर्चितायां त्रिपाद्यां विन्यस्य विशेषार्घ्यवत्पूजयित्वात्मानं शिरसि तत्तोयैस्त्रिवारमभिषिञ्चेत्। एवं बहुपात्र[3]संपादनपूजनाशक्तौ निरोधार्घ्यपराङ्मुखार्घ्ये निरोधार्घ्यजलेनैव कर्तव्ये। विशेषार्घ्यजलेनैवार्घ्यपात्रत्रयमपि कार्यम्। एवं पाद्याचमनद्वयमपि विशेषार्घ्यजलेनैव कर्तव्यम्। विशेषार्घ्यस्यापि पात्रान्तराभावे शङ्खजलेनैव पाद्याचमनद्वयमर्घ्यत्रयं च कर्तव्यम्। आवरणदेवताद्यर्थसामान्यार्घ्यमात्रं पात्रान्तरे संस्कार्यम्। एवं

---

[1] एकैकस्मिन् पात्रे संस्कारजातं सर्वं कृत्वा अनन्तरं द्वितीयस्मिन् पात्रे, इत्थं तृतीयादिषु करणं काण्डानुसमयः. [2] तुषशोधितं-पा. [3] बहुपात्रसम्पादनेन पूजाऽशक्तौ इति स्यात्.

पात्रसङ्कोचपक्षे तदीयजलेनोपचारान्तरं क्रियते। [1]तदीयमेव पात्रमादाय तत्संस्कारा: कर्तव्या:। अन्यदीयसंस्कारा अपि वा [2]परिधौ यूपधर्मवदविरुद्धा: कर्तव्या:॥

अथायनविषुवोपरागादिषु कर्तव्यं पञ्चगव्यविधानमुच्यते—

देवस्य पूर्वभागे ईशानदिग्भागे वा हस्तत्रयमात्रं द्विहस्तमात्रं वा चतुरश्रं गोमयेनोपलिप्य चतुर्भि: प्राचीनै: चतुर्भिरुदीचीनै: सूत्रै: प्रत्येकमेकतालप्रमाणानि नव (प्रति) कोष्ठान्युद्धृत्य प्रतिकोष्ठमाढकं तदर्धमानान् व्रीहीन् तदर्धमानान् तण्डुलान् कुशान्वा प्रसार्योत्तराभिमुख: प्रतीचीं दिशं पञ्चसङ्ख्यैरुदगग्रै: प्रागग्रैर्दर्भै: परिस्तीर्य परित: पुष्पैरलङ्कृत्य शिवतत्त्वाय नम:, सदाशिवतत्त्वाय नम:, विद्यातत्त्वाय नम:, पुरुषतत्त्वाय नम:, कालतत्त्वाय नम:, पृथिवीतत्त्वाय नम:, जलतत्त्वाय नम:, वायुतत्त्वाय नम:, प्रकृतितत्त्वाय नम:, इति मध्ये पूर्वदक्षिणोत्तरपश्चिमाग्नेयनैर्ऋतमारुतैशानकोष्ठानि संपूज्य सौवर्णानि कांस्यानि अभिन्नानि कृष्णानि नव मृण्मयानि वा पात्राणि संक्षाल्य नवसु कोष्ठेषु संस्थाप्य सुप्रतिष्ठापात्राय नम:, सुशान्तपात्राय नम:, तेजोमयपात्राय नम:, रत्नोदकपात्राय नम:, अमृतपात्राय नम:, व्यक्तपात्राय नम:, सूर्यपात्राय नम:, संयुक्तपात्राय नम:, अव्यक्तपात्राय नम:, इति प्रागुक्तकोष्ठक्रमेण पात्राणि संपूज्य ताम्रवर्णाया: क्षीरं त्रिकुडवं मध्यपात्रे, शुक्लवर्णाया: दधि द्विकुडवं पूर्वपात्रे, कपिलवर्णाया घृतं कुडवं दक्षिणपात्रे, श्यामवर्णाया मूत्रं प्रस्थमात्रं उत्तरपात्रे, कृष्णवर्णाया गोमयं कुडवप्रमाणं पञ्चकुडवजलसंयुक्तं वस्त्रपूतं पश्चिमपात्रे। कपित्थफलप्रमाणानि तदर्धप्रमाणानि तदर्धप्रमाणानि वा तण्डुलामलकहरिद्रापिष्टान्याग्नेयनैर्ऋतवायव्य-

---

[1] तदीय एव—पा. [2] परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात्. (जै. सू. १२-२-१६) पशुमत्सु चातुर्मास्येषु "परिधौ पशुं नियुञ्जीत" इति श्रूयते। अत्र सिद्धान्ते पशुनियोजनार्थत्वेन श्रुते परिधौ स्वीयधर्माणां मार्जनादीनां यूपधर्माणामविरुद्धानां प्रोक्षणादीनां चानुष्ठानमिति यथा परिधेर्द्विधर्मत्वं, तथा एकस्मिन्नेव तदीयधर्मा अविरुद्धा अन्यदीयधर्माश्च कार्या इति तत्पात्रस्य द्विधर्मत्वम्।

कोणपात्रेषु कुशोदकं, षट्त्रिकृत् पञ्चविंशतिद्वादशतदर्धकृतेन प्रद-क्षिणं दर्भं वायव्यपरिवीतेन हस्तमानेन तालमानेन वा द्व्यङ्गुल-ग्रन्थिना चतुरङ्गुलाग्रेण कूर्चेन संयुक्तं आढकमानकं गन्धदूर्वायुक्तं ईशानकोणपात्रे च हृदयेन प्रक्षिप्य क्षीरादिगोमयान्तानि पञ्च-गव्यानि क्रमात् पञ्चचतुस्त्रिद्व्येकसङ्ख्यैरीशानादिमन्त्रैः शालिपिष्टं हृदयेनामलकं शिरसा हरिद्रां कवचेन कुशोदकं षडङ्गावृत्तब्रह्म-पञ्चकेन चाभिमन्त्रयेत्। तदनन्तरं गोमयं गोमूत्रे, तदुभयं घृते, तत्त्रयं दध्नि, तच्चतुष्टयं क्षीरे च हृदयमन्त्रेण निक्षिप्य तत्रैव कुशोदकं मूलमन्त्रेण क्षिपेत्। पञ्चब्रह्मषडङ्गैरभिमन्त्र्य अस्त्रेण संरक्ष्य कवचेनावकुण्ठ्य धेनुमुद्रां प्रदर्श्य गन्धपुष्पैरभिपूज्यास्त्र-मन्त्रेण धूपदीपौ प्रदर्श्य मूलेनाभिमन्त्रयेत् ॥

## पञ्चामृतविधिः

अथ पञ्चामृतविधानमुच्यते— तत्पूजा पञ्चगव्यपूजायाः प्रागेव कर्तव्या। तत्र पात्रपूजापर्यन्तं पूर्वमध्यादिपश्चिमान्तेषु क्षीरदधि-मधुघृतशर्कराः प्रत्येकं प्रस्थमानाः पादोनप्रस्थमाना वा प्रस्थार्धमाना वा आग्नेयादिकोणेषु यथासम्भवं कदलीपनसाम्रफलानि ईशान-कोणे कुशोदकवद्गन्धोदकं तत्तत्स्थानस्थितानामभिमन्त्रणं पूर्ववत्। [[1]शर्करा गोमयवत्] जलयुक्ता। संयोजनं तु नास्ति। अथवा संयोजनयुक्तपञ्चामृतविधानं कुर्यात्। तस्यायं क्रमः—पूर्ववदुप-क्लृप्ते व्रीहिमये स्थण्डिले पूर्वादिदिक्षु मध्ये च पञ्चकोष्ठानि ईशानदिश्यष्टदलपद्मं च विलिख्य शिवनियतिकालव्यक्ताव्यक्तसु-मङ्गलनामभिः षड्भिर्मध्यादिक्रमेण तानि सम्पूज्य तेषु षट्पात्राण्य-मृतसोमविद्यारत्नोदसुधाप्रीतासुरप्रीतानामभिः संपूज्य पूर्वोक्त-क्रमेण मध्यादिपात्रेषु पञ्चामृतानि ईशानकोणपात्रे नालिकेरोदकं च निक्षिप्य तानि पञ्चगव्यकुशोदकवदभिमन्त्र्य शर्करादीनि गोमयादिवत्क्रमेण क्षीरे संयोज्य कुशोदकवन्नालिकेरोदकं च संयोजयेत्। ततः समृद्धं कदलीफलं मूलाभिमन्त्रितं क्षिप्त्वा मूलेन

[1] लिखितपुस्तके नास्ति.

मर्दयेत्। पञ्चगव्यवद्गन्धपुष्पाद्युपचारांश्च कुर्यात्। पञ्चगव्याद्यर्थमुक्तद्रव्यालाभे दधिक्षीरे गोमूत्रगोमये च परस्परं प्रतिनिधिः। घृतं चतुर्णामपि प्रतिनिधिः। शर्कराया इक्षुरसः। पञ्चगव्याद्युक्तपात्रद्रव्यपरिमाणालाभे गोमयमङ्गुष्ठार्धमानं गोमूत्रघृतदधिक्षीरकुशोदकान्येकद्वित्रिपञ्चैकफलानि ग्राह्याणि। पञ्चामृते क्षीरादीनि देवस्य लिङ्गसेकार्हाणि ग्राह्याणि। गवासुक्तवर्णानामलाभे [1] निर्गदायाः सवत्साया रोगगर्भरहितायाः क्षीरादीनि ग्राह्याणि। क्षीरं वत्सलालाजलास्पृष्टं दध्यमथ्यं गोमयमाकाशस्थं घृतं गोमूत्रं च वस्त्रपूतं ग्राह्यम्॥

## अथ स्नपनोदकविधानम्

शुद्धं जलकुम्भमादाय शिवाल्लब्धानुज्ञः प्रशस्तवर्णगन्धरसनदीतटाकं देवखातादिशुद्धतीर्थं गत्वा तज्जलं ब्रह्माङ्गैरभिमन्त्र्य अस्त्रसंक्षालितं कुम्भं वस्त्रपूतेन तेन हृदयमन्त्रेणापूर्याहृत्य देवस्य दक्षिणभागे स्थापयित्वा एलोशीरलवङ्गचन्दनकर्पूरवारिपाटलोत्पलपद्मकरवीरादिवासितं कुर्यात्। इदं पञ्चगव्यपञ्चामृतस्नपनोदक[2]सन्धानं आत्मशुद्धेर्द्वारपालार्चनाच्च प्रागेव कर्तव्यम्। स्नपनोदकं सूर्यरहिते काले (न) आहर्तव्यम्। पुष्पाहरणमपि पूजकेन स्वयमे[3]वाहर्तव्यम्। अशक्तौ समयालाभे च पुष्पोदकाहरणं गन्धघर्षणनैवेद्यपाकादिकं स्नातैः शुद्धवस्त्रैः पवित्रपाणिभिः परिचारकैः करणीयम्, छिन्ने पिष्ट इत्यादिन्यायसाम्यात्। एवं सकलमपि वक्ष्यमाणोपयोगिद्रव्यजातं संनिधाप्य तस्य शुद्धिं कुर्यात्॥

## द्रव्यशुद्धिः

तत्रायं क्रमः। अङ्गुष्ठानामिकास्पृष्टेन चक्षुषा मूलेन निरीक्ष्यमाणं द्रव्यं स्वच्छात्मकैरर्कवह्निसोमनेत्रैः क्रमाच्छुष्कं दग्धममृताप्लावितं च भावयेत्। ततः शुद्ध्यर्थमस्त्रमन्त्रेण पताकया प्रोक्ष्य

[1] निर्दशायाः, निर्दोषायाः–पा. [2] संविधानम्–पा. [3] मेव कर्तव्यम्–पा.

चिच्छक्त्यभिव्यक्त्यर्थं अस्त्रमन्त्रेणैव मध्याङ्गुल्या ताडयेत् । ततो वौषडन्तकवचेन तत्सर्वं विशेषार्घ्यजलेन शङ्खजलेन वा कुशपुष्पैरभ्युक्षन् ताडितात्पाषाणाद्वह्निस्फुलिङ्गानामिव द्रव्यजाताच्चिदग्निस्फुलिङ्गानामुद्गतिं ध्यायेत् ॥

एवं निरीक्षणादिसंस्कार[1]चतुष्टयं द्रव्यजातमशुद्धेन मायिकरूपेण परित्यक्तं शुद्धचिच्छक्त्यात्मकं [2]शिवयोग्यतार्हं भवति । ततः सद्योजातेन गन्धम्, वामदेवेन वस्त्रं, अघोरेणाभरणम्, तत्पुरुषेण नैवेद्यम्, ईशानेन पुष्पम्, हृदयमन्त्रेणान्यानि शिवार्थद्रव्याण्यावरणपूजाद्रव्याणि चाभिमन्त्रयेत् । ततः सर्वं द्रव्यजातमस्त्रेण संरक्ष्य कवचेनावकुण्ठ्य वौषडन्तशक्तिमन्त्रेण धेनुमुद्रयामृतीकृत्य शिवार्थं कल्पितमेतत्सर्वं शिवात्मकमेवेति भावयन् गन्धपुष्पधूपदीपैः हृदयास्त्रमन्त्राभ्यां पूजयेत् । ततः स्वशिरस्यर्घ्यजलबिन्दुं अस्त्रेण निक्षिप्य स्वासने शिवासनाय नम इति पुष्पं दत्वा स्वदेहे शिवमूर्तिं विन्यस्य फाले चन्दनतिलकं विधाय स्वशिरसि पुष्पं स्वाहान्तमूलेन निक्षिप्य स्वशिरस्येवार्घ्यं च दद्यात् । इत्थमात्मनि पशुबुद्धिं त्यक्त्वा शिववन्निर्मलज्ञानक्रियः शुद्धोऽहमिति भावयन्नेवात्मानं पूजयेत् । यद्यप्यात्मनः शुद्धिः प्रागभिहिता तथापि पूजाकर्तृकतया द्रव्यान्तरवत्पूजोपकरणत्वेन प्रविष्टस्य तस्य द्रव्यान्तरवदेव गन्धादिभिः पूजयेदिति तदन्ता द्रव्यशुद्धिः ॥

## मन्त्रशुद्धिः

अथ मन्त्राणां दन्तताल्वोष्ठव्यापारजन्यमायिकाशुचिरूपनिर्हरणार्थं ऐश्वर्याधिकारिमलतिरोहितफलप्रदानासमर्थानां तेषां सामर्थ्योन्मीलनार्थं च शुद्धिः कर्तव्या । तत्प्रकार उच्यते—हृद्यञ्जलिं बध्वा बिन्द्वन्त ब्रह्मरन्ध्रान्त शिखान्तं ह्रस्वदीर्घप्लुतप्रणवादिनमोऽन्त[3]तयया क्रमेण त्रिवारं शनैर्मूलमन्त्रोच्चारणं कुर्यात् । ततो ब्रह्माङ्गादीनामपि तथैवोच्चारणं कुर्यात् ।

---

[1] चतुष्टयं द्रव्यजातं शुद्धेन—पा. [2] शिवभोग्यतार्हं—पा. [3] नमोऽन्तेनाजपामन्त्रेण—पा.

इत्थं मन्त्रशुद्धिं विधाय तदनन्तरं परिवारदेवतासद्भावे तदर्चनं कुर्यात्। कथं परिवारदेवतासद्भावः सशक्तिककेवलपूजने? इत्थं सूक्ष्मोक्तानि शुद्धकेवलमिश्राख्यान्यशक्तिकसशक्तिकसौ–रादिचन्डान्ताशिवपूजनान्यंशुमदुक्तेन केवलसहजमिश्रभेदेन प्रत्येकं त्रिविधानि। अंशुमति—केवलं नाम परिवारदेवतारहित-लिङ्गपूजनम्। सहजं नाम वृषभगणेशकुमारपार्वतीरूपपरिवार-चतुष्टयसहितलिङ्गपूजनम्। मिश्रं नाम महेश्वरनृत्तमूर्तिदक्षिणामूर्त्यादिभिरपि सहितस्य लिङ्गस्य पूजनम्। एवं केवलशुद्धं, सहज-शुद्धं, मिश्रशुद्धं, केवलकेवलं, सहजकेवलं मिश्रकेवलं, केवलमिश्रं, सहजमिश्रं, मिश्रमिश्रं, चेति नवविधानि पूजनानि भवन्ति। तत्र शिवपूजारम्भात्प्राक् सूर्यपूजां तदनन्तरं चण्डपूजां च विहाय लिङ्गे शक्तिं विना केवलं शिवमावाह्य परिवारदेवतारहितस्य तस्य पूजनं केवलशुद्धम्। परिवारचतुष्टयसाहित्येन प्रागुक्तपूजनं सहजशुद्धम्। महेश्वरादिभिरपि सह प्रागुक्तपूजनं मिश्रशुद्धम्। आद्यन्तयोः सूर्यचण्डपूजां विहाय लिङ्गे सशक्तिकं शिवमावाह्य परिवारार्चनं विना तत्पूजनं केवलकेवलम्। उक्तपूजनमेव परिवारचतुष्टयार्चन-सहितं सहजकेवलम्। महेश्वराद्यर्चाभिरपि सहितं मिश्रकेव-लम्। आद्यन्तयोः सूर्यचण्डपूजासहितं सशक्तिकस्याशक्तिकस्य वा परिवारदेवतारहितस्य लिङ्गस्य पूजनं केवलमिश्रम्। तदेव परिवारचतुष्टयार्चनसहितं सहजमिश्रम्। महेश्वराद्यर्चनसहितं मिश्रमिश्रमिति। एवं च केवलकेवले परिवाराभावेऽपि सहजकेवले मिश्रकेवले च परिवारसद्भावान्मन्त्रशुध्यनन्तरं केवलकेवलेऽपि परिवारार्चनकथनं युक्तमेव। तत्र वृषभं देवस्य पूर्वभागे पश्चिमा-भिमुखमर्चयेत्। गणेशकुमारपार्वतीः पूर्वाभिमुखतया दक्षिण-पश्चिमोत्तरदिक्ष्वर्चयेत्। पार्वत्या दुर्गारूपतयार्चने दक्षिणामुखत्वे-नार्चयेत्। पौराणिकास्तु सूर्यगणेशविष्णुदुर्गारूपां परिवारदेवता-चतुष्टयीमाहुः। वृषभादिचतुष्टयेऽपि आरोग्यादिफलकामनायां परिवारदेवतामध्ये सूर्यादिपूजनमपि कर्तव्यमेव। वृषभस्य वामभागे सूर्यः देवस्य दक्षिणभागे दक्षिणामूर्तिः, पश्चिमभागे स्कन्दस्य वामे विष्णोः उत्तरभागे देव्याः प्राग्भागे नृत्तमूर्तिः। एवमन्येषामपि कामनयार्चनीयानामागमोक्तानि स्थानानि द्रष्टव्यानि॥

## अथ लिङ्गशुद्धिः

[1] गर्भगृहे स्थितं देवस्य पेटकमुद्धाट्य तदग्रे स्थितं चतुर्वक्त्रं त्रिणेत्रं वराभयच्छत्रचामरकरं भीमरुद्रमभ्यर्च्य, "निशाचरान्तकृद्देव देवस्य यजनार्थकम् । शुद्धद्वारस्य सव्ये तु गच्छ त्वं हि प्रसीद मे" इति संप्रार्थ्य [2] पेटिकामध्यस्थितं देवं "ओं नमो देवदेवेश सर्वलोकैकनायक । उत्तिष्ठ स्नानकर्मार्थमात्मरक्षार्थमेव च ॥" इति संप्रार्थ्य, लिङ्गं हस्ताभ्यां सङ्गृह्य वस्त्रं विसृज्य प्रागेव षड्डुत्थासने नार्चितायां स्नानवेद्यां सुवर्णरजतताम्रकांस्यत्रपुसीसक्षीरिवृक्षान्यतमनिर्मितायां विकसत्पद्मजातीकरवीरकर्णिकारजगतीपद्मवाजिनयुक्तायां वृत्ताकारायां मध्योन्नतायामुपरि प्रसारितवस्त्रायां विन्यस्य, लिङ्गे पूर्वेद्युरार्चितां पूजां हृदयमन्त्रेण संपूज्य, शिरसि ईशानादिक्रमेण स्वाहान्तमूलेन सामान्यार्घ्यजलेनार्घ्यं दत्वा, धूपदीपौ प्रदर्श्य, अङ्गुष्ठादिकनिष्ठान्तैरीशानादिपञ्चकं विन्यस्य, कनिष्ठिकानामिकामध्ये पुष्पं सङ्गृह्याङ्गुष्ठतर्जनीभ्यां लिङ्गमस्तकात्पूजां हृदयेनावरोप्य, तत्पुष्पं लिङ्गमूर्ध्नि विन्यस्य निर्माल्यमीशानदिशि हृदयेन शुद्धपात्रे निधायास्त्रेण लिङ्गं पाशुपतास्त्रेण पीठं प्रक्षाल्य सामान्यार्घ्यजलेन हृदाभिषिञ्चेत् । एवं कृते पूर्वपूजासमाप्तौ लिङ्गपीठविन्यस्तमन्त्रोपसंहारानन्तरं लिङ्गपीठयोरासक्ताः पूजकस्य भुक्तिमुक्तिप्रतिबन्धकविघ्ना निरस्ता भवन्ति । लिङ्गं च हृदयाम्बुस्नपनेन शुद्धं पुनर्मन्त्रविन्यासयोग्यं भवति । इति लिङ्गशुद्धिः ॥

## अन्नाभिषेचनम्

ततः शिवशक्तिभ्यां नम इति लिङ्गमुद्रां प्रदर्श्य आसनमूर्तिं मूलैरष्टपुष्पिकया वा संपूज्य धूपदीपौ प्रदर्श्य सुवर्णरजतताम्रमयशङ्खशुक्तिगोशृङ्गान्यतमपात्रेण चतुरङ्गुलदीर्घया गोशृङ्गाग्रप्रमाणया वा धारयाभिषिच्य, हस्तयन्त्रोद्भवतैलेन गोघृतेन वाभ्यज्य, पिष्टचूर्णादिभिर्वाभ्युक्ष्य कोष्णतोयेनाभिषिच्य शिरसि पुष्पमारोप्य,

[1] वक्षस्स्थलस्थितां शिवलिङ्गस्य सज्जिकामुद्धाट्य—मु. पा. [2] सज्जिका—मु. पा.

पञ्चगव्यं प्रत्येकपञ्चामृतफलरससंयुक्तपञ्चामृतैरन्तरान्तरा शिरः-शिखामन्त्रैः पुष्पधूपदीपसमर्पणपूर्वकमस्त्रेण घण्टां ताडयन्नभिषिञ्चेत्। [1] नानासुगन्धद्रव्यमीलितत्वक्पनस[1]नालिकेरखण्डसत्वग्दाडिमबीजपूरलिकुचनारङ्गचूतकदलीफलोपेतमुदकम्, यवनीवारव्रीहिमुद्गगुडसिद्धार्थसौगन्धिकहेमशालिबीजसहितमुदकं वीजोदकं। तेनाभिषिच्य मूलबीजेन गन्धपुष्पधूपदीपैरर्चयेत्। स्फटिकमुक्ताफलमाणिक्यविद्रुमगोमेधपुष्यरागगारुत्मतेन्द्रनीलसहितमुदकं रत्नोदकम्। तेनाभिषिच्य वर्णमन्त्रेण गन्धादिभिरभिषिञ्चेत्। चन्दनागरुकस्तूरीकुङ्कुमकर्पूरमनश्शिलैलाकुष्ठतक्कोललामञ्जोशीरचम्पकमुकुलचूर्णसहितमुदकं गन्धोदकम्। तेनाभिषिच्य गन्धपुष्पधूपदीपनैवेद्यानि नाममन्त्रेण समर्पयेत्। चम्पकमल्लिकाकेतकीपाटलकुन्दपुन्नागनन्द्यावर्तश्रियावर्तजातीमन्दारकरवीरपद्मनीलोत्पलगिरिपुष्पयुक्तं ह्रीबेरदमनकादिमिश्रितमुदकं पुष्पोदकम्। तेनाभिषिच्य शिवमन्त्रेण गन्धपुष्पधूपदीपादीन् दद्यात्। ततो नाममन्त्रं समुच्चरन् शुद्धेनान्नेन शनैश्शनैरभिषिच्य तदन्नं लिङ्गमभितः स्थितं लिङ्गाकृतिं कृत्वा गन्धपुष्पधूपदीपपायसताम्बूलानि दत्वा तदन्नं प्रक्षाल्य लिङ्गमूर्ध्नि मूलबीजं न्यस्य गन्धपुष्पधूपदीपान् दत्वा ब्रह्ममन्त्रैरालभ्य धेनुमुद्रां बध्नीयात्। इदमन्नाभिषेचनमपमृत्युनिवारकमायुरारोग्यराज्याभिवृद्धिदं सकलवशीकरणं सर्वशान्तिकरं च ॥

ततो जलार्चनं कुर्यात्। निरीक्षणादिसंस्कारवता शुद्धजलेन हेमरजतताम्रयज्ञवृक्षजान्यतमपात्रं प्रपूर्य (तत्पात्रं करपीठे विन्यस्य तन्मध्ये प्राण) लिङ्गं संस्थाप्य दूर्वातिलाक्षतान् दत्वा गन्धपुष्पधूपदीपैरर्चयेत्। इदं जलार्चनम्। ततः समुद्धृत्य संमृज्य [2]पूर्ववत्करपीठरूपस्थानवेद्यां विन्यसेत्। जलाभिषेकेण कल्पकोटि[2]सहस्रार्जितं पापं नश्यति। मासं घृताभिषेकेण त्रिसप्तकुलोपेतस्य शिवपदप्राप्तिर्भवति। करयन्त्रोद्भवतिलतैलाभिषेकेण शिवपद-

---

[1] एवं फलोदकादिभिः सिञ्चेत्। तत्र फलोदकं नाम सुगन्धि जलम्, बिल्वपनस–च. पा. [2] पूर्ववत्स्नाननैवेद्यं विन्यस्य नालिकेरेक्षुरसादिभिरपि यथासंभवमभिषिञ्चेत्। शिवस्य घृताभ्यञ्जेन वर्षकोटि इति चन्द्रिकापाठः.

प्राप्तिर्भवति। क्षीराभिषेकेणायुतसालङ्कारगोदानफलप्राप्तिर्भवति। दध्यभिषेकेण सर्वपापक्षयपूर्वकं शिवलोकप्राप्तिर्भवति। मधुस्नपनेन वह्निलोकप्राप्तिर्भवति। इक्षुरसस्नपनेन विद्याधरलोकप्राप्तिर्भवति। कर्पूरागरुतोयेन शिवपदप्राप्तिः। गन्धतोयेन गन्धर्वलोकस्य, पुष्पोदकेन सूर्यलोकस्य, हेमोदकेन कुबेरलोकस्य, मुक्तोदकेनेन्द्र-लोकस्य, कुशोदकेन ब्रह्मलोकस्य प्राप्तिरित्यादि द्रष्टव्यम्। तत्त-द्रव्यालाभे वस्त्रपूतेन शुद्धतोयेनाभिषिञ्चेत्। तेनापि सर्वकाम-समृद्धवरुणलोकप्राप्तिरुक्ता॥

## धाराभिषेचनम्

ततो धाराभिषेचनं कुर्यात्। [1]तच्चात्मार्थपूजातत्त्वाद्द्वादशा-ङ्गुलविस्तारं एकाङ्गुलोत्सेधं यवत्रयघनमुत्तमम्। सप्ताङ्गुलविस्तार-मर्धाङ्गुलोत्सेधं यवद्वयघनं मध्यमम्। पञ्चाङ्गुलविस्तारं पादाङ्गुलो-त्सेधं यवमात्रघनमधमम्। तत्सुवर्णेन रजतेन ताम्रेण वा चतुरश्रं वृत्तं वा कर्तव्यम्। चतुरश्रं चेन्नव कोष्ठानि विलिख्य मध्य-कोष्ठस्य मध्ये रन्ध्रमेकं परितोऽष्टौ मध्यकोष्ठस्यैव नवरेखायां महादिक्षु चत्वारि पूर्वादिकोष्ठेषु प्रत्येकं द्वादशद्वादशरन्ध्राणि चेत्येवमुत्तमपात्रस्यैकाधिकानि अष्टोत्तरशतं रन्ध्राणि कुर्यात्। [2](मध्यकोष्ठस्य मध्ये रन्ध्रमेकं परितोऽष्टौ पूर्वादिकोष्ठेषु पञ्च पञ्च चेत्येवं मध्यमपात्रस्यैकोनानि पञ्चाशद्रन्ध्राणि कुर्यात्।) मध्य-कोष्ठस्य मध्य एकम्, पूर्वादिकोष्ठेषु त्रीणि त्रीणि रन्ध्राणीत्येवं मध्यपात्रस्य पञ्चविंशतिरन्ध्राणि कुर्यात्। वृत्तं चेदष्टदळपद्मं विलिख्य कर्णिकाया मध्ये परितश्च नवरन्ध्राणि, प्रतिदळं द्वादश द्वादश रन्ध्राणि दलेभ्यो बहिर्वृत्ते महादिक्षु चत्वारि चोत्तमपात्रस्य कुर्यात्। इतरपात्रयोरष्टदलपद्मे चतुरश्रवद्रन्ध्राणि द्रष्टव्यानि॥

एवम्भूतं पात्रं देवस्योपरि हस्तधृतं कृत्वा [3]शुद्धजलेनापूर्य हस्तेन पात्रं धारयन् मूलेन धाराभिरभिषिञ्चेत्। एवमभिषेका-

---

[1] तच्चात्मार्थपूजायां द्वादशाङ्गुल-पा. [2] इदमधिकम्. [3] शङ्खजलेन-पा.

र्थानि प्राक्संस्कृतपञ्चगव्यादिव्यतिरिक्तानि तैलादीनि अस्त्रेण संप्रोक्ष्य कवचेनावकुण्ठ्य अस्त्रेण संरक्ष्य हृदयबीजेनाभिषेचने विनियोजयेत्। एवं प्रपञ्चेनाभिषेकं कर्तुमशक्तः शुद्धजलेनाभिषेचयेत्। ततो मूलमन्त्रेण पुष्पं दत्वा मन्त्रान्नं निवेद्य शुद्धमृदुवाससा शनैः संमृज्य (पद्मपीठे) करकमले स्थापयेत्। तत उत्थाय (उत्थित इव) मनसा शिवं प्रदक्षिणीकृत्य निरृतिकोणस्थितवास्त्वधिपतिब्रह्मस्थानादुत्तरभागरूपं शिवमन्दिरस्य वायुकोणं गत्वा तत्र श्यामवर्णं दण्डाक्षसूत्रपाशाङ्कुशान् करैः पुष्करेण वीजपूरं च धारयन्तं दक्षिणाभिमुखमुपविष्टं गणपतिमावाहनादि सर्वोपचारैः संपूज्य "शिवार्चनं गणेशान निर्विघ्नं कुरु मे सदा" इति प्रार्थयेत्। ततः प्राग्भागे च [1]शिवपीठकस्योत्तरदिशारूपे श्रीफलकमलाभयधारिणीं त्रिणेत्रां शिवशक्तिरूपां दक्षिणामुखोपविष्टां महालक्ष्मीं तथैव संपूज्य "मातः शिवार्चनद्रव्यसमृद्धिं कुरु मे सदा" इति प्रार्थयेत्। ततः प्राग्भागे शिवमन्दिरस्येशानकोणरूपे सदाशिवानन्तश्रीकण्ठाम्बिकागुहविष्णुधातृरूपान् प्रसन्नवदनान् योगपट्टधरान् व्याख्यामुद्राक्षसूत्रविराजितकरद्वयान् गौरवर्णान् दक्षिणामुखानुपविष्टान् सप्तगुरून् वा शिवादिस्वरूपगुरुपर्यन्तान् सर्वान् गुरून् वा तथैव सर्वोपचारैः संपूज्य "शिवादिगुरवो मह्यमनुज्ञां दातुमर्हथ। शिवार्चनं करिष्येऽहं युष्मद्दर्शितमार्गतः॥" इति प्रार्थयेत्। गुरुस्थाने श्रीगुरु[2]पादुकाभ्यां नम इति गुरुपादुके वा पूजयित्वा, गणपतिमहालक्ष्मीगुरुपादुकानां पूजानन्तरं सर्वान् प्रणम्य क्षितितलनिहितनिश्चलजानुः बद्धाञ्जलिः "गणनाथाम्बिके स्वामिपादुके मां जगद्गुरो। यजन्तमनुजानीत यथासंपन्नकारकम्॥" इति युगपत्प्रार्थयेत्॥

अथ तेभ्यः सकाशात् "पुत्र शिवं यजस्व" त्यनुज्ञानलाभं भावयित्वा, देवस्याग्नेयकोणे दक्षिणभागे वा रुचिराद्यासने स्थितः स्वेष्टफलाभिसन्धिपूर्वकं "यथाशक्ति शिवार्चनं करिष्ये" इति सङ्कल्प्य, पूजामारभेत॥

---

[1] शिवमेरीकस्य, शिवखेटकस्य–पा. [2] पादकमलाभ्यां–मु. पा.

तत्र प्रथमं [1]शिवार्चनम् । तत्र कन्दनालग्रन्थिदलकेसरकर्णिकाविभक्तकमलरूपं क्षित्यादिशुद्धविद्यन्तद्वात्रिंशत्तत्त्वपर्यन्तोच्छ्रायम्, उपरि स्थितया मूर्त्या सह निवृत्त्यादि शान्तिकलापर्यन्तोच्छ्रायम् । तदुपरि शान्त्यतीतकलाप्रमाणो विद्यादेहः । तत्स्वरूपपरिज्ञानार्थं निवृत्त्यादिकलाप्रमाणं तदन्तर्गततत्त्वस्वरूपं च विविच्यते—निवृत्तिकला शतकोटियोजनप्रमाणब्रह्माण्डरूपा। तत्रैकं पृथिवीतत्त्वम्। तदुपरि सहस्रकोटियोजनप्रमाणा प्रतिष्ठाकला । तत्र जलादिभूतचतुष्टयगन्धादितन्मात्रपञ्चक[2][ज्ञानेन्द्रियपञ्चक]कर्मेन्द्रियपञ्चकमनोऽहङ्कारबुद्धिप्रकृतिरूपाणि त्रयोविंशतितत्त्वानि । तदुपरि अयुतकोटियोजनप्रमाणा विद्याकला। तत्र पुरुषरागनियतिकलाविद्याकालमायारूपाणि सप्ततत्त्वानि। तदुपरि लक्षकोटियोजनप्रमाणा शान्तिकला। तत्र शुद्धविद्या महेश्वरश्चेति द्वे तत्त्वे। तदुपरि दशलक्षकोटियोजनप्रमाणा शान्त्यतीतकला। तत्र सदाशिवः शक्तिश्चेति द्वे तत्त्वे। तदुपर्यप्रमेयं शिवतत्त्वं निवृत्तिकलात्मकं पृथिवीतत्त्वं यावत्कन्दं, प्रतिष्ठाविद्याकलान्तर्गतानि [3]एकोनत्रिंशत्तत्त्वानि यावन्नालम् । जलादिकालान्ततत्त्वेषु स्थितानि पञ्चसप्ततिभुवनानि कण्टकाः। तत्तद्भुवनान्तर्गतप्राणिनां बुद्धिधर्माः [4]पञ्चाशद्भावाः नालान्तर्गतसूत्राणि। विद्यायामेव कालस्योपरिस्थितं मायातत्त्वं पद्मनालग्रन्थिः । शान्तिकलायां स्थितं शुद्धविद्यातत्त्वदलकेसरकर्णिकात्मकं पद्मम्। शुद्धविद्याया उपरि स्थितं महेश्वरतत्त्वं यावच्छिवस्य सूक्ष्ममूर्तिः । शान्त्यतीतकलायां स्थितं सदाशिवशक्तितत्त्वद्वयं यावद्विद्यादेहः । नाले स्थितानि भुवनानि च [5]कला(मनो)वायुगगनाहङ्कारबुद्धिप्रकृतिषु प्रत्येकमष्टावष्टौ भुवनानीति षट्पञ्चाशत् पुरुषे षट् रागे पञ्च नियतौ द्वे कलायां द्वे विद्यायां द्वे काले द्वे इति पुरुषादिकालान्तेषु भुवनान्येकोनविंशतिरित्येवं पञ्चसप्ततिभुवनानि कण्टकाः। तमो मोह महामोहतामिस्रान्धतामिस्ररूपाः पञ्च विपर्ययाः। ऊहः शब्दोऽ-

---

[1] शिवासनार्चनमिति स्यात्. [2] ज्ञानेन्द्रियपञ्चकं विना त्रयोविंशतिसङ्ख्यापर्याप्तिर्नस्यात्. [3] मायातत्त्वं विना. [4] पञ्चाशद्भुवननाल–पा. [5] जलानलवायु–पा.

ध्ययनं दुःखत्रयविघाताः सुहृत्प्राप्तिर्दानं चाष्टौ सिद्धयः । आध्यात्मिक्यः प्रकृत्युपादानकालभाग्याख्याश्चतस्रः, विषयोपरमकृता बाह्याः पञ्च चेति नव तुष्टयः । अन्धत्वमूकत्वादय एकादशेन्द्रियवधाः । अनूहादयः सप्तदश वधाः प्रागुक्तसिद्धिबुद्धिवधाश्चेति अष्टाविंशतिरक्तयः ॥ इति पञ्चाशद्भावना नालसूत्राणि ॥

अत्र कन्दनालादियोजनप्रमाणविषये मतान्तरं प्रदर्श्यते । निवृत्तिकलात्मकं पृथिवीतत्त्वं पूर्ववच्छतकोटियोजनमेव । पृथिवीतत्त्वाद्दशगुणोऽवायुः, वायोर्दशगुणं व्योम, ततो दशगुणोऽहङ्कारः, अहङ्काराद्दशगुणा बुद्धिः, बुद्धेर्दशगुणं गुणतत्त्वम् । एवं गुणतत्त्वपर्यन्तं दशसङ्ख्यया वृद्धिः । गुणतत्त्वाच्छतगुणा प्रकृतिः । प्रकृतेः शतगुणो रागः । रागाच्छतगुणा नियतिः । नियतेः शतगुणा विद्या । ततः शतगुणा कला । ततः शतगुणः कालः । ततः शतगुणा माया । शुद्धविद्येश्वरसदाशिवानां सहस्रसङ्ख्यया वृद्धिः । मायायाः सहस्रगुणा शुद्धिविद्या । शुद्धविद्यायाः सहस्र गुण ईश्वरः । ईश्वरात्सहस्रगुणः सदाशिव इति । ततो लक्षसङ्ख्यया वृद्धिः । सदाशिवाल्लक्षगुणा शक्तिरिति । ततः शिवतत्त्वमप्रमेयम् । [1]इदं च महत्तत्त्वप्रकृति पूर्वगुणतत्त्वमङ्गीकृत्य प्रकृतेरन्तरं पुरुषमङ्गीकृत्य च प्रवृत्तम् । तथा चाहुः—

क्ष्मातत्त्वं शतकोटियोजनमपः प्रारभ्य गौणात्मकं
पङ्क्त्या तद्गुणानात्तथा प्रकृतितो मायावसानं शतात् ।
साहस्राच्च सदाशिवावधि ततः शक्त्यन्तकं लक्षतो
[2]व्याप्यूर्ध्वं च सदाशिवोऽप्यमेयविभवो बिन्दोरधिष्ठायकः ॥

इति ।

एवं सति नालः कियद्योजनसङ्ख्यो जात इति चेदसङ्ख्ययोजन एव । तथापि किंचित्प्रकारमारोप्य योजनसङ्ख्या प्रदर्श्यते । एकत्वमारभ्योत्तरोत्तरं दशगुण वृद्धौ क्रियमाणायां विंशतितमं स्थानं परार्धसङ्ख्या । सा सर्वा॑तमसङ्ख्या । विंशतेश्च स्थानानामेतानि नामानि—एकं, दश, शतं, सहस्रं, अयुतं, लक्षं, प्रयुतं,

---

[1]इदं च मत प्रकृतेः पूर्वं गुणतत्त्वमङ्गीकृत्य प्रकृतेरनन्तरं पुरुषतत्त्वमङ्गीकृत्य च प्रवृत्तम् । [2]तस्योर्ध्वं स शिवोऽप्यमेय.

कोटिः, अर्बुदं, पद्मं, खर्वं, निखर्वं, वृन्दं, महापद्मं, शङ्खः, महाशङ्खः, महासमुद्रः, अन्तिमः, मध्यं, परार्ध इति॥

तथा चाहुः—

एकं पङ्क्ति शतं सहस्रमयुतं लक्षं प्रपूर्वायुतं
कोटिश्चार्बुदकं च पद्मकमथो खर्वं निखर्वं तथा।
वृन्दं चैव महासरोजमपरः शङ्खः समुद्रोऽन्तिमो
मध्यं चैव परार्धसंज्ञकमिमां सङ्ख्यां विदुः पण्डिताः॥ इति॥

एवं च शतकोटिसङ्ख्यामेकस्थाने निवेश्य जलतत्त्वादीनां सङ्ख्या क्रियते। शतकोटिर्नाम पद्मसङ्ख्या। ततश्च पद्मयोजनं पृथिवीतत्त्वम्, एकयोजनं जलतत्त्वम, दशयोजनं तेजस्तत्त्वं, शतयोजनं वायुतत्त्वं, सहस्रयोजनं गगनतत्त्वं, अयुतयोजनोऽहङ्कारः, लक्षयोजना बुद्धिः, प्रयुतयोजनं गुणतत्त्वं, कोटियोजनं ततः-परं शतसङ्ख्यया वर्धनीयत्वा[1]देकान्तनिरतशतसङ्ख्या ग्राह्या। यथा—प्रकृतिः पद्मयोजना, रागो निखर्वयोजनः, महाविद्या महाशङ्खयोजना, कला महासमुद्रयोजना, कालः परार्ध-योजन इति। एवं च जलादिकलान्ततत्त्वसमुदायरूपो नालो दश-शतसहस्रायुत लक्षप्रयुतकोटिपद्मनिखर्व महापद्म महाशङ्ख महा-समुद्र परार्धाख्यत्रयोदशसङ्ख्यासमुदायसङ्ख्येययोजनपरिमितो भवति। पद्मसङ्ख्यायामेकत्वरूपतामनारोप्य परार्धाधिकसङ्ख्या-सद्भावमारोप्य गणने तु नालः खर्वनिखर्व वृन्द महापद्म शङ्ख महा-शङ्ख समुद्र मध्य दशगुणितपरार्ध सहस्रगुणितपरार्ध कोटिगुणित-परार्ध लक्षगुणितपरार्ध रूपत्रयोदशसङ्ख्यासमुदायसङ्ख्येय-योजनोच्छ्रायो भवति। नालान्तर्गतानां (तद्गतानामपि भुवनाना-मपि) भुवनाधाराणामपि गन्धादिपञ्चककर्मेन्द्रियपञ्चकज्ञानेन्द्रिय-पञ्चकमनसां पृथग्योजनसङ्ख्या नास्तीति मताश्रयणात् तेषु योजनसङ्ख्या न गुणिता॥

अथ तेषामपि भुवनाधारतया पृथग्योजनसङ्ख्यामाश्रित्य मतान्तरं प्रदर्श्यते। पद्मयोजनप्रमाणाद्भूतत्त्वाज्जलादिमनोन्तानां

---

[1] एकान्तरितेति स्यात्.

विंशतेस्तत्त्वानामुत्तरोत्तरं दशगुणा वृद्धिः, अहङ्कारबुध्योः शतगुणा, प्रकृतेः सहस्रगुणा, पुरुषस्यायुतगुणा, नियतिकालयोर्लक्षगुणा, रागविद्याकलानां दशलक्षगुणा, मायायास्ततः कोटिगुणा, शुद्धविद्याया दशकोटिगुणा, ईश्वरस्य शतकोटिगुणा, सदाशिवस्य सहस्रकोटिगुणा, शक्तेरयुतकोटिगुणा, शिवतत्त्वस्य नास्ति योजनसङ्ख्येति पुरुषमायामध्यवृत्तितत्त्वानां पञ्चानामूर्ध्वाधरभावेन क्रमभेदमाश्रित्येदं मतं प्रवृत्तम्। अस्मिन् मते क्षित्यादीनि मनोऽन्तान्येकविंशतितत्त्वानि उत्तरोत्तरं दशगुणवृध्या क्रमादेकदशशतसहस्रायुतलक्षप्रयुतकोटयर्बुदपद्मखर्वनिखर्ववृन्दमहापद्मशङ्खमहा—समुद्रान्तिममध्यपरार्धदशपरार्धयोजनानि। अहङ्कारबुद्धी शतगुणवृध्या क्रमात् सहस्रगुणितलक्षगुणितपरार्धयोजने। प्रकृतिः सहस्रगुणवृध्यार्बुदगुणित परार्धयोजना। पुरुषस्ततोयुतगुणवृध्या [1]वृन्दगुणित परार्धयोजनः। नियतिकालौ लक्षगुणवृध्या क्रमात् (पद्मपरार्धगुणित महाशङ्ख परार्धगुणित शतपरार्धहतपरार्धगुणित परार्धयोजनौ)। एवं चास्मिन् पक्षे जलादिकलान्ततत्त्वसमुदायरूपो नालो दशादिशतपरार्धाहत परार्धगुणितपरार्ध पर्यन्तैकोनत्रिंशत्सङ्ख्यासमुदायसङ्ख्येययोजनपरिमितो भवति। अस्मिंस्तत्त्ववृध्याश्रयणेन प्रवृत्ते पक्षद्वयेऽपि [2]नालग्रन्थेः पद्मस्य चातिदैर्घ्यं स्यात्। तथाहि—अत्र प्रथमपक्षे तावन्नालान्तर्गतेषु तत्त्वेषु काल एकः परार्धयोजनः। कला तच्छतांशपरिमिता। एवं विद्यानियतिपूर्वकतत्त्वानि तच्छतांशपरिमितानीति नालः किंचिदधिकैकपरार्धयोजनः, मायारूपो ग्रन्थिस्तु शतगुणितपरार्धयोजनः, कालाच्छतगुणत्वान्मायायाः। पद्मं लक्षगुणितपरार्धयोजनम्। पद्मरूपायाः शुद्धविद्याया मायापेक्षया सहस्रगुणत्वात्। इत्थं पक्षान्तरेऽपि ग्रन्थिपद्मयो[3]र्दैर्घ्याव्यस्थित्या पर्यवस्यति। एवं कन्दप्रभृति नालापेक्षया ग्रन्थेः पद्मस्य च दैर्घ्यं न लौकिकपद्मच्छायानुकारि नवनाभिकन्दादिहृत्प्रदेशान्त-

---

[1] महासमुद्रगुणितसहस्रपरार्धगुणितपरार्धयोजनौ। रागविद्याकलास्तु दशलक्षगुणवृध्या क्रमात् पद्मपरार्धगुणितमहाशङ्खपरार्धगुणितशतपरार्धहतपरार्धगुणितपरार्धयोजनाः इति—शिव—चन्द्रिकापाठः. [2] नालात्ग्रन्थेः-पा. [3] दैर्घ्यावस्थितिरूहनीया, दैर्घ्यं स्यात्-पा.

हृत्पद्मच्छायानुकारि । [1]अन्यकालवृद्धिपक्षाश्रयणमेव शिवासनपद्म-भावनायामनुकूलम् । इदं च कमलमनन्तासनासिंहासनयोगासन-पद्मासन विमलासनरूप पञ्चासनगर्भम् । तत्र पृथिवीतत्त्वपरिमित-कन्द एवाधारशक्तिः, जलादि [2]कालान्ततत्त्वपरिमितो नाल एव तदुपरिस्थितपद्ममुकुलसहितः सन्नाधारशक्तिरूपक्षीरोदसमुत्थित-फणामणिमण्डलसहितभुजङ्गमाकृतिशालिविद्येश्वराष्टकान्तर्गतान---न्तरुद्रः, एतदुभयमनन्तासनमुच्यते । नालाद्यवधिजलतत्त्वप्रभृतिगु-णतत्त्वपर्यन्तं नालं परितः स्थितं सिंहासनम् । तत उपरि ग्रन्थिपर्य-न्तं योगासनम् । तदुपरि दलकेसररूपं पद्मासनम् । कर्णिकैव विमला सनम् । कर्णिकोपरिस्थितगुणत्रयमण्डलत्रयतत्त्वत्रयात्मकं वा ॥

यद्यप्यनन्तः सहस्रफणामण्डितः सर्पत्वेनोक्त इति तस्य भोगदण्ड एवोर्ध्वाकारस्थितो नालः, सङ्कुचितं तत्फणामण्डलमेवात्र पद्ममुकुलम , नतु तद्व्यतिरेकेण पद्ममस्ति, तथापि तदेव विकास-ध्यानदशायामष्टदलपद्मरूपेण भावनीयमिति पद्मासनमुच्यते । यद्वा वृत्ताकारं कोटिसूर्याभं सिंहासनादधः स्थितमनन्तभोगिरूपमनन्त-[3]पद्मररूपान्नालादन्यदेवानन्तासनम् । वृत्ताकारमुपर्युपरिस्थिता-नन्तवासुकितक्षक कार्कोटक पद्ममहापद्म शङ्खगुलिकाख्याष्टमहा-नागरूपं वा ॥

अथ वा एवमनन्तासनं भावनीयम्—सिंहासनस्याधस्ताद्वृष-सिंहभूतकुञ्जराकारधर्मादिपादचतुष्टयस्य अधर्मादिफलकचतुष्ट-यस्य मञ्चस्योपरि फणापञ्चकेन पुच्छेन च सहितः फणामध्ये पुरुषाकारः क्षौमवस्त्रपरिधानः सर्वाभरणभूषितो वराभयकरद्वयो नागराजः । तं परितः पूर्वादिदिक्ष्वनन्ताद्या गुलिकान्ता एकफणाः कृताञ्जलिपुटा नागराजं वीक्षमाणा महानागाः नागराजस्य शिरसि प्रफुल्लमष्टदलयुक्तमनन्तपङ्कजमिति । अत्रादिमपक्षमवलम्ब्य शिवा-र्चनस्यापि क्रमः प्रदर्श्यते ॥

हां आधारशक्तये नमः । शतकोटियोजनप्रमाणब्रह्माण्डाकार-पृथिवीतत्त्वपरिमाण शिवासनपद्मकन्दरूपां धवलवर्णां पाशाङ्कुश-वराभयधारिणीमाधरशक्तिं पूजयामि । अनन्तासनाय नमः ।

---

[1] अत; कलावृद्धि—पा. [2] कालान्तरतत्त्व· पा. [3] पद्मरूपं नालात्.

जलादिकलान्ततत्त्वपरिमाणनालरूपं मायाग्रन्थिसहितं एकादश-सहस्रकोटियोजनोच्छ्रायं वा, ([1]खर्वनिखर्व बृन्दमहापद्मशङ्खमहा-शङ्खसमुद्रमध्यदशगुणितपरार्ध निखर्वगुणित सहस्रपरार्ध लक्ष-गुणितपरार्धकोटिगुणितपरार्ध पद्मगुणितपरार्ध खर्वगुणितपरार्धरूप चतुर्दशसङ्ख्यासमुदायसङ्ख्येय योजनोच्छ्रायं वा, शतसहस्रायुतलक्ष प्रयुत कोट्यर्बुदपद्मखर्व निखर्व बृन्दमहापद्मश ङ्खमहाशङ्ख समुद्र-महासमुद्र मध्यपरार्ध दशगुणितपरार्ध सहस्रगुणितपरार्ध [2]लक्ष-गुणितपरार्धमहापरार्धार्बुदगुणितपरार्ध बृन्दगुणितपरार्धमहा-समुद्रमध्यगुणित [3]परार्धसहस्रपरार्धगुणितपरार्ध पद्मपरार्धगुणित-परार्ध महाशङ्खपरार्धगुणितपरार्ध शतपरार्धाहतपरार्धगुणितपरा-र्धपद्मपरार्धाहतपरार्धगुणित परार्धरूप) त्रिंशत्सङ्ख्यागुणितपद्म-सङ्ख्यासमुदायसङ्ख्ययोजनोच्छ्रायं वा, तदुपरि सहस्रफणामण्डल-रूपाब्जमुकुलालङ्कृतमेकवक्त्रं चतुर्भुजं हृदये नमस्कारमुद्रासहित-मनन्तरुद्ररूपमनन्तासनं पूजयामि। हां शिवासनपद्मनालकण्ट-केभ्यो नमः। पृथिवीकन्दोद्गताशिवासनपद्मनालावयवेभ्यो जलादि-जलान्ततत्त्वाश्रितामरेश प्रभासनैमिषपुष्कराषाढिडिण्डिमुण्डभार-भूतलगुडीश्वरहरिश्चन्द्रश्रीशैलजप्येश्वराम्रातकेश्वरमध्यमेश्वरमहा-कालकेदारभैरव गयाकुरुक्षेत्र [4]नाखलकनखल विमलेश्वराट्टहासम-हेन्द्रभीमेश्वराविमुक्तवस्त्रापदरुद्रकोटि महालयगोकर्णभद्रकर्णस्व-र्णाक्ष[5]स्थाणुच्छगलण्डदुरण्डमाकोटि मण्डलेश्वर महाकालाञ्जनशङ्कु-कर्णस्थूलेश्वर स्थलेश्वर पैशाचराक्षस यक्षगन्धर्व ऐन्द्र सौम्य प्राजापत्य ब्राह्माकृतकृतभैरव ब्राह्मवैष्णव कौमार (नाल) श्रीकण्ठ-वामदेव भीमोग्रभवेशानैकवीरप्रचण्डोमापत्यजानन्तैकशिवक्रोध-

---

[1] दश शत सहस्रायुत लक्ष प्रयुत कोट्यर्बुद पद्मखर्व निखर्व बृन्दमहापद्म शङ्खमहा-शङ्खसमुद्रमहासमुद्र मध्यपरार्ध दशशतगुणितपरार्ध सहस्रगुणितपरार्ध लक्षगुणितपरार्धा-र्बुदगुणितबृन्दगुणितपरार्ध महासमुद्रगुणितपरार्ध सहस्रपरार्धगुणितपरार्ध पद्मपरार्धगुणित-परार्ध गुणितपरार्ध महाशङ्खपरार्धगुणितपरार्ध शतपरार्धाहतपरार्धगुणितपरार्ध पद्मपरार्धाहत-परार्ध गुणितपरार्धरूप—शिव—चन्द्रिकापाठः. [2] लक्षगुणितपरार्धार्बुदगुणित - पा. [3] समुद्रगुणित—पा. [4] नाकुलकनखलविमलेश्वर—पा. [5] स्थाणुच्छगलद्विरण्डमहाकोट—पा.

चण्ड द्युति संवर्त शूर (ज्योति पिङ्गसूरगमन्त्ररूपिसुबाहु भासुर कालदंष्ट्र पिङ्गलाक्ष विशाल कालरूपिद्रुनाशन) पञ्चान्तकैकवीर शिखेयनामधेयपञ्चसप्तति भुवनरूपान् कण्टकान् पूजयामि। हां सूत्रेभ्यो नमः। पञ्चविपर्ययाष्टसिद्धिनवतुष्टयष्टाविंशति (श) रक्तिरूप पञ्चाशद्भावनात्मकानि शिवासनपद्मनालसूत्राणि पूजयामि ॥

एवमनन्तासनात्मकनालपूजानन्तरं नालं परितः स्थिते सिंहासनयोगासने पूजयेत्। हां धर्माय नमः। शिवसिंहासनस्याग्नेयकोणपादरूपं सिंहाकारं जलादिगुणतत्त्वपर्यन्तोन्नतमाग्नेयाभिमुखं विवृतास्यं परिवृत्तकन्धरं वायव्यकोणसिंहाव[1]लोकिनं कोटिसिंहपरिवारितं कर्पूरवर्णं धर्मं पूजयामि। हां ज्ञानाय नमः। शिवसिंहासनस्य नैरृत्यकोणपादरूपं सिंहाकारं जलादिगुणतत्त्वपर्यन्तोन्नतं नैरृताभिमुखं विवृतास्यं परिवृत्तकन्धरमीशानकोणसिंहावलोकिनं कोटिसिंह परिवारितं कुङ्कुमवर्णं ज्ञानं पूजयामि। हां वैराग्याय नमः। शिवसिंहासनस्य वायव्यकोणपादरूपं सिंहाकारं जलादिगुणतत्त्वपर्यन्तोन्नतं वायव्याभिमुखं विवृतास्यं परिवृत्तकन्धरमाग्नेयकोणसिंहावलोकिनं कोटिसिंहपरिवारितं सुवर्णवर्णं वैराग्यं पूजयामि। हां ऐश्वर्याय नमः। शिवसिंहासनस्यैशानकोणपादरूपं सिंहाकारमीशानाभिमुखं जलादिगुणतत्त्वपर्यन्तोन्नतं विवृतास्यं परिवृत्तकन्धरं नैरृतकोणसिंहावलोकिनं कोटिसिंहपरिवारितं मेघवर्णं ऐश्वर्यं पूजयामि। हां अधर्माय नमः। शिवसिंहासनस्य पूर्वफलकरूपं श्वेतकृष्णवर्णं पुरुषाकारं दक्षिणशिरसमुत्तरपादमधोमुखमधर्मं पूजयामि। हां अज्ञानाय नमः। शिवसिंहासनस्य दक्षिणफलकरूपं श्वेतरक्तवर्णं पुरुषाकारं पूर्वशिरसं पश्चिमपादमधोमुखमज्ञानं पूजयामि। हां अवैराग्याय नमः। शिवसिंहासनस्य पश्चिमफलकरूपं रक्तपीतवर्णं पुरुषाकारमुत्तरशिरसं दक्षिणपादमधोमुखमवैराग्यं पूजयामि। हां अनैश्वर्याय नमः। शिवसिंहासनस्योत्तरफलकरूपं पीतकृष्णवर्णं पुरुषाकारं पश्चिमशिरसं पूर्वपादमधोमुखमनैश्वर्यं पूजयामि। तदनन्तरं हां शिवसिंहासनाय नमः, इति समस्तं सिंहासनं संपूज्य योगासनं पूजयेत् ॥

[1] लोकनकाटि, लोकेन कोटि–पा.

तस्य श्वेतरक्तपीतकृष्णवर्णानि भूतरूपाणि कृतत्रेताद्वापरकलियुगान्यान्नेयादिपादत्वेनाव्यक्तनियतिकलाकालान् स्फटिककालमेघदाडिमपुष्पभिन्नाञ्जनवर्णान् पूर्वादिफलकत्वेनाभ्यर्च्य, हां शिवयोगासनमध्यफलकरूपाय श्रीमहाविष्णवे नम इति मध्ये नीलवर्णं त्रिणेत्रं शङ्खचक्रवराभयकरं विष्णुं पूजयेत्। ततो रजोगुणारुणाय तमोगुणतूलभरिताय मायारूपायाधश्छदाय नम इति योगासनस्योर्ध्वमेखलाया अधोभागप्रसारितं शयनीयरूपं अधश्छदनं नैरृऋतकोणे संपूज्य, हां सत्वगुणधवलिताय शुद्धमायारूपायोर्ध्वच्छदनाय नम इति मेखलाया उपरि शयनीयोत्तरछदनरूपमूर्ध्वच्छदनं नैरृऋतकोणे च संपूज्य, हां शिवयोगासनाय नम इति समस्तं योगासनं पूजयेत्॥

योगासनविमलासने विना ऽयासनात्मकमेव शिवासनमिति पक्षे सिंहासनमेव मायाग्रन्थिपर्यन्तोन्नतं भावयित्वा तत्पादफलकार्चनानन्तरं आग्नेयादिकोणेषु स्थिततदीयफलकद्वयसन्धानकीलत्वेन कृतयुगादिचतुष्टयमभ्यर्च्य तन्मध्यफलकत्वेनैव श्रीमहाविष्णुं पूजयित्वा अधश्छदनमूर्ध्वच्छदनं च पूजयेत्॥

ततोऽनन्तफणामण्डलरूपं पद्ममुकुलं विकसितं भावयित्वा तस्य दलकेसरानर्चयेत्। हां शिवासनपद्मदलेभ्यो नमः, अष्टविद्येश्वररूपाणि धवलवर्णानि शिवासनपद्मदलानि पूजयामि। हां केसरेभ्यो नमः, मूले सुवर्णवर्णानि मध्ये विद्रुमवर्णानि मुक्ताफलाकृतिशिरोऽलङ्कृतानि चतुष्षष्टिकलारूपाणि वामादिशक्तिसहिताष्टरुद्ररूपाणि वा केसराणि पूजयामि। केसराणामष्टरुद्ररूपत्वपक्षे अष्टावष्टौ केसराणि एकैकरुद्रत्वेन भावनीयानि। अथवा फणारूपदलसहस्रयुक्तस्यानन्तपङ्कजस्य केसराण्यपि सहस्रं सन्तीति तानि सर्वाणि पञ्चविंशत्युत्तरशतसङ्ख्यया अष्टधा विभज्य वामाद्यष्टरुद्ररूपेण पूजनीयानि। कर्णिकासहितान्यष्टावेव वा केसराणि तथा पूजनीयानि। अयं च न्यायोऽष्टविद्येश्वररूपतया पूजनीयेषु दलेष्वपि योजनीयः। हां कर्णिकायै नमः। विमलाशक्तिरूपां कनकवर्णां शिवासनपद्मकर्णिकां पूजयामि। हां बीजेभ्यो नमः। वामादिनवशक्तिरूपाणि वा पञ्चाशद्वर्णरूपाणि वा शिवासनपद्मकर्णिकाबीजानि पूजयामि। ततः सर्वावयवयुक्तं पद्मं विभाव्य हां

पद्मासनाय नम इति संपूज्य हां पद्ममुद्रायै नम इति पद्ममुद्रां प्रदर्शयेत्। ततः पूर्वादिप्रादक्षिण्येनाष्टस्वष्टसु केसरेषु[1] वामाद्यष्टशक्तीरेकैकशः पूजयेत्। वामायै नमः, ज्येष्ठायै नमः, रौद्र्यै नमः, काल्यै नमः, कलविकरण्यै नमः, बलविकरण्यै नमः, बलप्रमथिन्यै नमः, सर्वभूतदमन्यै नमः, अरुणवर्णाश्चामरधारिणीः शिवासनन्यस्तैकस्ताःशिवाभिमुख्येन केसरेषु स्थिता वामादिशक्तीः पूजयामि। मनोन्मन्यै नमः, स्फटिकवर्णां पाशाङ्कुशाभयवरधारिणीं शिवासनपद्मकर्णिकायामीशानदिशि मध्ये वा स्थितां मनोन्मनीं पूजयामि। ततः साधिपतिकानि सूर्यसोमाग्निशक्तिमण्डलान्युपर्युपरि पूजयेत्। हां सूर्यमण्डलाय नमः, कोटिसूर्यप्रतीकाशं शिवपद्मासनदलाग्रव्यापकं सूर्यमण्डलं पूजयामि। हां सूर्यमण्डलाधिपतये ब्रह्मणे नमः॥

पञ्चवक्त्रं चतुर्बाहुं प्रतिवक्त्रं त्रिलोचनम्।
तप्तचामीकराभासं नमोमुद्रासमन्वितम्॥
सृष्टिकारणमात्मनमात्मतत्त्वस्वरूपिणम्।

सूर्यमण्डलाधिपतिं ब्रह्माणं पूजयामि।

हां सोममण्डलाय नमः। शिवासनपद्मकेसराग्रव्यापकं कोटिशीतांशुशीतलं सोममण्डलं पूजयामि। हां सोममण्डलाधिपतये विष्णवे नमः, मेघश्यामं शङ्खचक्रनमस्कारमुद्रान्वितकरचतुष्टयं स्थितिकारणकारणं विद्यातत्त्वरूपिणं सोममण्डलाधिपतिं विष्णुं पूजयामि। हां अग्निमण्डलाय नमः। शिवासनपद्मकर्णिकाव्यापकं वह्निमण्डलं पूजयामि। हां वह्निमण्डलाधिपतये रुद्राय नमः। माणिक्यवर्णं शूलानलनमोमुद्रान्वितकरचतुष्टयं संहरणकारणकारणं शिवतत्त्वरूपिणं वह्निमण्डलाधिपतिं रुद्रं पूजयामि। विमलासनं कर्णिकाव्यतिरिक्तमिति पक्षे आग्नेयादीशानान्तं गुणत्रयं दक्षिणाद्युत्तरान्तं मण्डलत्रयं नैरृतादिवायव्यन्तं तत्त्वत्रयं च पूजयित्वा हां विमलासनायनमः इति समस्तमिदं विमलासनं पूजयेत्।

---

[1] वामादीरष्ट–पा.

तदनन्तरं मध्ये हां शक्तिमण्डलाय नमः, धवलवर्णं मण्डलत्रयव्यापकमिच्छाशक्तिरूपं शक्तिमण्डलं पूजयामि। हां शक्तिमण्डलाधिपतये महेश्वराय नमः, स्फटिकवर्णमष्टहस्तं खड्गत्रिशूलबाणाक्षमालाकमण्डल्वभयवरारविन्दधारिणं शक्तिमण्डलाधिपतिं महेश्वरं पूजयामि। ततः समस्तं शिवासनं विभाव्य तदुपरि हां शिवासनाय नम इति ज्ञानशक्त्यात्मकं शिवासनं पूजयेत्। अस्यामासनपरम्परायामाधारशक्तिमात्मार्थपूजायां ब्रह्मलोकस्थानीये पद्मपीठे पूजयित्वा, अनन्तप्रभृतिशक्तिमण्डलान्तं लिङ्गवेदिकायामुपर्युपरि लिङ्गनाल(भि)पर्यन्तं पूजयेत्। एवं प्रत्येकं शिवासनावयवपूजनाशक्तौ साङ्गोपाङ्गं शिवासनं विभाव्य हां शिवासनाय नम इत्येवं पूजयेत्। अयमनेकासनगर्भशिवासनार्चनप्रकारः। यद्वा आवाहने पद्मम्, अनन्तं स्नाने, विमलं अर्चने, योगं नैवेद्ये, वस्त्रादिष्वन्येषूपचारेषु सिंहासनं च कल्पयेत्। अथवा सिंहासनं स्नाने, अनन्तं, वस्त्रे, पद्ममाभरणगन्धपुष्पेषु, विमलं नैवेद्ये, योगमन्योपचारेषु कल्पयेत्। एवं शिवासनं संपूज्य हां हं हां शिवमूर्तये नम इति [1] लिङ्गनाले महेश्वरतत्त्वात्मिकां शिवमूर्तिं स्थिरविद्युन्निभां दण्डाकारामविभक्तावयवां संपूज्य लिङ्गदैर्घ्ये हों ईशानमूर्धाय नमः," इत्यादिमन्त्रैर्दण्डभङ्गया मूर्धादिपादान्तमीशानादीन् विन्यस्य सशक्तिकमशक्तिकं वा तत्तत्स्थानेष्वष्टत्रिंशत्कला न्यसेत्। [2] शैवक्रियोत्तरादिदीक्षारहितश्चेद्वशिन्यादिशक्तिन्यासं कुर्यात्। ततः श्रीकण्ठादिन्यासं च विदध्यात्। एवं सदाशिवदेहासिध्यर्थं न्यासं कृत्वा हां हौं विद्यादेहाय नम इति विभक्तावयवं सदाशिवं विद्यादेहं पूजयित्वा तत्स्वरूपं प्रपञ्चेन ध्यायेत्॥

क्षित्यादिशुद्धविद्यान्ते कन्दनालदलैर्युते।
कर्णिकाकेसरैर्युक्ते सूर्यबिम्बविभूषिते॥

[3] ईश्वराङ्कस्थया मूर्त्या स्थिरविद्युत्प्रकाशया।
अविभक्तावयवया भ्राजमानोपरिस्थले॥

क्षित्यादीश्वरतत्त्वान्ते मूर्त्या कथितया सह।
नानापट्टकुटीकोटियोजनौन्नत्यशालिनि॥

---

[1] लिङ्गनामेमेहेश्वर, लिङ्गनाडमहेश्वर–पा. [2] शुद्धः शशिन्यादिशक्तीरेव न्यसेत्–च. षा. [3] ईश्वरान्त्यकथा–पा.

पद्मे स्थितं महापद्मकोटियोजनसंमितम् ।
बद्धपद्मासनासीनं समुपासे सदाशिवम् ॥

यद्वा कूटाङ्ककोटीकटकनटनटीनाटथनव्यान्नपान्न-
ध्याना विद्यानकानीनकमितशतकोद्युन्नतैर्योजनौघैः ।
तेजोमूर्त्यन्तकन्दप्रभृतिषु दशधा सप्तधा च प्रभिन्नैः
सङ्ख्यातव्यप्रमाणैस्सरसिरुहवरे योगपीठे निषण्णम् ॥

दशोत्तरप्रयुतपरार्ध[1]योजनां
विवर्धकाविषयपरार्ध्ययोजनाम् ।
समुन्नतिं समुपगतं समाश्रये
सदाशिवं सरसिरुहासने स्थितम् ॥

पद्मं कन्देऽथ नाले क्रमुकदशगुणा विंशतौ स्याद्विवृद्धि-
रेकैकद्वित्रिषु स्याच्छतमुखदशलक्षान्त[2]सङ्ख्यातिवृद्धिः ।
[3]ग्रन्थौ कोट्याथ पद्मप्रभृतिषु दशकोट्येति सङ्ख्याभिराभिः
सङ्ख्यातैर्योजनौघैर्महिमजुषि महायोगपीठे स्थितं वा ॥

तदुपरि शतकोटियोजनौघप्रथितमहेश्वरतत्त्वमानमूर्तेः ।
लसितमुपरितत्सहस्रकोट्या तदयुतकोटिदिशा च वृद्धि-
भाजम् ॥

पञ्चवक्त्रं दशभुजं प्रतिवक्त्रं त्रिलोचनम् ।
दक्षिणे शूलवज्रासिपरश्वभयमुद्रिकाः ॥

वामे च दधतं नागपाशघण्टानलाङ्कुशान् ।
अथवा वरखट्वाङ्गशूलाभीशक्तिपञ्चकम् ॥

रुचकं डमरुं सर्पं नीलाम्भोजाक्षमालिकाम् ।
अस्योर्ध्ववक्त्रं देवस्य बालभावमनोहरम् ॥

प्रसन्नमूर्ध्वाभिमुखं निर्मलस्फटिकप्रभम् ।
पूर्ववक्त्रं महेशस्य निष्टप्ताष्टापदप्रभम् ॥

गर्वेण स्तिमितं सौम्यं संप्राप्तनवयौवनम् ।
दक्षिणं वदनं शम्भोर्नीलाञ्जनचयप्रभम् ॥

---

[1] योजनावित—पा. [2] भङ्ख्याथवृद्धिः—पा. [3] ग्रन्थौ कोट्योऽथ—पा.

भ्रुकुटीकुटिलं घोरं रक्तवृत्तेक्षणत्रयम् ।
दंष्ट्राकरालं दुर्धर्षं स्फुरिताधरपल्लवम् ॥
चन्द्रापीडं ज्वलत्केशं विलसत्प्रौढयौवनम् ।
उत्तरं वक्त्रमीशस्य नवविद्रुमसप्रभम् ॥
ललाटतिलकोपेतं नीलालकविभूषितम् ।
प्रलोभनं त्रिणयनं चन्द्राभरणभास्वरम् ॥
पार्वतीवदनाकारसलीलभ्रूलताञ्चितम् ।
पश्चिमं [1]चन्द्रसङ्काशं नृपलक्षणलक्षितम् ॥
चन्द्रावतंसरुचिरं ध्यानस्तिमितलोचनम् ।
इति ध्यात्वा पुनरपि ध्यायेद्देवं सदाशिवम् ॥
इच्छाज्ञानक्रियारूपविलसल्लोचनत्रयम् ।
ज्ञानचन्द्रकलाचूडं दशदिग्बाहुमण्डलम् ॥
पञ्चब्रह्मात्मवदनं पञ्चसादाख्यवक्त्रकम् ।
श्रीमत्पञ्चाक्षराकारवदनांसोरुशोभितम् ॥
समस्ततन्त्ररूपं च [2]सर्वब्रह्मकलामयम् ।
निवृत्त्या जानुपर्यन्तमानाभेश्च प्रतिष्ठया ॥
आकण्ठं विद्यया सिद्धमाललाटं तु शान्तया ।
तदूर्ध्वं शान्त्यतीताख्यकलया परिकल्पितम् ॥
एवं पञ्चकलारूपमिदं सादाशिवं वपुः ।
चतुर्मुखी तटिद्वर्णा निवृत्तिर्वज्रधारिणी ॥
एकवक्त्रा शशाङ्काभा प्रतिष्ठा[3]पद्मधारिणी ।
अग्निवर्णा त्रिवदना विद्या शक्तिलसत्करा ॥
कृष्णवर्णा चतुर्वक्त्रा शान्तिर्ध्वज[4]विधारिणी ।
पाशभृत्पञ्चवदना शान्त्यतीता शशिप्रभा ॥
सर्वाः पद्माक्षमालाभ्यामभयेन विराजिताः ।
चतुर्भुजास्त्रिणेत्राश्च पीनोन्नतपयोधराः ॥

---

[1] चण्डसं-पा. [2] वर्णब्रह्म—पा. [3] पदधारिणी—पा. [4] विदारिणी—पा.

आसां पञ्चाध्वगर्भत्वात्षडध्वात्मा सदाशिवः ।
मन्त्राध्वा च पदाध्वा च वर्णाध्वा भुवनाध्वकः ॥

तत्त्वाध्वा च कलाध्वा च षडध्वान इमे मताः ।
चतुर्विंशत्युत्तरं यद्भुवनानां शतद्वयम् ॥

भुवनाध्वा स संचिन्त्यो रोमवृन्दात्मना विभोः ।
पञ्चाशद्रुद्ररूपैस्तु वर्णैर्वर्णाध्वकल्पना ॥

असौ त्वगात्मना चिन्त्यो देवदेवस्य शूलिनः ।
सप्तकोटिमहामन्त्रैर्मूलविद्यासमुद्भवैः ॥

मन्त्राध्वा रुधिरात्मासौ विचिन्त्यः पार्वतीपतेः ।
अनेकभेदसंभिन्ना मन्त्राणां पदसंहतिः ॥

पदाध्वा चिन्तनीयः स्यात्सिरामांसतया प्रभोः ।
पृथिव्यादीनि षट्त्रिंशत्तत्त्वान्यागमवेदिभिः ॥

उक्तान्यमीभिस्तत्त्वाध्वा शुक्लमज्जास्थिरूपधृक् ।
नास्य देहेऽस्थिरुधिरं न मांसं नास्ति किंचन ॥

प्रतिबिम्बमिवादर्शे शक्रचापमिवाम्बरे ।
ज्योतिर्मयतया सिद्धमिदं सादाशिवं वपुः ॥

तथापि कल्पनामात्रं कलाव्याप्त्यध्वनामिदम् ।
ब्रह्मस्वीशेन [1]मूर्धानं तत्पुरुषेण [2]चतुर्मुखीम् ॥

हृदयादीन्यघोरेण गुह्यादीनि तु वामतः ।
सद्योजातेन तु ध्यायेत्पादादीनि जगत्पतेः ॥

पञ्चवक्त्राः स्मृताः सर्वे दशदोर्दण्डभूषिताः ।
खड्गखेटधनुर्बाणकमण्डल्वक्षसूत्रिणः ॥

वराभयोपेतकराः शूलपङ्कजपाणयः ।
अघोरो घोर एतेषु तदन्ये सौम्यविग्रहाः ।

एवं ध्यात्वा सदेशस्य पञ्चब्रह्मात्मतां विभोः ।
तत्तद्ब्रह्मकलाभेदै[3]र्विविच्याङ्गानि कल्पयेत् ॥

---

[1] मूर्धा–पा. [2] चतुर्मुखि–पा. [3] विचिन्त्य.

ईशानस्य कलाः पञ्च पञ्चमूर्धात्मतां गताः ।
चतुर्मुखतया ध्येयाश्चतस्रः पुरुषस्य ताः ॥

अष्टावघोरस्य कलाः समस्तजगतीपतेः ।
हृत्कण्ठौंऽसौ नाभिकुक्षी पृष्ठं वक्ष इतीरिताः ॥

वामदेवस्य तु कलास्त्रयोदश शिवोदीताः ।
गुह्योरुजानुजङ्घास्फिक्कटिपार्श्वे तथा मताः ॥

सद्योजातस्य तु कला वसुसङ्ख्याः प्रकीर्तिताः ।
पादौ करौ नासिके च शिरो बाहू च ता मताः ॥

अष्टत्रिंशत्कला देवास्त्रिणेत्राश्च चतुर्मुखाः ।
वराभयपरश्वेणविलसत्करपङ्कजाः ॥

तत्तद्ब्रह्मसमाकारवर्णायुधभृतोऽथवा ।
एतेषां वामभागे तु वशिन्याद्याश्च शक्तयः ॥

पाशाङ्कुशाभयवरैर्ध्यातव्याः सुस्मिताननाः ।
श्रीकण्ठप्रमुखान् रुद्रान् वर्णरूपान् सशक्तिकान् ॥

प्रभोरवयवान् ध्यायेन्न्यासविन्यासवर्त्मना ।
स्मरेत्सशक्तिकान् रुद्रानर्धनारीश्वराकृतीन् ॥

सिन्दूरकाञ्चनप्रख्यवामदक्षिणपार्श्वकान् ।
पाशाङ्कुशाक्षवलयवरमुद्राविराजितान् ॥

प्रसन्नवक्त्रकमलान्विश्ववाञ्छितदायकान् ।
कामिकं पादकमलं योगजं गुल्फयोर्युगम् ॥

चिन्त्यं पादाङ्गुलीरूपं कारणं प्रसृतिद्वयम् ।
अजितं जानुनोर्युग्मं दीप्तमूरुद्वयं विभोः ॥

गुह्यबीजात्मकं सूक्ष्मं सहस्रं भ्रुकुटीतटम् ।
पृष्ठभागोंऽशुमानस्य नाभिः श्रीसुप्रभेदकम् ॥

विजयं जठरं प्राहुर्निश्वासं हृदयात्मकम् ।
स्वायम्भुवं स्तनद्वन्द्वमनलं लोचनत्रयम् ॥

वीरागमः कण्ठदेशो रौरवं श्रवणद्वयम् ।
मकुटं माकुटं तन्त्रं बाहू च विमलागमः ॥

चन्द्रज्ञानमुरः शम्भोर्विम्बं वदनपङ्कजम् ।
जिह्वा प्रोद्गीतमीशस्य ललितं गण्डयोर्युगम् ॥

सिद्धं ललाटफलकं सन्तानं कुण्डलद्वयम् ।
यज्ञोपवीतं शर्वोक्तं हारः स्रक् पारमेश्वरम् ॥

किरणं रत्नभूषास्य वातुलं वासनात्मकम् ।
एवं तन्त्रात्मकं रूपमीश्वरस्य विचिन्तयेत् ।

शिवज्ञानप्रदं पुंसां शिवधर्मप्रवर्तकम् ।
विशुद्धं शिवसादाख्यं विद्युद्वृन्दमिवाम्बरे ॥

विश्वतः स्फुटितं ज्योतिर्विद्यादूर्ध्वं मुखं विभोः ।
अमूर्तमथ सादाख्यं मूलस्तम्भ इति श्रुतम् ॥

ज्योतिस्तम्भमयं लिङ्गं स्मरेदस्योत्तरं मुखम् ।
ज्योतिर्लिङ्गैकभागोत्थमेकवक्त्रं त्रिलोचनम् ॥

मूर्तिसादाख्यमित्युक्तं ध्यायेत्पश्चिममाननम् ।
शूलं वज्रं च परशुमभीतिं दक्षिणैः करैः ॥

पाशं वह्निं च घण्टां च वरं वामैः करैरपि ।
दधानं कर्तृ सादाख्यं चतुर्वक्त्राम्बुजोज्वलम् ॥

लिङ्गमध्ये समुद्भूतं स्मरेद्दक्षिणमाननम् ।
पञ्चवक्त्रं दशभुजं पीठलिङ्गे समुद्गतम् ॥

प्रसिद्धं कर्म सादाख्यं पुरारेः पूर्वमाननम् ।
पञ्चब्रह्माण्यूर्ध्वपूर्वदक्षिणोत्तरपश्चिमान् ॥

वक्त्रपद्मान् विभोर्ध्यायेदीशानप्रभृतीन् क्रमात् ।
हृदयं हृदये शुभ्रं शिरः शिरसि पिङ्गलम् ॥

शिखां शिखापदे रक्तां कवचं [1]पार्श्वयोः सितम् ।
नेत्रेषु श्यामलं नेत्रं करेऽस्त्रमसितं स्मरेत् ॥

चतुर्भुजास्त्रिणेत्राश्च जटामकुटमण्डिताः ।
वराभये कपालं च शूलं च दधतः करैः ॥

---

[1] पादयोः—पा.

अङ्गदेवाः स्मृताः सौम्या नेत्रास्ते तूग्रविग्रहे ।
त्रिशूलं त्रिगुणं प्राहुः परशुं सत्यनिष्ठता ॥

खड्गं प्रतापो वज्रं च शम्भोः शक्तिरभेद्यता ।
वह्निः संहारिणी शक्तिः शक्तिर्नागेऽप्रधृष्यता ॥

मलमायाकर्मपाशो घण्टानादस्वरूपिणी ।
अभयं पालिनी शक्तिर्नियमं चाङ्कुशं विदुः ॥

इच्छाज्ञानक्रियारूपास्त्रिशूलं शक्तयो मताः ।
उक्तास्ता एव खट्वाङ्गं शुद्धतत्त्वप्रवर्तिकाः ॥

बीजपूरमिति प्रोक्ता जगद्बीजप्रवर्तिकाः ।
[1]डमरुक्षोभसम्पन्ना मायातत्त्वप्रवर्तिका ॥

काकोदरः कलामुख्यकार्यजातप्रवर्तिका ।
मनःप्रवर्तिका शक्तिरिन्दीवरतया मता ॥

अक्षमाला तु सा ज्ञेया इन्द्रियाणां प्रवर्तिका ।
शक्त्यायुधात्मिका शक्तिर्दुष्टसंहारकारिणी ॥

वरो भोगप्रदा शक्तिरभयं मोक्षदायिका ।
इत्थं दशायुधधरं कोटिशीतांशुशीतलम् ॥

द्वात्रिंशल्लक्षणोपेतं सर्वाभरणभूषितम् ।
पङ्क्त्यङ्गुलपरिच्छिन्नजटामकुटमण्डितम् ॥

तत्सव्यकोटिविन्यस्त त्र्यङ्गुलार्धेन्दुशेखरम् ।
तद्वामकोटिविश्रान्तबिन्द्वाकृत्यमरापगम् ॥

त्रिपुण्ड्रार्धेन्दुभूयन्त्रदीपचन्द्राकृतिं क्रमात् ।
ईशानाद्यैर्मुखैः पुण्ड्रान्धारयन्तं मनोहरम् ॥

ध्यायेत्तद्वामभागे तु दिव्यरूपां मनोन्मनीम् ।
जपाकुसुमसङ्काशां शुभ्रवस्त्रविभूषिताम् ॥

सर्वाभरणसम्पूर्णां पीनोरुजघनस्तनीम् ।
सहस्रपद्मनीलाब्जवरदाभयधारिणीम् ॥

---

[1] डमरुः क्षोभसंपन्नमाया.

एवं मनोन्मनीयुक्तं साक्षाद्देवं सदाशिवम् ।
लिङ्गं विभावयन्नग्रे लिङ्गबुद्धिं परित्यजेत् ॥

नेत्रत्रयेषु विन्यस्य हां नेत्रेभ्य इति क्रमात् ।
आवाहयेत्परशिवं सदेवं हृदयाम्बुजे ॥

अथावाहनक्रमः—

अप्रमेयमनिर्देश्यमनूपममनामयम् ।
सूक्ष्मं सर्वगतं नित्यं ध्रुवमक्षरमव्ययम् ॥

भवन्तं भवता[1]दिष्टमन्त्रेणाभिव्यनज्म्यहम् ।

इति विज्ञाप्य ऋजूर्ध्वकायो मनश्चक्षुर्निरोधपूर्वकमिडया वायुमापूर्य कुम्भकं कृत्वा हृदि पुष्पसम्पूर्णमञ्जलिं विधाय दृढमावाहनमुद्रां बध्वा स्वशरीरे मूलाधारस्थितं मन्त्रत्रयं परमशिव[2]ज्योतिः समाकृष्य मूलाधारप्रभृति स्थितम[3]हङ्कारमतिलङ्घ्य हृदयपर्यन्तं नीत्वा हृत्कण्ठताल्वादिस्थानस्थितपृथिव्यादिपाशजालब्रह्मादिकारणेश्वरसहिताकारादिद्वादशकलाश्च क्रमेण तत्तदनुसन्धानपूर्वकमतिलङ्घ्यद्वादशान्तपर्यन्त[4]मुपचारयन्नेव पुष्पाञ्जलिमपि द्वादशान्तपर्यन्तं नीत्वा मन्त्रमयं ज्योतिर्द्वादशान्तस्स्थपरमशिवेन संयोज्य अविश्रान्तंपरमामृतस्यन्दिबिन्दुरूपं तत आनीय भ्रूमध्यगतशिवमण्टपविश्रान्तं संभाव्य शरदिन्दुसहस्रवदाभाव्य हृद्देशेऽञ्जलिं विधारयन्वायुं पिङ्गलया विरेच्य वायुना सह परमशिवज्योतिः पुष्पाञ्जलिमध्यप्रापितं विभाव्य हां हौं शिवाय नम इति सदाशिवस्य ब्रह्मरन्ध्रे योजयेत् ॥

उक्तार्थविशदीकरणाय मूलमन्त्रतदीयहकारतत्कलाद्वादशस्थानानि प्रदर्श्यन्ते । यद्देहमध्यस्थानं मूलाधारं ततः प्रभृति ब्रह्मरन्ध्रपर्यन्तं तालचतुष्टयप्रमाणं देहान्तर्गतम् । तत ऊर्ध्वं तालप्रमाणं शिखास्थानम् । तत्र मूलाधारस्थितचतुर्दलकमलकर्णिकायां प्रासादमन्त्रस्योत्थानम् । ततः प्रभृति नाभिपर्यन्तं

---

[1] दिष्टो मन्त्रेण—पा. [2] ज्योतिस्तदधः समा—पा. [3] स्थितं हकार—पा.
[4] मुचारयन्नेव—पा.

मृणालसूक्ष्मो विद्युत्प्रभो हकारः। नाभेरूर्ध्वं द्वादशाङ्गुलपर्यन्तं विद्युद्द्युति रकारयुक्तो हकारः। ततः परं चतुरङ्गुलप्रमाणं हृत्पद्मम्। तत आरभ्य शिखाग्रपर्यन्तं द्वादशकलास्थानानि। तत्र चतुर्दल (हृत्पद्म)व्याप्तिमान[1]कारस्त्रिमात्रः समूढाङ्गारपुञ्जद्युतिः। स च निवृत्तिकलया पृथिव्यादिप्रकृत्यन्तैश्चतुर्विंशत्या तत्त्वैश्च सहितेन ब्रह्मणाधिष्ठितः। तदूर्ध्वं कण्ठस्थानस्थिताष्टाङ्गुलप्रमाणषोडशदलपद्मव्याप्ति[2]मानुकरो द्विमात्रः समसमयसमुदितचन्द्रसूर्यद्युतिः। स प्रतिष्ठाकलया पुरुषादिकलान्तैः षड्भिस्तत्त्वैश्च सहितेन विष्णुना अधिष्ठितः। तदूर्ध्वं तालुमूलस्थितचतुरङ्गुलप्रमाणचतुर्दलपद्मव्याप्तिमान्मकार एकमात्रो विद्युद्वर्णः। स विद्याकलया मायातत्त्वेन च सहितेन रुद्रेणाधिष्ठितः। तदूर्ध्वं भ्रूमध्यस्थितद्व्यङ्गुलमानद्विदलपद्मव्याप्तिमान् बिन्दुर्वृत्ताकारोऽर्धमात्रो विद्युद्वर्णः शान्तिकलया शुद्धविद्येश्वरतत्त्वाभ्यां च सहितेन महेश्वरेणाधिष्ठितः। तदूर्ध्वं ललाटमध्ये अर्धमात्रा ऊर्ध्वाग्रार्धचन्द्राकृतिः पादमात्रा चन्द्रवर्णा। तदूर्ध्वं ललाटे निरोधी। स चोर्ध्वाग्रत्रिकोणाकृतिरष्टांशमात्रो धूम्रवर्णः। तदूर्ध्वं शिरसि नादः। स दण्डाकृतिरुभयतो बिन्दुद्वययुक्तः षोडशांशमात्रो माणिक्यवर्णः। ततो ब्रह्मरन्ध्रे नादान्तः। स च दक्षिणासुखहलाकृतिर्दक्षिणपार्श्वस्थबिन्दुयुक्तो द्वात्रिंशांशमात्रो विद्युद्वर्णः। एवं बिन्दुस्थानाद्भ्रूमध्यादेकादशाङ्गुलस्थितब्रह्मरन्ध्रपर्यन्ते स्थाने स्थितानामर्धचन्द्रनिरोधिनादनादान्तानां चतुर्णामपि शान्त्यतीतकलासदाशिवतत्त्वाभ्यां सहितः सदाशिव एवाधिष्ठाता। ब्रह्मरन्ध्रादूर्ध्वमेकाङ्गुलस्थानस्थिता शक्तिः सर्वमुखहलाकृतिर्वामपार्श्वस्थबिन्दुसहिता चतुष्षष्ट्यंशमात्रा। ततस्त्र्यङ्गुलस्थाने स्थिता व्यापिनी त्रिशूलाकृतिः दक्षिणपार्श्वस्थबिन्दुसहिताऽष्टाविंशत्यधिकशतांशमात्रा। तदूर्ध्वं चतुरङ्गुलिसमानबिन्दुद्वयान्तर्गतकुञ्जरेखायुगलान्तरालस्थऋजुरेखामधि षट्पञ्चाशदधिकद्विशततमांशमात्रा। तदूर्ध्वं चतुरङ्गुलस्थित [3]मनोन्मनीबिन्द्वधिष्ठानकतदूर्ध्वप्रसृतदण्डाकाररेखात्मिका मनोमात्रा। अत्र ब्रह्मरन्ध्रादूर्ध्वमेकत्रिचतुरङ्गुलक्रमेण

---

[1] मानौकार. [2] मानूकार. [3] उन्मानी.

द्वादशाङ्गुलपर्यन्तशिखास्थाने उपर्युपरि स्थिताः शक्तिव्यापिनीः समनोन्मनीः शतकोटिसूर्यप्रभाः अनाहतशिवेनाधिष्ठिताः। ताश्च-तस्रोऽपि मिलिताः परमाकाश इत्युच्यन्ते। एवमकारश्चतुरङ्गुलः, उकारोष्टाङ्गुलः, मकारश्चतुरङ्गुलः, बिन्दुद्व्यर्धङ्गुलमर्धचन्द्रनिरोधि-नादनादान्ता एकादशाङ्गुलं शक्तिव्यापिनीः समनोन्मना द्वादशा-ङ्गुलं व्याप्नुवन्तीत्येकचत्वारिंशदङ्गुलं द्वादशानामपि कलानां व्याप्तिस्थानम्। ततश्च मूलाधाराद्द्वादशान्तपर्यन्तमुक्तमानेषु तत्तत्स्थानेषु हकारमकारयुक्तं हकारमौकारमूकारं वृत्ताकारं बिन्दु-मूर्ध्वाग्रार्धवृत्ताकारमर्धचन्द्रमूर्ध्वाग्रत्रिकोणाकारं निरोधिनं बिन्दु-द्वयमध्यगतदण्डाकारं नाददक्षिणपार्श्वस्थितं बिन्दुसहितोर्ध्वाग्र-दक्षिणमुखहलाकारं नादान्तं वामपार्श्वस्थितबिन्दुसहितोर्ध्वाग्र-वाममुखहलाकारां शक्तिं दक्षिणपार्श्वस्थितां बिन्दुसहितोर्ध्वाग्र-त्रिशूलाकारां व्यापिनीं बिन्दुद्वयान्तरालगतकुब्जरेखाद्वयमध्य-स्थितर्जुरेखाकृतिं समनां बिन्द्वधिष्ठानकोर्ध्वाग्रर्जुरेखाकृतिमुन्मनां च हृदयादिस्थानस्थितकलातत्कारणेश्वरैः सह क्रमेण पूर्वपूर्व-त्यागेन झडिति मनसा विचिन्त्य तदुपरि परमाकाशसरित्समुद्भूत-कोटिसूर्यसमप्रभ कोटिशीतांशुशीतलाष्टत्रिंशत्कलात्मककेसरोज्वल-प्रणवकर्णिकापञ्चाक्षरबीजाढ्यपरमानन्दमधुभरितमत्तभृङ्गनिषेवित-चिच्छक्तिरूपसहस्रदलकमलमध्यगतं सद्यःसमुद्यदनेककोटि-शारदशशाङ्कसङ्काशप्रकाशं परमानन्दजलधिं निष्कलं परमशिवं मनसावगाहेत॥

बिन्द्वादिकलानां स्फुटीकरणाय द्वादशकलास्वरूपं लिख्यते—एवं भावनापुरस्सरं परशिवं मूलेनानीय हृदयमन्त्रेणावाहन-मुद्रया सदाशिवहृदम्बुजं प्रापय्य, स्थापनमुद्रया तस्मिन् संस्थाप्य, सन्निधानमुद्रया स्वाभिमुखीकृत्य, स्वागतं ते महादेवेति विज्ञाप्य, वत्स सुखागतमिति देवोत्तरं मनसा विभाव्य, स्वाग-तार्घ्यं दत्वा, सन्निरोधमुद्रया सन्निरुध्य, "स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम्। तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन् सन्निधिं कुरु" इति हृद्यञ्जलिबन्धपूर्वकं संप्रार्थ्य, शिवस्यानुमतिं भाव-यित्वा, निरोधार्घ्यं प्रदाय कालकण्ठ्या हुं फडन्तास्त्रेण विघ्नानुत्सार्य,

शिवं कवचेनावकुण्ठ्य, हृदयशिरःशिखाकवचानि तत्तन्मन्त्रैर्देवस्य हृदयादिस्थानेषु विन्यस्य, हृदयादिकराङ्गविन्यासरूपसकलीकरणानन्तरं पुष्पमारोप्य, मूलेन परमीकृत्य, धेनुमुद्रयामृतीकुर्यात् ॥

अत्रावाहनं शिवस्य सदाशिवदेहप्रापणम्। स्थापनं सदाशिवस्य हृदयाम्बुजेऽवस्थापनम्। सन्निधापनमभिमुखीकरणम्। सन्निरोधनं यावत्पूजासमाप्ति सन्निधानप्रार्थनम्। अवकुण्ठनं भक्तेषु प्रकाशार्थं विघ्नानामप्राप्त्यर्थं च कवचेनाच्छादनम्। सकलीकरणं हृदयादिपञ्चाङ्गन्यसनम्। परमीकरणं शुक्लपीतरक्तासितवर्णानां हृदयादीनां शिवैकवर्णत्वानुसन्धानम्। अमृतीकरणं विग्रहस्य शिवस्य चाभेदेन प्रतिपत्तिः ॥

ननु विश्वव्यापकस्य शिवस्य कथमभिमतदेशप्रापणरूपमावाहनम्; उच्यते—अचिन्त्याद्भुतानन्तशक्तिकस्य शिवस्य व्यापकत्वमव्यापकत्वमप्यस्तीति तस्य देशान्तरप्रापणरूपमुपपद्यते। यद्वा व्यापकस्यापि जीवस्य शरीरावच्छेदोपाधिकमिव शिवस्यापि मन्त्रतेजोऽवच्छेदोपाधिवदभिमतदेशान्तरप्रापणं न विरुध्यते। अथवा दारुणि व्याप्तस्याग्नेर्मथनक्रियया क्वचिदभिव्यञ्जनवदभिमतदेशप्रापणभावनारूपया क्रियया शिवलिङ्गाद्यभिमतदेशे शिवस्याभिव्यञ्जनमेवावाहनम् ॥

ननु सर्वत्र नित्योदितशिवानन्दप्रकाशरूपस्य परमशिवस्य किमिदमभिव्यञ्जनम, उच्यते; यथा स्वयं प्रकाशमानस्याप्यङ्गारवह्निपुञ्जस्य भस्मच्छन्नस्य भस्मनिरास[1]पूर्वकक्रिययाभिव्यञ्जनमेवं स्वयं प्रकाशमानस्यापि परमशिवस्य पूजकमनसो विषयान्तरेषु (मनो) व्यापारेण तं प्रति छन्नस्यानन्यमनस्कविहितावाहनक्रियापूर्वकमभिमतदेशे लिङ्गादौ [2]यावज्जीवं कर्तव्यस्य तत्तदुपचारसमर्पणार्थमनुसन्धानसन्तानस्योपक्रमणमेवाभिव्यञ्जनम्। अथवा शिवपुराणोक्तप्रकारेण सदाशिवहृदयाम्बुजे परमशिवस्योमासहायचिदानन्दमयदिव्यविग्रहाविर्भावभावनैवावाहनम्। (तच्च दीक्षासमये गुरूपदिष्टदिव्यविग्रहानुसन्धानमेवेति नाभिनवत्वशङ्कावकाशः) ॥

---

[1] फूत्कारक्रियया इति भवितव्यम्. [2] यावद्विसर्जनं कर्तव्यस्य-पा.

तत्प्रकारः प्रदर्श्यते—

लिङ्गे सदाशिवं ध्यात्वा निश्चलेनान्तरात्मना ।
अष्टत्रिंशत्कलान्यासं कृत्वा स्वस्यां तनौ यथा ॥
अभ्यर्च्य गन्धपुष्पाद्यैस्त्यक्त्वा लिङ्गात्मतामतिम् ।
तस्यां मूर्तौ मूर्तिमन्तं शिवं परमकारणम् ॥
प्राणस्थानं सदेशस्य चिन्तयेदम्बया सह ।
ब्रह्मा विष्णुश्च रुद्रश्च तथान्ये च सुरासुराः ॥
तपोभिरुग्रैरद्यापि यस्य दर्शनकाङ्क्षिणः ।
यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् ॥
सह भूतेन्द्रियग्रामैः प्रथमं संप्रसूयते ।
कारणानां च यो धाता ध्याता परमकारणम् ॥
न संप्रसूयतेऽन्यस्मात् कुतश्चन कदाचन ।
सर्वैश्वर्येण संपूर्णो नाम्ना सर्वेश्वरः स्वयम् ॥
सर्वैर्मुमुक्षुभिर्ध्येयः शम्भुराकाशमध्यगः ।
सर्वोपरि कृतावासः सर्वावासश्च शाश्वतः ॥
[1]षड्विधाध्वमयः साक्षात्सर्वस्य जगतः पतिः ।
उत्तरोत्तरभूतानामुत्तरश्च निरुत्तरः ॥
अनन्तमहिमाम्भोधिरपरिच्छिन्नवैभवः ।
अशेषविषयामोघशुद्धबुद्धिविजृम्भणः ॥
आत्मशक्त्यमृतास्वादप्रमोदभरलालसः ।
अनन्तानन्दसन्दोहमकरन्दमधुव्रतः ॥
अखण्डजगदण्डानां पिण्डीकरणपण्डितः ।
औदार्यवीर्यगाम्भीर्यमाधुर्यमकरालयः ॥
अतुलः सर्वभूतानां राजराजो महेश्वरः ।
अप्राकृतशरीरं तमतिमन्मथरूपिणम ॥
घृतरीतिघनीभूतसच्चिदानन्दविग्रहम् ।
सर्वलक्षणसम्पन्नं सर्वावयवशोभितम् ॥

---

[1] षड्विधाध्वमयस्यान्यसर्वस्य जगतः पतिः ।—पा.

रक्तास्यपाणिचरणं कुन्दमन्दस्मिताननम् ।
शुद्धस्फटिकसङ्काशं फुल्लपद्मत्रिलोचनम् ॥

चतुर्भुजमुदाराङ्गं चारुचन्द्रकलाधरम् ।
वरदाभयहस्तं च मृगटङ्कधरं विभुम् ॥

सर्वोपमानवर्गस्य दवीयांसं विभावयेत् ।
ततः सञ्चिन्तयेत्तस्य वामभागे महेश्वरीम् ॥

उत्फुल्लोत्पलपत्राभविस्तीर्णायतलोचनाम् ।
पूर्णचन्द्राभवदनां नीलकुञ्चितमूर्धजाम् ॥

नीलोत्पलदलप्रख्यां चन्द्रार्धकृतशेखराम् ।
अतिवृत्तघनोत्तुङ्ग स्निग्धपीनपयोधराम् ॥

तनुमध्यां पृथुश्रोणीं पीतसूक्ष्मतराम्बराम् ।
सर्वाभरणसम्पन्नां माणिक्यतिलकोज्वलाम् ॥

विचित्रपुष्पसङ्कीर्णकेशपाशोपशोभिताम् ।
सर्वतोऽनुगुणाकारां किंचिल्लज्जानताननाम् ॥

हेमारविन्दं विकसद्दधानां दक्षिणे करे ।
दण्डवच्चापरं हस्तं न्यस्यासीनां सहासने ॥

भुक्तिमुक्तिप्रदां देवीं सच्चिदानन्दरूपिणीम् ।
सदाशिवेश्वरहर श्रीशद्रुहिणमातरम् ॥

समस्तगौरीलक्ष्म्यादिशक्तिचक्रस्य नायिकाम् ।
एवं देवं च देवीं च विचिन्त्य द्व्यष्टहायनौ ॥

भक्त्युपचारवर्गेण क्रमेण परिपूजयेत् ।

एवं सदाशिवस्य हृदयाम्बुजे साम्बशिवविग्रहाविर्भावभावना-पक्षे तस्य सदाशिवहृदयाम्बुजेऽवस्थापनं स्वाभिमुखीकरणमित्यादि सर्वमुपपद्यतेतराम् । शरीरशरीरिणोरभेदप्रतिरूपममृतीकरणं तु साम्बशिवविग्रहाविर्भावपक्ष एवोपपद्यते । स्वाभिमते लिङ्गादावावाहिते सदाशिवविग्रहे पूजार्थमभिव्यक्तिं प्रार्थयमानस्य (ईशानवक्त्रस्य) पूजकस्यानुग्रहार्थं शिवाभिन्नसच्चिदानन्द एवाचिन्त्याद्भुततदीयशक्तिमहिम्ना करकमौक्तिकाद्याकारेण जलबिन्दुरिव

सकलावयवसम्पूर्णसाम्बशिवविग्रहाकारेणाभिव्यज्यत इति शिव-पुराणादिमर्यादा । एवं चिदानन्दाकार परमशिवविग्रहप्रभाधवलितरूपादेव नानावर्णाष्टत्रिंशत्कलामयस्यापि सदाशिवविग्रहस्य स्फटिकवर्णत्वभावनोपपद्यते । सदाशिवस्य तत्पुरुषादिवक्त्राणां पीतनीलसितारुणवर्णत्वं तु पूर्वादिदिक्पतीनामिन्द्रयमवरुणकुबेराणां तत्तत्कार्योपयोगि पीतनीलसितारुणवर्णस्थिरीकरणार्थं तत्तद्वर्णानुकारप्रयुक्तम् । एवंरूपे परमशिवस्यावाहने क्रियमाणे ऊर्ध्वाभिमुखस्य सदाशिवेशानवक्त्रस्य तत्पुरुषवक्त्रवदाविसर्जनं प्राङ्मुखत्वं भावनीयम् । एवमावाहनाद्यमृतीकरणान्तसंस्कारं साम्बशिवविग्रहाभिव्यक्तिपक्षे सदाशिवमूर्तिमध्य एव कर्तव्यम् । तत्रैव परमशिवस्याम्बिकायाश्च प्रत्येकं [1]पदार्थानुसमयक्रमेण पाद्याद्युपचाराश्च कर्तव्याः । सदाशिवमूर्तौ परमशिवचैतन्यमात्रावाहनपक्षे तदावाहनानन्तरं पाद्यादि, मनोन्मनीमूर्तावम्बिकामावाहनादिभिः संस्कृत्य पाद्याद्युपचारैः पूजयेत् ॥

### पाद्यादिप्रकारः

वामहस्ते सत्रिपदीकं पाद्याचमनार्घ्यपात्राण्युत्क्षिप्य पाद्यमीश्वरतत्त्वान्तं, आचमनं सदाशिवतत्त्वान्तं, अर्घ्यं शिवतत्त्वान्तं च विभाव्य पाद्यादिकं पूजकस्येश्वरसदाशिवतत्वप्रापकं च ध्यात्वा मूलाधारादुत्थितं प्रासादादिमन्त्रं पाद्यादिक्रमेण भ्रूमध्यब्रह्मरन्ध्रद्वादशान्त[2]पर्यन्तमीश्वरं विभावयन् हां हौं शिवायेति मन्त्रक्रमेण नमः स्वाहास्वधान्तमुच्चारयन् सद्योजातादिक्रमेण सपुष्पेणोत्तानेन दक्षिणकराङ्गुष्ठमध्यमानामिकाग्रेण श्रीपादयोः सव्यवामक्रमेण पाद्यं मुखेषु तत्पुरुषादिक्रमेणाचमनं मूर्धस्वीशानादिक्रमेणार्घ्यं च दद्यात् । ततः सुगन्धि पुष्पं ज्ञानमयं शिव-

---

[1] पाद्याद्युपचारकरणे—पदार्थानुसमयः काण्डानुसमयश्चेति द्विः प्रकारः । तत्र आवाहितदेवतासु सर्वासु एकैकोपचारस्य क्रमेण करणं पदार्थानुसमयः । एकस्यां देवतायां विशिष्टमुपचारं कृत्वानन्तरं द्वितीयस्यां, एवं तत्र तत्र विशिष्टस्य करणं काण्डानुसमयः.

[2] पर्यन्तमुच्चरन्तं विभावयन्—पा.

सायुज्यहेतुकं च [1]दत्त्वा मन्त्रं द्वादशान्तोपरिस्थितशिवपर्यन्तमुच्चरन्तं विभाव्य वौषडन्तमन्त्रेण मूर्धस्वीशानादिक्रमेण निवेदयेत्। अम्बिकाया अपि पाद्यादिकं तत्र तत्रैव समये पदार्थानुसमयेन दद्यात्। एवं गन्धादिष्वपि द्रष्टव्यम्। तत्र शिवायै नमः शिवायै स्वधेत्यादयो मन्त्रा इति विशेषः। ततः स्वाहान्तमूलेन धूपदीपौ पूर्वोक्तप्रकारेणाचमनार्घ्ये च शिवाभ्यां दत्वा [2]अस्त्रमन्त्रेण पीठिकाधोभागं [3]वामहस्तेन स्पृशन्नेव दक्षिणहस्तेन पुष्पं गृहीत्वा तेन पुष्पेण पूर्वार्चितमपोह्य तत्पुष्पं च विसृज्य पूर्वोक्तप्रकारे[4]णाघमर्षणादिकं सर्वं मनसा विभाव्य [5](सर्वं कुर्यात्। यत्र यत्र करद्वयसाध्यं कर्म प्रतिपाद्यते तत्र मानसमेवेति करपीठपूजाविरोधो नास्तीत्यवगन्तव्यम्। तथा च पूर्वतन्त्रे मार्तिकसान्नाय्यादौ मानसमेवेति सिद्धान्तः। एवमुत्तरत्राप्यवगन्तव्यम्) हां शिवतत्त्वाय नम इत्यर्घ्योदकबिन्दुना संस्नाप्य पूर्ववत्पाद्याचमनार्घ्याणि दत्त्वा स्वाहान्तमूलेन वस्त्रद्वयमुपवीतद्वयं च साचमनं दत्त्वा (पुष्पाञ्जलिः) हां आत्मतत्त्वाधिपतये शिवाय नमः, हां विद्यातत्त्वाधिपतये शिवाय नमः, हां शिवतत्त्वाधिपतये शिवाय नमः, इति पुष्पाञ्जलित्रयं शिवायै नम इति देव्यै च पुष्पाञ्जलिं कृत्वा सम्पादितैर्मनसा विभावितैश्च हेमाम्बरकटकमकुटकर्णिकाहारकेयूरादिभिराभरणैर्नमोन्तमूलमन्त्राभ्यामलङ्कृत्य गन्धपुष्पाणि समर्पयेत् ॥

गन्धद्रव्यं—तत्र गन्धो हि मलयजघृष्टसमभागरोचनाकुङ्कुमचन्दनैलाकर्पूरकृष्णागरुदारुकुष्ठकस्तूरिकाक्षोदो वा, समभागचन्दनागरुकुष्ठकर्पूरकुङ्कुमपत्रजलोशीरक्षोदो वा, समभागेन तदर्धेन (तदर्धेन) वा कर्पूरेण युक्त-चन्दनागरुकुष्ठकुङ्कुमक्षोदो वा, समभागचन्दनागरुकर्पूरकुङ्कुमक्षोदो वा, समभागचन्दनकर्पूरमृगमदकुङ्कुमक्षोदो वा, फलस्य निष्कप्रमाणांशेन यथासंभवमात्रेण कर्पूरादियुक्तचन्दनक्षोदो वा, केवलचन्दनक्षोदो वा, केवलबिल्वखण्डक्षोदो वा, केवलकृतमालखण्डक्षोदो वा, सर्व एते गन्धाः

---

[1] ध्यात्वा—पा. [2] अस्त्रमन्त्रेणापि वस्त्रेण. [3] मनसा स्मरन्नेव—पा. [4] णार्घ्यादिकं, णाभ्यङ्गादिकं—पा. [5] चन्द्रिकायां नास्ति.

शिवस्यातिप्रीतिकराः। केवलजलघृष्टकेवलदेवदारुगन्धोऽपि कल्पपर्यन्तं शिवलोकप्राप्तिकरः। केवलबिल्वगन्धोप्यत्र महैश्वर्यप्रदायकः, परत्र शिवपदप्राप्तिकरश्च। केवलकृतमालगन्धोऽपि दीर्घायुःप्रदायकः, परत्र गाणापत्यप्राप्तिकरः। [1]एवम्भूतश्चन्दनगन्धार्चनगन्धः फलतोऽपि द्विगुणाः, शुक्लागरुश्चन्दनादष्टगुणः, ततः कृष्णागरुर्द्विगुणः, तस्माच्चतुर्गुणं कङ्कुमं, तत्र प्राग्गणितप्रकारेण कर्पूरादियोगेन पूजाविशेषः। एवम्भूतेषु गन्धेषु सम्पन्नं गन्धमर्घ्यपात्रोक्तलक्षणे पात्रे निधाय देवस्यानुलेपनोचितानि ललाटादीन्यङ्गानि भावयन् लिङ्गपीठिकापर्याप्तं लिङ्गपर्याप्तं यथालब्धं वा गन्धं हृदयमन्त्रेण समर्पयेत्॥

## पुष्पपीठिका

ततो विंशत्यङ्गुलविस्तारे अष्टाङ्गुलोत्सेधे अष्टाङ्गुलोत्सेधविस्तारपादे पार्श्वद्वयगताष्टाङ्गुलनाले नालपादरहितपिधानयुक्ते तदर्धप्रमाणे वा सुवर्णादिमये पत्रादिरचिते वा पात्रे निहितैर्मुकुलपतितशीर्णाघ्रातसजन्तुकाङ्गसंस्पृष्टलूतातन्तुवेष्टितपर्युषितवस्त्रसमाहृतत्वादिदोषरहितैः सम्यग्विशोधितैर्मोचितवृन्तैः प्रशस्तपुष्पैर्मूलमन्त्रेण मृगमुद्रयार्चयेत्। प्रशस्तानि च पुष्पाणि द्रोणवकपुन्नागमन्दारनन्द्यावर्तकरवीरार्कबकुलकुरवकलोध्रशतपत्रधुत्तूरपलाश - पाटलचम्पककृतमालकर्णिकारमुनिमातुलुङ्गार्जुनप्रियङ्गुदेवदारुतमालाग्निगन्धमरुवकाशोककुशापामार्ग भृङ्गराज पूगसरलकोविदारकदम्बाम्रमधूकजम्बुमरु हेमाकुली [2]गुल्जामुसली वेजिजाजीमल्लिका पट्टिकामालतीलक्ष्मीनिर्गुण्डीविष्णुक्रान्ति कदलीशारिबादेवतालीविकर्णी बहुपर्णी ग्रन्थिपर्णी भद्रावाजिताकमलकह्लारातसीरक्तोत्पलनीलोत्पलकुसुंभकुङ्कुमगिरिपुष्पप्रभृतीनि। तेषु शुभ्रवर्णानि पुष्पाणि सात्विकानि मुक्तिप्रदानि। अरुणवर्णानि राजसानि भोगप्रदानि। पीतवर्णानि मिश्राण्युभयप्रदानि सर्वकार्यसिद्धिकराणि पुत्रपौत्रसमृद्धिकराणि च। कृष्णवर्णानि नीलोत्पलव्यतिरि-

---

[1] एवं भूताश्चन्दनगन्धाः. [2] कुष्ठमुसली - पा.

क्तानि तामसानि वर्जनीयानि। तान्यप्यतसीकुरण्डविष्णुक्रान्त्यादीनि विशेषविहितानि पुष्टिप्रदानि। तत्र सर्ववर्णानि पुष्पाणि समाहृत्यार्चनमुत्तमम्। कृष्णवर्णैर्विना मध्यमम्। सितरक्तादिभिर्द्विवर्णैरेकवर्णैश्च पुष्पैरर्चनमुत्तरोत्तरकनिष्ठम्। मालिकास्तु प्रत्येकमेकैकवर्णैः पुष्पैर्निर्मिताः श्रेष्ठाः। अनेकवर्णपुष्पनिर्मिता मध्यमाः। पत्रपुष्पनिर्मिताः कनिष्ठाः। अर्ककरवीरपुष्पबिल्वपत्रगन्धपत्रिकापुण्डरीकशतपत्रसहस्रपत्रबकधुत्तूरद्रोणापामार्गकुशशमीकृतमालशङ्खव्याघ्रीसदाभद्राकृष्णानि निर्गुण्डीबृहतीश्वेतार्कब्रहद्द्रोणनीलोत्पलानि उत्तरोत्तरं सहस्रगुणफलानि। तत्रार्कपुष्पं दशसुवर्णदानतुल्यम्। नीलोत्पलं सहस्रसुवर्णपुष्पार्चनतुल्यम्। विष्णुक्रान्तिश्यामाप्रियङ्गुनृपपुण्ड्रपुष्पादीनि अर्कपुष्पसमानि। नन्द्यावर्तविजयशतपत्रमन्दारचूतमधूकश्वेतगिरिकर्णिकामालतीकदलीशारिवादिपुष्पाणि करवीरसमानि। लक्ष्मीसहदेवीनागदन्तीचम्पकादीनि बिल्वपत्रसमानि। पाटलबकुलादीनि पद्मसमानि। जातिमल्लिकामधूकशङ्खनागसूर्यावर्तसिंहकेसरमहाभद्रादिपुष्पाणि अपामार्गसमानि। जपाकदम्बपुन्नागपुष्पादीनि द्रोणसमानि। अशोकश्वेतमन्दारपुष्पाणि यवगोधूमनीवारशालिवैणवतिलकमुद्गनिष्पावोशीरमाषाङ्कुराणि सप्तदिनप्रवृद्धानि च कृतमालपुष्पसमानि। वज्रपद्मरागमरकतमौक्तिकेन्द्रनीलमहानीलसूर्यकान्तेन्दुकान्तानि पुष्पाणि [1](सहस्रसुवर्णपुष्पाणि) करवीरनीलोत्पलसमानि। नीलोत्पलं सर्वोत्तममिति सर्वागमसिद्धम्। क्वचिदागमे करवीरम्, अन्यत्र बकपुष्पं, अपरत्र गिरिपुष्पं, सर्वोत्तरमित्युक्तम्। पद्मं सर्वोत्तममिति केचित्। कालविशेषेण पुष्पविशेषप्राशस्त्यम्। यथा कदम्बचम्पककह्लारपुन्नागकुशबृहतीपुष्पाणि वसन्ततौ शिवपूजायामश्वमेधफलप्रदानि। ग्रीष्मे पाटलीमल्लिकाशतपत्रपुष्पाण्यग्निष्टोमतुल्यानि। प्रावृषि कमलमल्लिकापुष्पाणि अश्वमेधसदृशानि। शरदि धुत्तूरकह्लारसुजातनीलोत्पलानि सत्रयागफलप्रदानि। हेमन्ते करवीरसुजातनीलोत्पलानि शतक्रतुसमानि। शिशिरे कर्णिकारपुष्पं सर्वक्रतुफलप्रदम्। तथा ज्येष्ठादिषु द्वाद-

[1] क्वचिन्न दृश्यते.

शसु मासेषु अर्कबिल्वापामार्गद्रोणनीलोत्पलपङ्कजकृतमालबृहती-व्याघ्रीशमीचम्पकपाटलीपुष्पाणि प्रशस्ततमानि। तथा नन्द्यावर्त-श्रियावर्तश्वेतार्कश्वेतकमलपलाशपुन्नागमालतीपट्टिकारक्तागस्त्यब-कुललक्ष्मीद्विकण्टीवेजिकापाटलपलाशाशोककदलीशङ्खिनीपुष्पाणि प्रातःकालपूजायां प्रशस्तानि। द्रोणकरवीरकृतमालधुत्तूरव्याघ्री-बृहतीपाटलकमलोत्पलचम्पककुरण्टपुष्पाणि मध्याह्नपूजायां प्रश-स्तानि। चम्पकधुत्तूरमालतीमल्लिकावेजिक (वलकर्णिसहभद्रा) भद्रामौसल्यतसीशमीशङ्खपुष्पाणि गन्धपत्रं च सायंपूजायां प्रशस्तानि। जातीनीलोत्पलकनककदम्बस्थलकमलकेतकपूगपुन्नाग-दन्तीह्रीबेरबिल्वपत्रं चार्धरात्रपूजायाम्। कनककदम्बजातीपुष्पाणि रात्रावेव समर्पणीयानि। माधवीआनन्दयूथिकामदयन्तिकाशिरीष-सर्जबन्धूकविभीतककुमुददाडिमलाङ्गलीश्रीपर्णीकार्पासनिम्बकूष्मा-ण्डशाल्मलीशिन्दितवोटगिरिवटमत्स्याक्षिकपित्थतिन्त्रिणीपुष्पाण्ये-तानि वर्जनीयानि। केतकीनिषेधोऽर्धरात्रव्यतिरिक्तविषयः। एवं कदम्बशिरीषयोर्दिवाविषयः। गिरिकर्णिकानिषेधो नीलगिरि-कर्णिकाविषयः। किंशुकनिषेधः कण्टकीकिंशुकविषयः। एवं जपावकुलादीनामपि क्वचिद्विहितानामागमान्तरे निषेधस्य फल-भेदानुसारिणा पूजाभेदेन वा तत्तत्पूर्वाचारप्राप्ततत्तदागमानुसारि-पूजाभेदेन वा पूजनीयमूर्तिभेदेन वा व्यवस्था द्रष्टव्या। निषि-द्धान्यपि पुष्पणि मण्टपालङ्कारादिषु ग्राह्याणि। अत्यन्तभक्तस्तु विहितपुष्पालाभे शिवार्पितमनसा शिवस्वरूपतया सर्वाणि पुष्पा-ण्याकलयन् मनसि सकलफलपुष्पं सोपस्करसमवधानं मानसव्या-पारसम्बन्धि कृत्वा यथाशास्त्रं यथासामग्रि यथामन्त्रमेवार्चितमिति निश्चिनुयात्। निश्चयस्यैव फलदातृत्वं कामिकादौ स्पष्टमेवोक्तम्। चर्यापादे—

शिवपूजाविधौ भक्तः स्वशक्त्यनुगुणार्चितम्।
पुष्पं फलं च सामग्रीं परिपूर्णां विभावयेत्॥
भक्त्यैव परिपूर्णायां पूजायां फलदायकः।
अहं देवि समस्तानां भक्तानां भक्तिवर्धनः॥

मद्भक्तिचिह्नान्येतानि श्रुणु देवि वरानने।
शिवमन्त्रैकनिष्ठा च शिवागमविचारणम्॥

भस्मरुद्राक्षसम्पत्तिरन्यलिङ्गविवर्जनम् ।
शैवैः शैवागमार्थज्ञैः सहवासः सदात्मनः ॥

शिवेतिवर्णवाचालः सर्वेष्वर्थेषु नित्यशः ।
अर्थज्ञो वाप्यनर्थज्ञः स मुच्येत [1]भवाघतः ॥

वाचा शैवोऽथ डम्भेन यो वा को वा न तत्वतः ।
[2]तन्तानिकं विजानीयान्निकृष्टं तं न भावयेत् ॥

य एवं भावयेद्भक्तस्तद्रूपोऽहं महेश्वरि ।
यः स्वयं भक्तियुक्तोऽपि शैवं वाङ्मात्रतो जनम् ॥

अधमं मन्यते तत्र भक्तिर्व्यर्थो महेश्वरि ।
तस्माद्भक्तियुतो मर्त्यः स्वसमं न्यूनमेव वा ॥

अधमं वापि रुद्राक्षभस्ममात्रविभूषणात् ।
उत्तमोत्तमरूपेण पश्येत्सर्वं स भक्तिमान् ॥

यस्त्रिपुण्ड्रं नैव धत्ते न वा रुद्राक्षमालिकाम् ।
भक्तियुक्तोऽपि मद्द्रोही सर्वकर्मबहिष्कृतः ॥

मल्लाञ्छनजने द्रोही मद्द्रोही स वहिष्कृतः ।
समस्तयातनाभोगी चण्डालः कोटिजन्मसु ॥

श्वानयोनिमनुप्राप्तः पूयविष्ठाशनो भवेत् ।
मद्द्रोहिदर्शनं नैव कार्यं [3]स्वक्षेममिच्छता ॥

शिवभक्तेन विधिना कृतसर्वसुरार्चनम् ।
[4]अशैवदर्शनं सन्ति पूजाकाले न निष्कृतिः ॥

समस्तयातनाभोगी चण्डालः कोटिजन्मसु ।
पूजाकालेऽन्यकाले वा मदनुग्रहमिच्छता ॥

भाषणं दर्शनं नैव कार्यं मद्द्रोहिणा सह ।
यदि चेद्भाषणं प्राप्तं बलाद्दैववशेन वा ॥

तदा शैवजनं कंचित्पुरस्कृत्यैव तं वदेत् ।
ईक्षेत तन्मुखं नैव मदनुग्रहमिच्छता ॥

---

[1] भवागतः-पा. [2] तन्त्रन्त्रिकं-पा. [3] मत्प्रीतिमिच्छता-पा, [4] इत्थमेव मातृकासु दृश्यते.

अशैववर्जनं चाद्यं मम भक्तस्य लाञ्छनम् ।
द्वितीयं भस्मरुद्राक्षभूषितेषु स्वकीयता ॥

स्वजातिर्वान्यजातिर्वा यो वा को वा विभूतिधृक् ।
तं शिवं भावयेत्तुच्छबुद्धिस्तत्र भयावहा ॥

अशैवदर्शनाघस्य निवृत्त्यै बिल्वपत्रकैः ।
अष्टोत्तरशतैर्वापि सहस्रैर्वा यजेच्छिवम् ॥

भाषणे त्रिसहस्रं स्यात्स्पर्शने लक्षमेव च ।
सकृच्चेद्दशकृत्कुर्वन्भुक्तद्विगुणपूजया ॥

पूजकस्य च भक्तस्य देहं मद्देहमेव तत् ।
निषिद्धवर्जनादेव विहितार्चनजं फलम् ॥

निषिद्धाचरणादेव विहितार्चननाशनम् ।
तस्माद्भक्तः प्रयत्नेन त्यजेन्मद्द्रोहिदर्शनम् ॥

अशैवदर्शनाभाषणस्पर्शनदोषनिवर्तकानि पत्रेषु बिल्वारग्वधचम्पक दर्भदूर्वापामार्ग करवीरनन्द्यावर्तशमीसमादानविष्णुक्रान्ता भद्रामहाभद्रजातीजम्बुकदम्बकचूतपलाशमुनिद्वयाङ्कोलकुरण्टगि-- रिकार्णिकाद्वय रुद्रपर्णी भूतपद्महीवेरदमन मरुवकद्रोणसिन्धुवार शङ्खिनी गोक्षुरबकुल कृतमालादिपत्राणि प्रशस्तानि । पुष्पेषु नीलोत्पलवत्पत्रेषु बिल्वपत्रं प्रशस्ततमम् । आरग्वधद्रोणद्वयं प्रशस्ततरम् । येषां पुष्पाणि प्रशस्तानि तेषां पत्राण्यपि प्रशस्तानीत्येव । पद्मनीलोत्पलकुटज चम्पकजातीकरवीरनन्द्यावर्त श्रियावर्त बिल्वबृहतीद्वयपाटलीपुष्पबिल्वपञ्चकदूर्वागस्त्यगन्धपत्राकारं शिवपुष्पपत्रेषु स्वाभिमतयत्किञ्चित्पुष्पपत्राकारं वा सौवर्णं पत्रं पुष्पं चातिप्रशस्तम् । अञ्जलिपूरकैः सुवर्णपत्रैरासनमूर्तिष्वेव विद्यादेहशिवावाहनं अष्टोत्तरशतेनैकाशीत्या पञ्चाशता पञ्चविंशत्या वा सुवर्णपुष्पैः प्रतिदिनमर्चनं चासङ्ख्येयफलदम् । स्वर्णपुष्पसम्पादनाशक्तौ सुवर्णशकलैर्वा रजतपुष्पैर्वार्चनीयम् । स्वर्णपुष्पस्य नास्ति निर्माल्यदोषः । वत्सरादूर्ध्वं तन्निर्माल्यम् । वत्सरादूर्ध्वमपि पञ्चगव्येन संशोध्य पुनरर्चनीयम् । एवं नीलोत्पलपलाश-

वक करवीर गिरिपुष्प विल्वपत्राणामपि नास्ति निर्माल्यदोषः। पत्राणि पुष्पाणि च स्वारामसंभवान्युत्तमानि। यानि क्रीतानि परारामोद्भवानि पूजाकाले याचितानि पुष्पाणि तान्युत्तरोत्तरमपकृष्टानि। देवारामोद्भवानि तु वर्ज्यानि। पुष्पालाभे यानि पुष्पाणि शिवार्हाणि तेषां पत्रैरेवार्चनीयम्। पत्राणामप्यलाभे तेषां फलैरर्चनीयम्। फलेषु बीजपूर जम्बीर कदलीदाडिमादीनि अर्चनायां प्रशस्तानि। फलानामप्यभावे तिलतण्डुलसिद्धार्थैरर्चनीयम्। कृष्णतिलैः शिवार्चनं सकलपातकहरम्। एवं मूलमन्त्रेण पुष्पादिभिरभ्यर्च्य हां शिवासनाय नमः, हां-हं-हां शिवमूर्तये नमः। हां हौं शिवाय नमः। हों ईशानमूर्धाय नमः। हैं तत्पुरुषवक्त्राय नमः। हुं अघोरहृदयाय नमः। हिं वामदेवगुह्याय नमः। हं सद्योजातमूर्तये नमः। इत्यासनमूर्तिं मूलैः पञ्चब्रह्मभिश्चाष्टपुष्पिकयाभ्यर्च्य हां हृदयाय नमः इत्यादिभिरङ्गैरभ्यर्चयेत्। ततो नाम्नां सहस्रेण शतेन वाऽर्चयेत्। तदवसराभावे शर्वाय क्षितिमूर्तये नमः। भवाय जलमूर्तये नमः। रुद्रायाग्निमूर्तये नमः। उग्राय वायुमूर्तये नमः। भीमायाकाशमूर्तये नमः। पशुपतये यजमानमूर्तये नमः। ईशानायार्कमूर्तये नमः। महादेवाय सोममूर्तये नमः। शिवाय नमः। महेश्वराय नमः। रुद्राय नमः। विष्णवे नमः। पितामहाय नमः। संसारवैद्याय नमः। सर्वज्ञाय नमः। परमात्मने नमः। इति वा नामाष्टकेनार्चयेत्। प्रभवे नमः शम्भवे नमः उमापतये नमः। इति नामत्रयेण वार्चयेत्। नमो नीलकण्ठाय नम इति नाम्नैकेनाभ्यर्च्य यथासम्भवं पुष्पमालिकाभिरप्यलङ्कुर्यात्। मालिकाश्च शतादिसुवर्णपुष्परचिताः सहस्रादिनीलोत्पलरचिताः करवीरसिताम्भोजविजयासितपाटलपुन्नागश्वेतमन्दार नागकेसर चम्पकरचिताः प्रशस्ताः। ताश्च विचित्रपुष्पान्तररचितमालिकाश्च [1]दामधारपार्श्वयोः समृद्धा बद्ध्याः। लिङ्गनाहे तु मणिसुवर्णनिर्मितं पुष्पनिर्मितं वा एकद्वित्रिचतुरभूमिकं [2]मुण्डाख्यं वृत्तदाम समर्पणीयम्॥

---

[1] उमाधार. [2] मिण्डाख्यं प्रवृत्तदाम.

## धूपोपचारक्रमः

एवं पुष्पोपचारानन्तरं धूपोपचारः। तत्प्रकारः। सुवर्णरजतताम्रारकूटान्यतमनिर्मितं चतुरङ्गुलायतं तदर्धमानोत्सेधमष्टाङ्गुलोष्ठं पश्चाद्भागे पञ्चदलाङ्कितद्व्यङ्गुलकण्ठद्व्यङ्गुलोन्नतसुवृत्तखुराकारपादं द्व्यङ्गुलनाहेन पूर्वोक्तलक्षणपादयुतेन वक्रनालेन समन्वितं अनेकसुषिरेण एकैकसुषिरेण वा कमलमुकुलाकृतिना पिधानेनान्वितं धूपपात्रं निर्मलेन [अङ्गार] फलवह्निनाऽऽपूर्य तस्मिन् धूपद्रव्यं निक्षिप्य धूपपात्रं पिधाय निरीक्षणादिभिः संस्कृत्य गन्धपुष्पैरभ्यर्च्य धूपमुद्रां प्रदर्श्य धूपपात्रं दक्षिणहस्तेनादाय वामहस्तेन शुद्धकांस्यनिर्मितां चतुःपञ्चषडङ्गुलान्यतमोत्सेधां तावदायामां तावन्मानजिह्वां तत्त्रिगुणनासामर्धाङ्गुलोष्ठामुपपट्टिकायुक्तामेकाङ्गुलद्व्यङ्गुलसार्धद्व्यङ्गुलशिखामर्धाङ्गुलकण्ठां त्र्यङ्गुलनाहां-त्रिचतुःपञ्चषडङ्गुलदैर्घ्यनालामुपरि शूलपद्मवृषभाङ्कां शङ्खचक्रव्यतिरिक्तचिह्नां वा घण्टां घोषयन्नेव देवस्य घ्राणसमीपे ओं हां हौं शिवाय धूपं स्वाहेति धूपं प्रदर्श्य तदुपरि धूपपात्रमुद्धृत्य तद्भ्रामयन्नेव किरीटे बिन्दुद्वयान्वितपार्श्वदण्डाकारं नादं मुखवृत्ते बिन्दुदेहे हकारं बाह्वोरौकारं पादयोरुकारं च धूपपात्रभ्रमणेन भावयेत् ॥

## धूपद्रव्यम्

कर्पूरागरुचन्दनतक्कोलजातीफललवङ्ग[1]सिंहकजटामांसीमुस्तापत्रचूर्णं दशाङ्गसमेत चन्दनागरु कर्पूरकुङ्कुमकस्तूरी तक्कोलैलालवङ्गपत्रनागपुष्पचूर्णं यक्षकर्दमाख्यम्। चन्दनागरुकर्पूरैलालवङ्गत्वक्पत्र[1]सिंहक जटामांसीचूर्णं प्राजापत्यनामकम्। चन्दनागरु कर्पूरकस्तूरीलवङ्गतिलकहसितामुस्ताचूर्णं विजयाख्यम्। कर्पूरकृष्णागरुह्रीबेरकुङ्कुमकुष्ठनिर्यासचन्दनचूर्णं क्रमादेकद्वित्रिचतुः—पञ्चषट्भागं मधुमिश्रं शीतारिनामकम्। चन्दनागरुकर्पूरसिल्हकसर्जरसकुष्ठमुस्ताचूर्णं (विजयाख्यं कर्पूर) कल्याणनामकम्। चन्दनागरुकस्तूरीमुस्तासिह्लकचूर्णममृताख्यम्। तक्कोलपूगकर्पूरजाती-

---

[1] सिल्हक.

फललवङ्गचूर्णं सुगन्धाख्यम् । एवमादीनि पृथक्पृथङ्नाम्ना प्रसिद्धानि धूपद्रव्याणि । इत्थं चन्दनागरुकर्पूरकुष्ठगुग्गुलचूर्णं घृतमधुयुक्तं चन्दनागरुकर्पूरकुष्ठचूर्णं शर्करामधुघृतयुक्तं कर्पूरागरुचन्दननिर्यासचूर्णं क्रमादेक चतुष्षट्सप्तभागं अगरुनिर्यासचन्दनचूर्णं क्रमादेकद्वित्रिगुणमीषत्कर्पूरमिश्रं मधुयुक्तं अगरुचन्दनोशीरचूर्णं मधुयुक्तं कुष्ठचन्दनचूर्णं घृतयुक्तं गुग्गुलविल्वफलचूर्णं गुग्गुलचूर्णं घृतयुक्तं केवलमेव वा गुग्गुलनिर्यासं चन्दनागरुसौगन्धिकाद्यन्यतमचूर्णं च धूपद्रव्यम् । तत्र केवलगुग्गुलधूपः सप्तजन्मकृतपापहरः । चन्दनधूपः सर्वपापहरः । सौगन्धिकधूपः सर्वकामार्थसाधकः । कृष्णागरुधूपः सर्वपापहरः । श्वेतागरुधूपो मुक्तिप्रदः । लाक्षाकस्तूरीधूपश्चतुर्वेदाध्यायिब्राह्मणजन्मप्रदः । घृतमिश्रगुग्गुलधूपो मासार्धसमर्पितः कल्पकोटिसहस्रपर्यन्तं शिवपुरभोगस्य सार्वभौमजन्मनश्च प्रापकः । द्विसहस्रफलमहिषाक्षगुग्गुलधूपः तमालवृक्षचूर्णेन सहितः शिवसायुज्यप्रदायकः । ईशानादिमुखपञ्चके क्रमात् शीतारि श्वेतागरुकृष्णागरु सौगन्धिकगुग्गुलकृतधूपाः प्रशस्ताः ॥

## दीपोपचारक्रमः

एवं धूपोपचारानन्तरं दीपोपचारः । तस्य पात्रं धूपपात्रोक्तपादनालसहितं त्र्यङ्गुलप्रमाणं गजोष्ठाकारं च । वर्तिः कर्पूरमयी वस्त्रखण्डमयी तन्तुखण्डमयी कार्पासमयी वा चतुरङ्गुलदीर्घा चतुस्त्र्येकाङ्गुलज्वालानुगुणपरिणाहा कार्या । वस्त्रखण्डादिमयी चेदुत्तमादिक्रमेण सति संभवे कर्पूरागरुचन्दनचूर्णादिगर्भा कार्या । तत्र च कपिलाघृतमुत्तमम् । गवान्तरघृतं मध्यमम् । अजाघृतं तिलतैलं चाधमम् । उष्ट्रीमहिष्यादिघृतं वृक्षबीजादिभवं च वर्जनीयम् । यद्वा गोघृतमात्रमुत्तमम् । अजाघृतं महिषीघृतं च मध्यमम् । पूतिगन्धिनिम्बकरञ्जैरण्डादितैलं वर्जनीयम् । तैलमात्रमधमम् । एवमुक्तलक्षणपात्रविहितवर्त्यारोपितं दीपं निरीक्षणादिभिः संस्कृत्य गन्धपुष्पैरभ्यर्च्य दीपमुद्रां प्रदर्श्य दीपपात्रमुद्धृत्य घण्टां घोषयन्नेव

ह्रां ह्रौं शिवाय नमः दीपं स्वाहेति नेत्रेषु प्रदर्श्य धूपपात्रवत् किरीटादिपादान्तं तत्तद्वर्णविन्यासभावनया दीपपात्रं भ्रामयेत्। ततः शिवायाचमनीयार्घ्ये च पूर्ववदेव दत्वा देवं सन्तुष्टं ध्यात्वा "भगवन्नाज्ञां देहि [1]भोगाङ्गानि पूजयामि" इति विज्ञाप्यावरणपूजां कुर्यात्॥

## आवरणपूजा

प्रथमावरणम्—

पञ्चब्रह्मषडङ्गैः प्रथमारवणं, विद्येश्वरैर्द्वितीयं, गणेश्वरैस्तृतीयं, लोकपालैश्चतुर्थं, [2]समस्तायुधैः पञ्चमं, एतानि पञ्चावरणानि शिवासनपद्मस्य कर्णिकायां शिवमभ्यर्च्य तस्य दलमूलेषु दलमध्येषु दलमूलाग्रयोर्मध्येषु दलाग्रेषु तदधोभागेषु च पूजयेत्। यद्वा शिवासनपद्मदलमूलरूपेषु लिङ्गमूलभागेषु तद्दलाग्ररूपेषु पीठोपरिदेशाग्रभागेषु पीठकण्ठे पीठपादे ब्रह्मशिलास्थानीये पद्मपीठे चार्चयेत्। ह्रौं ईशानमूर्धाय नमः। स्फटिकवर्णं त्रिशूलाभयपाणिमुमासहितमीशानं पूजयामि। ह्रैं तत्पुरुषवक्त्राय नमः। कनकवर्णं पीताम्बरोपवीतं मातुलङ्गाक्षसूत्रधारिणं गौरीसहितं तत्पुरुषं पूजयामि। ह्रुं अघोरहृदयाय नमः। मेघवर्णं वभ्रुश्मश्रुशिरोरुहं दंष्ट्राकरालवदनं सर्पवृश्चिककपालमालाभरणं खट्वाङ्गकपालखेटपाशान्वितवामकरचतुष्टयं त्रिशूलपरशुखड्ग दण्डान्वितदक्षिणकरचतुष्टयं गङ्गासहितमघोरं पूजयामि। ह्रिं वामदेवगुह्याय नमः। अरुणमरुणमाल्यवस्त्रोपवीतं खड्गखेटधरं गणाम्बिकासहितं वामदेवं पूजयामि। ह्रं सद्योजातमूर्तये नमः। धवलवर्णं धवलस्रग्गन्धवस्त्रोष्णीषाम्बरधरं वराभयकरमम्बिकासहितं सद्योजातं पूजयामि। इति क्रमादीशानेन्द्रयमकुबेरवरुणदिक्ष्वीशानादितत्तत्पूजावेलायामूर्ध्ववक्त्रहृदयगुह्यपादरूपत—

---

[1] भो ङ्गानि—पा. [2] तदायुधैः—पा.

त्तत्स्थानमङ्कुशमुद्रयाकृष्य दीपं [1]तत्प्रवर्तितं दीपरीत्याऽभिन्नान् भावयित्वार्चयेत्। ईशानाद्याः पञ्चापि शूलटङ्कवराभयमनोहरकर[2]चतुष्टया वा ध्येयाः। एवमागमान्तरप्रसिद्धान्यपि तेषां ध्यानानि द्रष्टव्यानि। ह्रां हृदयाय नमः। ह्रीं शिरसे नमः। ह्रूं शिखायै नमः। ह्रैं कवचाय नमः। ह्रौं नेत्रत्रयाय नमः। ह्रः अस्त्राय नम इति चन्द्रचामीकरसिन्दूर भृङ्गविद्युदग्निवर्णान् पद्मासनस्थानर्धेन्दुमकुटधारिणश्चतुर्वक्त्रान् प्रतिवक्त्रं त्रिलोचनान् कपालशूलवराभयहस्तान् वामिनी नीलिनी चक्रिणी शङ्खिनी गङ्गिनी शक्तिसहितान् हृदयशिरश्शिखाकवचदेवान् पूजयामीति हृदयशिरःशिखादितत्तत्स्थानेभ्योऽङ्कुशमुद्रया समाकृष्याग्नेयनैरृतवायव्येशानकोणस्थदलेषु पूर्वादिचतुर्दलान्यग्रेष्वस्त्रं च पूजयेत्। ईशानादिदले ब्रह्मस्वीशानमङ्गेषु नेत्रे शिरसि च क्रमेणोत्तरोत्तरदिक्स्थतया पूजयेत्। अथ वा [3]कर्णिकास्थदेवस्य पुरस्तादीशानं नेत्रं च पूजयेत्। नेत्रमस्त्रवद्दिक्षु वा पूजयेत्॥

अथ द्वितीयावरणम्—

अनन्ताय भूमिसहिताय नमः। सूक्ष्माय स्वाहासहिताय नमः। शिवोत्तमाय स्वधासहिताय नमः। एकनेत्राय क्षान्तिसहिताय नमः। एकरुद्राय पुष्टिसहिताय नमः। त्रिमूर्तये श्रीसहिताय नमः। श्रीकण्ठाय कीर्तिसहिताय नमः। शिखण्डिने मेधासहिताय नम इति [4]हेमाग्निशङ्खेषु हेमविद्रुमस्फटिकवर्णान् वरदाभयज्ञानरुद्राक्षमालिकाधारिणस्त्रिणेत्रान् शिवज्ञानावतारकान् स्वस्वशक्तिसहितान् विद्येश्वरान् पूजयामीति पूर्वाद्यैशानादिक्रमात् दिग्विदिक्षु पूर्वादीशानादिकोणान्तेषु वा पूजयेत्। कुण्डलिनीसहिताय नन्दिकेश्वराय नमः। अरुणवर्णं त्रिशूलसूत्रवराभयकरं कुण्डलिनीसहितं नन्दिनं पूजयामि। पद्मिनीसहिताय महाकालाय नमः। पीतकृष्णवर्णं बभ्रुश्मश्रुशिरोरुहं शूलकपालखड्गखेटधारिणं पद्मिनीसहितं महाकालं पूजयामि।

---

[1] दीपात्प्रवर्तितप्रदीप—पा. [2] चतुर्थ्ये वा—पा. [3] कर्णिकायां देवस्य च—पा.
[4] हेमाग्निमेघसङ्घेषु, हेमाग्निमेघभृङ्गेषु.

ह्लादिनीसहिताय भृङ्गिणे नमः। श्वेतवर्णं निर्माल्यविग्रहं [1]दण्डाक्षसूत्रधरं विलसच्छिखं शिवालोकनतत्परं ह्लादिनीसहितं भृङ्गिणं पूजयामि। भृङ्गिणीसहिताय गणपतये नमः। रक्ताङ्गं पाशाङ्कुशदन्तपक्वाम्रफलधारिणं भृङ्गिणीसहितं गणपतिं पूजयामि। भद्रासहिताय वृषभाय नमः। स्फटिकवर्णं धर्मस्वरूपं शिवध्यानपरं भद्रासहितं वृषभं पूजयामि। देवयानीसहिताय स्कन्दाय नमः। कनकवर्णं बालवेषं शक्तिकुक्कुटवराभयहस्तं देवयानीसहितं स्कन्दं पूजयामि। अम्बिकायै नमः। श्यामवर्णां सिंहवाहनां शूलादर्शकरद्वयां उमां पूजयामि। रूपिणीसहिताय चण्डेश्वराय नमः। मेघवर्णं चतुर्वक्त्रं कमण्डल्वक्षसूत्रशूलपरशुधारिणं सर्पकङ्कणोपवीतं रूपिणीसहितं चण्डेश्वरं पूजयामीति पूर्वादीशानकोणपर्यन्तमर्चयेत्॥

यद्वा वृषनन्दिकेश्वरगणेशमहाकालस्कन्दभृङ्गिगौरीचण्डान् नन्दिगणपतिमहाकालभृङ्गिवृषस्कन्दगौरीचण्डान्वा पूर्वादिक्रमेण पूजयेत्॥

अथवा गौरीचण्डेश्वरनन्दिमहाकालगणेशवृषभृङ्गिस्कन्दा वा गौरीचण्डेशमहाकालवृषगणेशस्कन्दभृङ्गिणो वा उत्तरादिक्रमेण पूजनीयाः। उमावृषभगणपतिनन्दीशमहाकालभृङ्गिचण्डस्कन्दाः क्रमात्कुबेरशक्रयमवरुणनिरृतिवाय्वीशानाग्निदिक्षु वा पूजनीयाः। एतेषां ध्यानभेदाश्च तत्तदागमप्रसिद्धा द्रष्टव्याः॥

एवं गणेश्वरैस्तृतीयावरणं संपूज्य लोकपालैश्चतुर्थावरणमर्चयेत्। इन्द्राय शचीसहिताय नमः। स्वर्णवर्णमैरावतारूढं वज्राङ्कुशवराभयपाणिं शचीसहितमिन्द्रं पूजयामि। अग्नये स्वाहासहिताय नमः। रक्तवर्णं कमण्डल्वक्षसूत्रशक्तिवरमुद्रान्वितं मेषारूढं स्वाहासहितमग्निं पूजयामि। यमाय कालकण्ठीसहिताय नमः। कृष्णवर्णं दण्डपाशवराभयधारिणं महिषारूढं कालकण्ठीसहितं यमं पूजयामि। डाकिनीसहिताय निरृतये नमः, रक्तवर्णं खड्गखेटवराभयधारिणं भूतारूढं [2]डाकिनीसहितं निरृतिं पूजयामि। वरुणाय भोगिनीसहिताय नमः। चन्द्रवर्णं पाशकमलवराभयकरं

---

[1] शूलकपालदण्डाक्षसूत्रधरं, दण्डाक्षसत्रधरशिखं. [2] दाहिनी–पा.

मकरारूढं भोगिनीसहितं वरुणं पूजयामि। वायवे घोरासहिताय नमः। धूम्रवर्णं ध्वजकमलवराभयधारिणं मृगारूढं घोरासहितं वायुं पूजयामि। कुबेराय [1] गम्भिनीसहिताय नमः। पिङ्गलवर्णं गदादिधारिणं अश्वारूढं [2] गम्भिनीसहितं कुबेरं पूजयामि। ईशानाय हर्षिणीसहिताय नमः। चन्द्रवर्णं शूलपाशवराभयकरं त्रिणेत्रं वृषभारूढं हर्षिणीसहितमीशानं पूजयामि। इति प्रागादिक्रमेण पूजयेत्। ब्रह्मणे सावित्रीसहिताय नमः। स्वर्णवर्णं चतुर्वक्त्रं कमण्डल्वक्षसूत्रस्रग्दण्डधारिणं हंसारूढं सावित्रीसहितं ब्रह्माणं पूजयामि। विष्णवे लक्ष्मीसहिताय नमः। विद्युद्वर्णं सहस्रफणालङ्कृतमनन्तरूपं शङ्खचक्रगदाशक्तिकमलधारिणं कूर्मारूढं लक्ष्मीसहितं विष्णुं पूजयामीति इन्द्रेशानमध्ये निरृतिवरुणमध्ये च विधातृवैकुण्ठौ पूजयेत्। यद्वा यमस्योत्तरभागे कुबेरस्य दक्षिणभागे च तौ पूजयेत्॥

पञ्चमावरणम्—

अथ लोकपालायुधैः पञ्चमावरणम्। प्रसन्नात्मशक्तिसहिताय वज्राय नमः। नानावर्णधरं दृढकर्कशविग्रहं वज्रमूर्धानं दीप्तं प्रसन्नात्मसहितं वज्रं पूजयामि। शक्तये नमः। अरुणवर्णां वराभयकरां शिरसा शक्तिं बिभ्राणां योषिदाकारां शक्तिं पूजयामि। कोपात्मशक्तिसहिताय दण्डाय नमः। कृष्णवर्णं वराभयकरं लोहितलोचनं दण्डमूर्धानं कोपात्मशक्तिसहितं दण्डं पूजयामि। गुणात्मशक्तिसहिताय खड्गाय नमः। श्यामवर्णं वराभयकरं [3] कुण्डलोचनं खड्गालङ्कृतमूर्धानं गुणात्मशक्तिसहितं खड्गं पूजयामि। कोमलात्मशक्तिसहिताय पाशाय नमः। किंशुकपुष्पवर्णं नाभेरधो भुजङ्गाकारं तदूर्ध्वं पुरुषाकृतिं सप्तफणोपेतमूर्धानं कोमलात्मशक्तिसहितं पाशं पूजयामि। विषात्मशक्तिसहिताय ध्वजाय नमः। पीतवर्णं वराभयकरं विवृतास्यं मूर्ध्नि ध्वजान्वितं विषात्मशक्तिसहितं ध्वजं पूजयामि। गदायै नमः। पीतवर्णां योषिदाकारां

---

[1] गम्भीरिणी—पा. [2] गम्भीरिणी—पा. [3] अर्धलोचन—पा.

[1]दीप्तशिरसं गदां पूजयामि। विकृतात्मशक्तिसहिताय शूलाय नमः। श्यामवर्णं त्रिशूलाङ्कितमस्तकं अञ्जलियुतं विकृतात्मशक्तिसहितं त्रिशूलं पूजयामि। महात्मशक्तिसहिताय पद्माय नमः। शङ्खवर्णं पद्मकोशाकारमूर्धानं महात्मशक्तिसहितं पद्मं पूजयामि। मङ्गलात्मशक्तिसहिताय चक्राय नमः। श्यामवर्णं शतारचक्राङ्कितमस्तकं मङ्गलात्मसहितं चक्रं पूजयामि। इमे चावरणदेवाः शिवाभिमुखाः शिवमम्बिकां च भक्त्या वीक्षमणाः स्वासनेषूपविष्टा ध्येयाः। द्विभुजाश्चतुर्भुजाश्चैते बद्धहस्ताञ्जलिपुटा वा ध्येयाः। एवं पञ्चावरणपूजाशक्तौ पञ्चब्रह्मषडङ्गरूपमेकमेवावरणमर्चयेत्। तेषां च ब्रह्मषडङ्गानामावाहनस्थापन सन्निधापन सन्निरोधन पाद्याचमनार्घ्यपुष्पदानाख्यं संस्काराष्टकं कार्यम्। यद्वा आवहनादिसंस्काराष्टकं समुदितमेव स्मृत्वा प्रत्येकमर्घ्यमात्रं [2]दत्वा ब्रह्मणामर्घ्यावसाने क्रमेण सुरभिपद्मत्रिशूलमकरस्रगाख्यमुद्राः प्रदर्श्याङ्गानां नमस्कारमुद्रां प्रदर्शयेत्। पञ्चब्रह्मषडङ्गपूजनाशक्तौ केवलं ब्रह्मावरणमात्रमङ्गावरणमात्रं वार्चयेत्। अथवा तत्तत्स्थाने वामादिशक्तीः पूर्वादिदिक्ष्वभ्यर्च्य सदाशिवस्याङ्के वामभागे स्थितां मनोन्मनीमर्चयेत्। इत्थमावरणार्चनानन्तरं शिवमष्टपुष्पिकयाभ्यर्च्य पाद्याचमनार्घ्याणि दत्वा मूलमन्त्रेण पुष्पं समर्पयेत्। शिवस्यावरणसद्भावकृतशोभासिद्ध्ये पञ्चब्रह्मषडङ्गादीनां शिवपृथग्भावेनार्चनायां प्रसक्तस्य पूजातामसत्वदोषस्य परिहाराय शारदशशाङ्ककोटिप्रकाशपरमामृतस्यन्दिपरमशिवमयूखजालनिमग्नतया सर्वानप्यावरणदेवान् परमशिवेनैकवर्णान् परमशिवापृथग्भूतान् भावयेत्। ततः शिवे धेनुमुद्रां महामुद्रां च प्रदर्श्य गन्धपुष्पैर्घण्टामस्त्रमन्त्रेणाभ्यर्च्य सावरणाय देवाय धूपदीपौ प्रदर्शयेत्। एवमावरणार्चनं कर्तव्यं न कर्तव्यमिति विकल्पितम्, केषुचिदागमेष्वात्मार्थशिवपूजायां भोगाङ्गपूजनस्य निषिद्धत्वात्॥

---

[1] गदोपेतशिरसं–पा. [2] दत्वा क्रियापुराणाय ब्रह्म–पा, दत्वा पूरणतया ब्रह्मान्तं तत्तदर्घ्यावसाने–पा.

## नैवेद्यविधिः

अथ नैवेद्यविधिः। वीरशैवानां यत्किंचिन्निवेदनं यावन्निवेदनमिति संप्रदायद्वयम्। यावन्निवेदने जङ्गमासमर्पितस्य प्रसादत्वायोगादसङ्गतमिति मन्यन्ते। यत्किंचिन्निवेदने जङ्गमासमर्पितं यत्किंचित् दीक्षितानां दद्यात्। यावन्निवेदनेऽपि जङ्गमलिङ्गयोरभेदाज्जङ्गमसमर्पितमेवेष्टलिङ्गस्य समर्पितं भवेदित्यागमोक्ता इह न लेख्याः॥

अथ मतान्तरमाश्रित्य यावन्निवेदनप्रकारः। तत्र व्रीहिशालिप्रियङ्गुनीवारगोधूमवैणवयवाः प्रशस्ताः। तत्र व्रीहयः कनिष्ठाः। शालयो मध्यमाः। इतरे श्रेष्ठाः। तत्र प्रियङ्गुनीवारगोधूमवैणवानि शतसहस्रलक्षानन्तफलान्युत्तरोत्तराणि। यद्वा शालयः श्रेष्ठाः, यववैणवादयो मध्यमाः, व्रीहयः कनिष्ठाः। सिततण्डुलाः शालयः। इतरे व्रीहय इति भेदः। आत्मार्थपूजायां कुडवादिचतुर्द्रोणपर्यन्तमुत्तरोत्तरं प्रशस्तम्। पञ्चविंशत्युत्तरद्विशतसङ्ख्यैर्व्रीहिभिरेका शुक्तिरुच्यते। शुक्तिद्वयं तलम्। तलद्वयं प्रकुञ्चम्। प्रकुञ्चद्वयं प्रसृतिः। प्रसृतिद्वयं कुडवम्। कुडवद्वयमञ्जलिः। अञ्जलिद्वयं प्रस्थम्। प्रस्थद्वयं पात्रम्। पात्रद्वयमाढकम्। आढकद्वयं शिवम्। शिवद्वयं द्रोणम्। अथवा गुञ्जाद्वयं माषः। माषविंशतिर्निष्कम्। निष्काष्टकं पलम्। पलचतुष्टयं पादम्। पादचतुष्टयं प्रस्थम्। प्रस्थचतुष्टयमाढकम्। तच्चतुष्टयं द्रोणम्। द्रोणचतुष्टयावधिनैवेद्यार्थं सङ्कल्पितान् केशकीटादिरहितान्निर्मुक्ततुषकस्तुकणानखण्डानतिधावल्यशालितण्डुलान् प्रशस्तवर्णगन्धरसैर्वस्त्रपूतैर्जलैर्मुहुर्मुहुर्निष्पीडनपूर्वकं षट्कृत्वः षडङ्गमन्त्रैः संक्षाल्य सम्यग्वालुकादीन् संशोध्य पाकभाण्डनिहितेषु तेष्वधाधिकं जलं प्रक्षिप्य गोमयोपलिप्ते प्रोक्षिते पक्षिदर्शनादिरहिते वहिष्कृतागोचरे महानसे हृदयमन्त्रार्चितायां चुल्यां वामदेवमन्त्रेणोद्धृतं पाकभाण्डं हृदयमन्त्रेणारोप्याघोरेणाग्निं विन्यस्य मुखेन प्रदीप्य यथान्नमपक्वमतिपक्वं च न भवति तथा सावधानं पचेत्। एवं शुद्धान्नपाकः। तण्डुलद्विगुणक्षीरेण तण्डुलार्धमुद्गसहितेन वा तण्डुलत्रिगुणक्षीरेण तण्डुलचतुर्थांशमुद्गसहितेन तदुचितगुडकदलीफलसहितेन वा पायसान्नपाकः। तण्डुल-

चतुर्थांशमानतिलचूर्णेन तिलार्धमानेन तिलचतुर्थांशमानेन वा घृतेन च कृसरान्नपाकः। अथवा तण्डुलार्धमुद्गैः तिलचूर्णमिश्रैः किंचिल्लवणचूर्णयुतैश्च कृसरान्नपाकः। प्रत्येकं तण्डुलार्धप्रमाणाभ्यां क्षीरगुडाभ्यां तदर्धप्रमाणेन घृतेन च गुडान्नपाकः। अथवा तण्डुलद्विगुणक्षीरेण तण्डुलार्धगुडसहितेन गुडार्धघृतसहितेन गुडान्नपाकः। अथवा तण्डुलत्रिगुणक्षीरेण तण्डुलतृतीयांशमुद्गसहितेन तण्डुलचतुर्थांशगुडमिश्रेण कदलीफलयुतेन च गुडान्नपाकः। तण्डुलचतुर्थांशैस्तत्तृतीयांशैस्तत्समैर्वा मुद्गैर्नारिकेलखण्डसहितैस्तद्रहितैर्वा मुद्गान्नपाकः। शुद्धान्नपायसान्नकृसरान्नगुडान्नमुद्गान्नान्युत्तरोत्तरं सहस्रगुणफलानि। एवं दधिमिश्रितं मधुमिश्रितं चान्नं प्रशस्तम्। एतेष्वेकमनेकं सर्वं वा यथाविभवं च कार्यम्। नैवेद्यस्याष्टमांशेन षोडशांशेन वा मुद्गाढकीमाषराजमाषनिष्पावकुलुत्थाद्यन्यतमेन कर्तव्यम्। एवं मुद्गाद्याश्च सति संभवे निस्त्वग्दलरूपा ग्राह्याः। शाकानि [1]प्रस्थनैवेद्यद्वयप्रमाणेनैकपलप्रमाणेन वा कदलीपनसकूष्माण्डोर्वारुककारवल्लीव्याघ्रीबृहतीद्वयकोशातकीद्वयचूतनालिकेरफलादीनि शिशुकन्दवल्लीकन्दसूरणकन्दादीन्यन्यानि च प्रशस्तरसगन्धान्यार्द्राणि शुष्काणि वा यथार्हं लवणमरीचिजीरकैलाचूर्णशर्करादिसकलसंस्कारकोपेतानि घृतभर्जितानि कार्याणि। आम्लेन घनतक्रेण लवणमरीचिजीरककुलुत्थसिद्धार्थचूर्णशर्करासहितं चोष्यं कार्यम्। माषमुद्गगोधूमशालिपिष्टादिविकाराः समृद्धशर्करोपेताः कर्पूरैलादिचूर्णैर्वासिता बहवोऽपूपाः पानकादयश्च कार्याः। नैवेद्यस्य षोडशांशं द्वात्रिंशांशं चतुष्षष्ठ्यंशं वा घृतम्, घनदध्यष्टमांशम्, सर्वत्र क्षीरदधिघृतानि गव्यान्येव ग्राह्याणि। स्थालिकाः सुवर्णेन रजतेन ताम्रेण शुद्धकांस्येन वा कर्तव्याः। अष्टाचत्वारिंशदङ्गुलायामा एकाङ्गुलोत्सेधा अङ्गुलद्वयघनोष्ठवत्यश्चेदुत्तमोत्तमाः। उत्तमादिक्रमेण तु षट्त्रिंशदङ्गुलप्रभृतिद्वादशाङ्गुलपर्यन्तायामाः नवयवप्रभृत्येकयवपर्यन्तमानोष्ठवत्यः ओष्ठप्रमाणायामवेत्रवत्यस्तद्रहिता वा नवाङ्गुलायामाः, तदर्धमानाश्चातिजघन्याः। सर्वाश्च पादरहिताः सुवृत्ता-

---

[1] प्रस्थान्ननैवेद्यस्य पलद्वयप्रमाणेनैक—पा.

काराः कर्तव्याः। स्थालिकाधारास्त्रिपाद्यः पूजनीयलिङ्गपीठिकोत्सेधपर्यन्तमुन्नताः कर्तव्याः। नैवेद्यं च सर्वं शिवदीक्षासंस्कृतैः स्नातैः शुद्धवस्त्रैर्भस्मरुद्राक्षभूषितैः पवित्रपाणिभिः परिचारकैः कारयेत्। तथाभूताभिः स्त्रीभिर्वा कारयित्वा द्रव्यशुद्धिकाले पूजकस्तण्डुलक्षालनादिमन्त्रान् जपेत्। यदि कृतं नैवेद्यमपक्वमतिपक्वं कालातिपातादतिशीतलं नरैर्लङ्घितं वा स्यात्तदान्यानि पक्वानि निवेदनीयानि॥

## अथ नैवेद्यसमर्पणम्

देवाय पाद्यमाचमनीयमर्घ्यं च दत्वा देवस्य पुरतो गोमयेन चतुरश्रं मण्डलं परिकल्प्य पिष्टादिचूर्णैरलङ्कृत्य शुद्धान्नपायसान्नादिपूरिताः कदलीनालिकेरचूतपनसद्राक्षाखर्जूरादि[1]फलैरीप्सितपूरिकाकापिष्टकमोदकादिभिरपूपैः कदलीपनसादिशाकैरार्द्रकोर्वारुकादिरसायनविकारैर्नानाविधपेयचोष्यलेह्यखाद्यैः क्षीरदधिनवनीतघृतैरेलाचम्पकमुकुलकर्पूरमृगमदलामञ्चपाटलपुष्पादिवासितसुशीतलस्नपनकलशाहृताढकतदर्धप्रमाणेन पानीयचयेन च परिपूरितैश्चषकैः परितः परिष्कृताः शिवस्य शिवायाश्च नैवेद्यस्थालिकाः सदाशिवस्य मनोन्मन्याश्च परिवारदेवतानामावरणदेवतानां च नैवेद्यस्थालिकाश्च निधाय स्थालिकानामुपरि पात्रं विन्यस्य हृदयेन प्रोक्ष्य तालत्रयदिग्बन्धनावकुण्ठनधेनुमुद्रा विरचय्यान्नमुद्रां पर्वतमुद्रां च प्रदर्श्य पूर्वविन्यस्तं पात्रमुद्धृत्यास्त्रमन्त्रेण परिषिच्य हृदयेन प्रत्येकमापोशनं दत्वा सपुष्पया मृगमुद्रया पूर्वं गणपतये निवेद्य तत्पुष्पं विसृज्य हस्तप्रक्षालनं कृत्वा [2]हां हं शिवाय स्वाहेति शिवाय नैवेद्यं पञ्चवारं त्रिवारमेकवारं वा नैवेद्यदानाभिनयवत्या सपुष्पया मृगमुद्रया नैवेद्यं दत्वा पानीयं च प्रदाय तत्पुष्पं विसृज्य हस्तप्रक्षालनं कृत्वा तद्वदेव शिवायै नैवेद्यं दत्वा सदाशिवादिक्रमेण सर्वेभ्योऽपि पृथक् पृथङ्नैवेद्यं दद्यात्। पृथक् पृथक् पात्रासंभवे सर्वासां परिवारदेवतनामेकस्मिन्नेव पात्रे नैवेद्यमाचमनीयं प्रत्येकं

---

[1] फलैर्लिप्सित, फलैर्लड्डुककस्तूरिकापिष्ट." [2] हां हौं शिवाय स्वधेति—पा.

निवेदयेत्। ततः शिवाय सुगन्धिपानीयं प्रदाय नमोऽन्तमूलेन शिरसि पुष्पं समर्प्य असंपूर्णं द्रव्यजातं संपूर्णं विभाव्य [1]स्वाहान्तमूलेनाचमनं दत्वा देवस्य सव्यवामहस्तयोरुद्वर्तनार्थं कर्पूरादिसहितं चन्दनं दत्वा हस्तप्रक्षालनं गण्डूषणपादक्षालनादि भावयेत्। सर्वाणि च नीर्माल्यान्युद्धृत्य सदाशिवनिर्माल्यं प्रागीशानदिशि [2]विन्यस्य गन्धपुष्पनिर्माल्यान्यासन्नाय चण्डेशाय निवेदयेत्।

अथ सदाशिवः केन वक्त्रेण भुङ्क्ते? ऊर्ध्ववक्त्रेण भुङ्क्ते—

भक्ष्यभोज्यान्नपानादि लेह्यं चोष्यमनेकधा।
ऊर्ध्ववक्त्रे प्रदातव्यं यत्किंचिदिह चोदितम्॥

इति सर्वज्ञानोत्तरवचनात्।

भक्ष्यं भोज्यं च पेयं च लेह्यं चोष्यं च पञ्चधा।
ऊर्ध्ववक्त्रे प्रदातव्यं हृदयेन षडानन॥

इति द्विशतीवचनाच्च। अथवा पञ्चभिरपि वक्त्रैर्भुङ्क्ते—

पञ्चवक्त्रेषु नैवेद्यमूर्ध्ववक्त्रेऽथवा पुनः।

इति पञ्चसु वक्त्रेषु प्रत्येकनैवेद्यादानविधानस्यापि दर्शनात्। ऊर्ध्ववक्त्रे नैवेद्यादानं च तदूर्ध्ववक्त्रं पूजाकाले दक्षिणाभिमुखीभूतं विभाव्य कर्तव्यम्। [3]देवस्य दक्षिणस्यां दिश्युत्तराभिमुखतया पूजकस्य स्थितत्वात्॥

"स्थण्डिले चरलिङ्गे च साधकाभिमुखः शिवः।
प्रत्यग्वक्त्रस्तु कुम्भादौ स्थिरे द्वाराभिसम्मुखः॥"

इति चरलिङ्गार्चने देवस्य पूजकाभिमुखत्वश्रवणात्। एवमात्मार्थपूजायां शिवस्य साधकाभिमुखत्वसिध्द्यर्थं हृदयगुह्यपादावयवा अपि दक्षिणदिक्स्था एव। यानि तु पूजकस्य शिवाभिमुखावस्थानपरिहारवचनानि—

न प्राच्यामग्रतः शम्भोर्नोत्तरे योषिदाश्रये।
न प्रतीच्यां यतः पृष्ठं तस्माद्दक्षिणमाश्रयेत्॥

---

[1] स्वधान्तमूलेन-पा. [2] विन्यस्तगन्धपुष्पनिर्माल्याभ्यां सह पेशान्यां दिशि चण्डेशाय-पा. [3] देवस्य दिश्युत्तराभि-पा.

इत्यादीनि तानि पूर्वाभिमुखस्थिरलिङ्गविषयाणि। चरलिङ्ग-पूजायां "स्थण्डिले चरलिङ्गे च साधकाभिमुखः शिवः" इति विशेषवचनदर्शनात्। "अग्नौ वा निर्ऋतौ वापि स्थितो देवं प्रपूजयेत्" इति वचनानुसारेण पूजकस्याग्नेयदिगवस्थाने शिवस्य पूजकाभिमुखत्वं न लभ्यत इति चेत्, सत्यं; तदपि वचनं स्थिर-लिङ्गविषयमेव। स्थिरलिङ्गं सर्वसाधारण्येन लोकानुग्राहकत्वाच्च चतसृषु दिक्षु स्वेष्टमुखमिति यस्यां दिशि द्वारं तद्दिगभिमुखं भवति। तत्र हृद्गुह्यचरणैः साकमूर्ध्वमुखं तद्द्वाराभिमुखम्, "द्वारस्याभिमुखं चोर्ध्ववक्त्रं प्रकल्पयेत्" इति वचनात् "यस्यां दिशि भवेद्द्वारं तां प्राचीं परिकल्पयेत्" इति वचनाच्च (तत्प्रभृत्येव प्रादक्षिण्येन तत्पुरुषाघोरसद्योजातवामदेवमुखानि कल्पनीयानि।

लिङ्गस्याभिमुखं यच्च द्वारं तत्पूर्वमिष्यते।
तत्र तत्पुरुषं वक्त्रमूर्ध्वं चाभिमुखं भवेत्॥

इति वचनात्।) अथवा ऊर्ध्ववक्त्रमेकमेव हृद्गुह्यचरणैः सह द्वाराभिमुखं भवति। तत्पुरुषादिवक्त्राणि तु पूर्वादिदिक्ष्वेव व्यव-स्थितानि न तु द्वारभेदेन भिद्यन्ते।

"प्रासादस्य द्वारं भवतु यथा काष्ठया कामम्।
तत्पुरुषादिमुखानि न जहाति पूर्वादिदिक्संस्थाम्॥"

इति वचनात्। इदं तत्पुरुषादिवक्त्रविषये पक्षद्वयमपि कामिकसंमतम्। अत एव तत्र पश्चिमद्वारार्चने—

"द्वारस्याभिमुखं चोर्ध्ववक्त्रं देहं प्रकल्पयेत्"

इत्युपक्रम्य,

"पुरुषं पूर्वदेशे वा पश्चिमे वाथ चिन्तयेत्।
दक्षिणे वोत्तरे वापि बहुरूपं विचिन्तयेत्॥

उत्तरे दक्षिणे वापि वामदेवं स्मरेद्गुरुः।
पश्चिमे पूर्वदेशे वा सद्योवक्त्रं स्मरन्नथसेत्॥"

इत्युक्तम्। तत्रैव दक्षिणद्वारार्चनेऽप्युक्तम्।

अघोरं पुरुषं वापि दक्षिणे सम्यगर्चयेत्।
(अघोरं वाथ सद्यं वा पश्चिमे तु समर्चयेत्॥)

सद्यवक्त्रं तु वामं वा सौम्यदेशे समर्चयेत् ।
पुरुषं वाथ वामं वा पूर्वदेशे समर्चयेत् ॥ इति ॥

सर्वमपि स्थिरलिङ्गमुत्तराभिमुखेन पूजनीयम् ।
"लिङ्गं वा प्रतिमा वा क्रियतेऽन्यद्वा यया ककुभा ॥

तस्यां तस्यां यज्वा यजेत शिवमुत्तराभिमुखः ।"

इति वचनात् । तत्र मुख्यपूर्वाभिमुखलिङ्गपूजायां मुख्याग्नेयदिशि स्थितस्य पूजकस्य मुख्योत्तराभिमुखत्वमेव घटते । पश्चिमदिग्रूपगौणपूर्वाभिमुखलिङ्गपूजायां तु वायव्यादिदिग्रूपगौणाग्नेयदिशि स्थितस्य दक्षिणदिग्रूपगौणोत्तराभिमुखत्वं घटते । न च देवस्य वामभागे नैरृतदेशे देव्या निविष्टत्वात्तत्र पूजकस्यावस्थितौ "नोत्तरे योषिदाश्रय" इति निषेधप्रसङ्गः, कामिके पश्चिमद्वारार्चनपटले—

"वामे वा दक्षिणे वापि स्थापनीया मनोन्मनी ।
देववन्मुखसंयुक्ता द्विहस्तैकमुखान्विता ॥"

इति पश्चिमाभिमुखलिङ्गपूजायां दक्षिणभागेऽपि देवीनिवेशनस्याङ्गीकृतत्वेन नैरृतदिक्स्थितस्य पूजकस्य देवदक्षिणभागनिविष्टदेवीभावनोपपत्तेः । एवं दक्षिणदिग्रूपगौणपूर्वाभिमुखलिङ्गपूजायां नैर्ऋत्यदिग्रूपगौणाग्नेयदिशि स्थितस्य प्राचीरूपगौणोत्तराभिमुखत्वं उत्तरदिग्रूपगौणपूर्वाभिमुखलिङ्गपूजायामीशानदिग्रूपगौणाग्नेयदिशि स्थितस्य प्राचीरूपगौणोत्तरवक्त्रत्वं च घटते । एवमात्मार्थपूजायां देवस्य पूजकाभिमुखत्वनियमो न हन्यते । सर्वत्रात्मार्थपूजाप्रकरणे "उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः" इत्यादि विधानात् । तत्रायं विशेषः—पापक्षयार्थिभिश्च मुखानां दिग्व्यवस्थामाश्रित्याघोरवक्त्रमभिमुखत्वेन भावयेत् ।

न विभोः पुरतस्तिष्ठेन्न पश्चात् स्वथान्तिकेऽपि च ।
अघविध्वंसमोक्षार्थं दक्षे दक्षस्थितोऽर्चयेत् ॥

हिमं मरुच्च शीतं च पद्मं निर्वहते यथा ।
तथाऽघोरं प्रशान्तोऽपि पापनिर्वाहकारकः ॥

> महानपि यथा दन्ती यन्तारमनुवर्तते ।
> तस्मादाप्तेन वचसा उत्तराभिमुखो यजेत् ॥

इत्यघोरमुखस्य सकलपापहरत्वेन प्रशंसादर्शनात् ।

> " अजातमिममेवैकं मत्वा जन्मनि भीरवः ।
> रुद्रस्यास्य प्रपद्यन्ते रक्षार्थं दक्षिणं मुखम् ॥ "

इति वायुसंहितायां दक्षिणमुखस्य मुक्तिप्रदत्वेन प्रशंसादर्शनाच्च । भोगपूर्वकमोक्षार्थिभिस्तु तत्पुरुषमुखस्य द्वाराभिमुख्यन्यायेन साधकाभिमुख्यन्यायेन वा साधकाभिमुख्यपक्षमाश्रित्य तत्पुरुषमुखमभिमुखत्वेन भावनीयम् ।

> प्रसन्नत्वं यदीशस्य सौम्यत्वं पुरुषस्य च ।
> चण्डत्वं बहुरूपस्य मुक्तिस्थित्यन्तहेतुकम् ॥

इति तत्पुरुषमुखस्य स्थितिहेतुत्वश्रवणात् । सर्वथाप्यूर्ध्ववक्त्रस्य दक्षिणाभिमुखत्वं स्थितमेव । एवं चावाहनादिकृतं देवस्याभिमुख्यमप्यात्मार्थपूजायामाञ्जस्यं लभते । अन्यथा परार्थपूजायामिव तदूर्ध्वस्योर्ध्वाभिमुखत्वत्यागमात्रपरतया कथञ्चिन्निर्वाहः स्यात् । परार्थपूजायां लोकानुग्रहप्रयोजनायां विशिष्य पूजकाभिमुख्यं नापेक्षितमिति युक्तं [1]तत्र द्वाराभिमुखस्यैव कथञ्चिद्गौणाभिमुख्यसमर्थनम् । इह तु साधकानुग्रहप्रयोजनायामात्मार्थपूजायां स्थण्डिले चेति वचनबलादाञ्जस्येन संभवत्साधकाभिमुख्यं किमित्युपेक्षणीयमिति केषांचिन्मतम् । अन्ये त्वाहुः—आत्मार्थपूजायां ऊर्ध्ववक्त्रं हृद्गुह्यचरणैः सह तत्पुरुषवक्त्रं च पूजकाभिमुखमेव । अंशुमदादितन्त्रेषु आत्मार्थपूजाप्रकरण एव—

> न विभोः पुरतस्तिष्ठेन्न पश्चादन्तिकेऽपि च ।
> न योषित्सन्निधौ नाग्रे न पृष्ठे स्वामिनो भवेत् ॥

इत्यादिवचनानां पठितत्वात्तेषां परार्थपूजाविषयतया नेतुमशक्यत्वात् साधकाभिमुख्यवचनस्य दीक्षाप्रकरणपठितत्वेन ततो नित्यपूजायां साधकाभिमुख्यालाभात् । नच दीक्षायां चरलिङ्गपूजा-

---

[1] तत्तद्द्वारा—पा.

प्रसक्त्यभावाच्चरलिङ्गे साधकाभिमुख्यवचनं नित्यपूजाविषयमेवेति वाच्यम्; दीक्षायामपि चरलिङ्गार्चने दोषाभावात्। तस्मान्निरपवादात् न प्राच्यामग्रत इति वचनात्,

"नित्ये नैमित्तिके काम्ये सर्वाधिकरणः सदा।
शिवः पूर्वासनो लक्ष्मीः प्रत्यक्पृष्ठकलातनुः"॥

इति लक्ष्मीकेशवसंवादे,

दीक्षादिषु घटेशस्य प्रतीच्यां चिन्तयेद्गुरुम्।
ईशं तत्पुरुषं शान्तं[1] विभुं नित्यं पुरातनम्॥

इति सुखबिम्बे,

ध्यायेत्सदा शिवं नित्यं प्राङ्मुखेशास्यवक्षसम्।
दीक्षादौ कलशाधारं तमेव प्रत्यगाननम्॥" इति।

बृहद्भार्गवादिषु च सदानित्यशब्दाभ्यां विशेषविहितदीक्षादिव्यतिरिक्तेषु सर्वेष्वपि नित्यनैमित्तिककाम्येष्वीशानपुरुषमुखयोः प्राङ्मुखत्वनियमश्रवणादेतेषां वचनानां द्वाराभिमुखत्वनियतास्थिरलिङ्गप्रहाणेन चरलिङ्गाचरलिङ्गादिविषयत्वावश्यंभावाच्च। आत्मार्थपूजायां नित्यनैमित्तिककाम्यरूपायां शिवस्य पूर्वाभिमुखत्वमौत्सर्गिकम्। दीक्षादिनैमित्तिकेषु विशेषवचनैर्दक्षिणमुखत्वादिरूपतदपवाद इति। इदं चान्यदाहुः—ईशानतत्पुरुषमुखयोर्मध्येऽपि सदाशिवस्तत्पुरुषमुखेनैव भुङ्क्ते, "द्वारं पश्चिममेवं तु नैवेद्यं पूर्ववक्त्रकम्" इति सूक्ष्मागमवचनात् ईशानरूपस्य [2]शिरोवक्त्रतया तत्र नैवेद्यदानस्य लोकविरुद्धत्वाच्चेति। अस्तु तत्पुरुषमुखेन भुङ्क्त इत्यपि कश्चन पक्षः, न तु तेनैवेति नियमः। "भक्ष्यभोज्यान्नपाना" दीत्यादिप्रागुदाहृतांशुमदागमवचनैः "ऊर्ध्ववक्त्रे महासेन आहुतिं सम्प्रदापयेत्" इति चतुश्शतीकालोत्तरादिवचनैश्चोर्ध्वमुखेनापि भोजनावगमात् "पञ्चवक्त्रेषु नैवेद्यं" इति वचनेन

"ततो हविःप्रदानं स्यात्पञ्चवक्त्रेषु चैव हि।
ईशानस्य तु शुद्धान्नं गुडान्नं पुरुषे ततः॥

---

[1] नित्ये नित्यपुरातनम्-पा. [2] शिरोरूपतया-चा.

कृसरं दक्षिणे वक्त्रे मुद्गान्नं च तथोत्तरे ।
पश्चिमे पायसं चैव स्वस्वनाम्ना समाहितः ॥
दापयेत्स्वस्वदिग्भागे ईशानस्याग्रतो भवेत् ।

इत्यादिना पञ्चसु प्रतिवक्त्रं नैवेद्यभेदप्रतिपादकवचनजातेन पञ्चभिर्वक्त्रैर्भोजनावगमाच्च । न ह्यागमानामविशिष्टे प्रामाण्ये कस्यचिदर्थोऽनुष्ठेयो नान्यस्येति युज्यते । तस्मात्तत्तदागमवचनप्राप्तपक्षत्रयस्यापि विकल्प इत्येव युक्तम् ॥

ननु नैवेद्यदानमुद्रया शिवे नैवेद्यं समर्पयता पूजकेन किं शिवस्य हस्ते समर्पणीयम् ? उत तत्तद्वक्त्रे एव ? अत्रापि विकल्प एव । उत्तरत्र—

अमृतीकृत्य गोस्तन्या निवेद्य कुसुमं न्यसेत् ।
नैवेद्यं दक्षिणे हस्ते दद्यात्पानीयमुत्तमम् ॥

इति दक्षिणहस्ते नैवेद्यसमर्पणश्रवणात् ।

ऊर्ध्ववक्त्रे तु दातव्यं यत्किञ्चिदिह चोदितम् ।
ऊर्ध्ववक्त्रे महासेन आहुतिं सम्प्रदापयेत् ॥

इति वक्त्रे समर्पणश्रवणाच्च । एवं चात्र योग्यतानुसारेण व्यवस्थितो विकल्पः । यद्धृदयादिसंमिते पुरुषवक्त्रे निवेदितव्यं द्रवद्रव्यवर्जं भक्ष्यभोज्यादि तत्सर्वं [1] परित्यक्त्वा अभयमुद्रे वामहस्ते समर्पणीयम् । यद्वक्त्रान्तरे निवेदनीयं यच्च पानीयादिद्रव्यजातं तत्सर्वमग्निहोत्राहुतिवत्सूक्ष्मरसरूपेण स्थालिकाभ्यो निर्गत्य तत्तद्वक्त्रपर्यन्तं नैवेद्यमुद्रया सहागतं सम्भावयता साक्षात्तद्वक्त्रे एव समर्पणीयमिति । एवं च हस्ते समर्पणसम्भवाद्धस्तोद्वर्तनस्य न वैफल्यम् । पूजकहस्तेन तत्तद्वक्त्रे नैवेद्यप्रक्षेपाभावात् पूजकहस्तस्य न निर्माल्यसङ्करप्रसङ्गः ॥

इति नैवेद्यविधिः

अथ मुखवासताम्बूलदानम्—

अथ मुखवासताम्बूलादि निवेदयेत् । भोजनानन्तरं मुखे वासार्थं यद्दीयते तत् मुखं वासयतीति व्युत्पत्त्या मुखवासम् ।

---

[1] परित्यक्ताभयमुद्रे.

तच्चैलालवङ्गतक्कोलजातीफलकर्पूरचूर्णं हिमजलपिष्टं गुलुकीकृतमित्युक्तम् । एलालवङ्गतक्कोलजातीफलकर्पूरचूर्णमीषन्मधुसितायुक्तं केवलं वा पञ्चसौगन्धिकाख्यमुत्तमम् । केवलं कर्पूरजातीलवङ्गतक्कोलचूर्णं वा मध्यमम् । (केवललवङ्गमयं) प्रस्थनैवेद्यस्य द्विधाकृतमृदुक्रमुकखण्डानि पट्चत्वारि द्वे वा पत्राणि क्रमुकफलापेक्षया चतुर्गुणानि त्रिगुणानि द्विगुणानि वा शुभ्राणि खण्डितमूलाग्राणि शिलाचूर्णं चेति सर्वमिदं सङ्गृह्य कर्पूरादिसहितं सुपक्वसंस्कृतमातुलङ्गनालिकेरफलयुक्तताम्बूलं निवेदयेत् । ततो मूलमन्त्रेण विशेषार्घ्यं दत्वा एकत्रिपञ्चसप्तनववर्तियुक्तं दीपं प्रदर्श्य त्रिताल पञ्चनालनागचक्रपद्मगुरुमृगगजारूढदेवेन्द्राद्याकृतिपात्रनिहितान् दीपानपि यथाविभवं प्रदर्श्यारात्रिकं कुर्यात् ॥

## आरात्रिकविधिः

तत्प्रकारः—

सुवर्णरजतताम्रकांस्यान्यतमनिर्मिते चतुर्विंशत्यङ्गुलिमाने तदर्धमाने तदर्धमाने वा [1]तत्त्रिंशमानया स्वमानपञ्चमांशोत्सेधया वा यवद्वयायामोत्सेधपङ्क्तिकया कर्णिकया शोभिते ततो बहिरष्टदलयुक्ते परितः कर्णिकामानोष्ठसहिते सुवृत्ताकारे पात्रे कर्णिकायां मध्ये परितश्च कृतेषु सहस्रेषु शालिपिष्ठमयेषु वा दीपासनेषु कर्पूरादिमयीं वर्तिकां निधाय नव पञ्च वा दीपान् विन्यस्य मध्ये एवैकं वा दीपमारोप्य त्रिपाद्यां विन्यस्य निरीक्षणादिभिः संस्कृत्य नव चेन्मध्ये सूर्यं दिक्षु गुरुशुक्रबुधचन्द्रान् विदिक्षु भौमशनिराहुकेतून्, पञ्च चेन्मध्ये वह्निं दिक्षु गगनवायुजलपृथिवीः एकश्चेद्वह्निं चाभ्यर्चयेत् ॥

यद्वा नवपञ्चैकदीपेषु वामादिशक्तीः पञ्चब्रह्माणि शिवं चार्चयेत् । एवं [2]गन्धपुष्पधूपदीपैरभ्यर्च्य दिग्बन्धनमन्त्रेण कृत्वा सुरभिमुद्रां प्रदर्श्य पाणिभ्यामुद्धृत्य देवस्य शिरसि हृदये पादयोश्च त्रिर्भ्रामयित्वा सुवर्णादिनिर्मितैर्वृत्ताकारैश्चतुरश्राकारैर्वा मुकुलाग्र-

[1] तत्तृतीयांशमानया-पा. [2] गन्धपुष्पाक्षतैर्धूप-पा.

शालिनालयुक्तैः सहजशालिपिष्टकृतान्यतरदीपासनयुक्तैर्दीपासन-निहितकर्पूरादिवर्तिष्वारोपित दीपैर्नीराजनपात्रैर्नीराजनान्यपि निरीक्षणादिसंस्कृतानि आरात्रिकवद्भ्रामयित्वा भूमौ विन्यस्याग्रेण निर्वापयेत्। नीराजनपात्राणि त्रिविधानि। प्रादेशमात्रविस्तारं यवद्वयघनमष्टाङ्गुलदीर्घनालं तदनुसारिमुकुलमुत्तमं, तस्य मध्य एकं दीपासनं पञ्चस्वावृत्तिषु क्रमान्नव पञ्चदश एकविंशतिः सप्तविंशतिस्त्रयस्त्रिंशदिति षड्डुत्तरशतं दीपाः। यद्वा क्रमादावृत्तिष्वष्टौ चतुर्दश विंशतिः षड्विंशतिर्द्वात्रिंशद्दीपासनानीत्येकोत्तरशतं दीपाः। उत्तमपात्रार्धमानं पात्रं मध्यमम्। तस्य मध्ये एकं चतुर्ष्वावरणेषु अष्टौ त्रयोदशाष्टादश त्रयोविंशतिर्दीपासनानीति त्रिषष्टिर्दीपाः। मध्यमादर्धमानं कनिष्ठम्। अस्य मध्ये एकं त्रिष्वावरणेषु षड् दश चतुर्दश दीपासनानीत्येकत्रिंशद्दीपाः॥

अथ दर्पणच्छत्रचामरव्यजनतालवृन्तानि क्रमादीशानादिमन्त्रैः समर्प्य तत्तद्दिवसार्जितवाङ्मनःकायदोषपरिहाराय शिवसायुज्यप्राप्तये च दूर्वाङ्कुशाक्षतबिल्वपत्रसहितपुष्पाञ्जलिं हां हौं शिवतत्त्वाधिपतये शिवाय नमः। हां हौं विद्यातत्त्वाधिपतये शिवाय नमः। हां हौं आत्मतत्त्वाधिपतये शिवाय नमः, इति त्रिवारं समर्पयेत्। मुमुक्षुश्चेदात्मतत्त्वादिक्रमेण। अथवा सर्वतत्त्वाधिपतये शिवाय नम इति सकृदेव वा समर्पयेत्। ततः पूजया सन्तुष्टं स्वाभिमुखीकृताञ्जलिपुटसकलभोगाङ्गसेव्यमानं यागमन्दिरद्वारबाह्यस्थब्रह्मोपेन्द्रमहेन्द्रचन्द्रसूर्यादिस्तूयमानमपारकरुणामृतसमुद्रं भक्तजनसकलाभीष्टप्रदं च शिवं ध्यात्वा पूजासाद्गुण्यार्थं यथाशक्ति श्रीमत्पञ्चाक्षरजपं कुर्यात्॥

## अथ पञ्चाक्षरजपविधिः

श्रीमत्पञ्चाक्षरजपप्रकारः प्रतिपाद्यते।
गुरूपदिष्टमार्गेण गोपनीयं प्रयत्नतः॥

शिवासनपद्मस्य दक्षिणदले अघोरमूर्तेर्दक्षिणभागे—

तप्तचामीकरप्रख्यां पीनोन्नतपयोधराम्।
चतुर्भुजां त्रिणयनां बालेन्दुकृतशेखराम्॥

[1] पद्मोत्पलधरां सौम्यां वरदाभयपाणिकाम् ।
सर्वलक्षणसम्पन्नां सर्वाभरणभूषिताम् ॥
सितपद्मासनासीनां नीलकुञ्चितमूर्धजाम् ।
श्रीमत्पञ्चाक्षरीविद्यामासनाऽऽवाहनादिभिः ॥
गन्धपुष्पैर्धूपदीपैर्नैवेद्येन च पूजयेत् ।
सुखासने समाविष्टो रक्षिताक्ष उदङ्मुखः ॥
नासाग्रन्यस्तदृग्ज्ञानी विदध्यादात्मरक्षणम् ।
स्रवत्पीयूषसङ्घातप्लाविताशेषदिक्तटम् ॥
स्मरेदूर्ध्वमधस्ताच्च चन्द्रमण्डलसम्पुटम् ।
बिम्बसम्पुटमध्यस्थं सुधाधारापरिप्लुतम् ॥
स्वदेहं चिन्तयेच्छाक्तैः सुधावर्षैः सुधात्मकम् ।
आत्मरक्षा भवेदेषा सुरैरपि न भिद्यते ॥
आत्मरक्षां विधायेत्थं मन्त्ररक्षामथाचरेत् ।
रेचयेदुदराद्वायुं दक्षनाड्याऽक्षमन्त्रतः ॥
इडया पूरयेद्बाह्याच्छम्भुना वायुनोदरम् ।
अपानमूर्ध्वमुत्कृष्य प्राणापानौ निरुध्य च ॥
कुम्भेन मनसा वायुं सुषुम्नायां नियोजयेत् ।
सुषुम्नामध्यसंस्थायां हृद्देशे शिवसंयुजि ॥
मन्त्रं नियोजयेन्मन्त्री चिच्छक्तौ मन्त्रमातरि ।
मन्त्राक्षराणि मणिवत्प्रभावन्मन्त्रदेवताम् ॥
गमागमप्रयोगेन स्मरन् मन्त्रं जपेत्सुधीः ।
वाच्यवाचकसम्बन्धं जपेत्तद्गतमानसः ॥
मन्त्ररक्षा भवेदेषा संहिता सुररक्षिता ।
इत्थं विदित्वा यत्नेन जपकर्म समाचरेत् ॥
जपकर्मक्रमस्सोऽथ सुस्पष्टं प्रणिगद्यते ।
नाभ्यादिद्वादशान्तान्तं सोमसूर्याग्निरूपिणीम् ॥

---

[1] पद्मोत्पलदलां–पा.

आनन्दरूपिणीं शक्तिं सुषुम्नान्तर्गतां पराम् ।
आधारचक्रमारभ्य बोधयित्वानिलेन ताम् ॥
ब्रह्माणं केशवं रुद्रमीश्वरं च सदाशिवम् ।
हृत्कण्ठतालुभ्रूब्रह्मरन्ध्रस्थानेषु तान् क्रमात् ॥
त्यक्त्वा त्यक्त्वाक्षमन्त्रांशं विद्युल्लेखानिभं बुधः ।
मन्त्रं नादान्तमुच्चार्य मूलाधारगतं पुनः ॥
गमागमप्रयोगेन जपेत्साष्टशतं तथा ।
अष्टाविंशतिमष्टौ वा गुरुणा वा यथोदितम् ॥
इत्थं कृत्वा जपं मन्त्री शिवसायुज्यमाप्नुयात् ।

जपश्चान्तर्योऽकारादिक्षकारान्तवर्णमालारूपया बाह्यया रुद्राक्षादिनिर्मितया वा कर्तव्यः । तत्रान्तर्या जपप्रकारः कथ्यते । ब्रह्मरन्ध्रे धवलाष्टदलं चतुरश्रयन्त्रमुपरि श्रितं पद्मं भावनीयम् । तस्य कर्णिकायां व्योम तत्पूर्ववर्णं चतुर्दशस्वरविसर्जनीयसमुदायरूपं बीजं, केसरेष्वष्ट स्वरद्वन्द्वादीनि, दलेषु कादयः पञ्चपञ्च वर्णाः, चतुरश्रयन्त्रस्य दिक्षु सुधाबीजं, विदिक्षु च सप्तमो वर्णः । एवंरूपं मातृकापद्मं भावनामात्रेण विशेषरोगमृत्युहरम् । ततो द्वाराकुञ्चनोद्गतवायुसन्धुक्षितमूलाधाराग्निशिखया कुण्डलिनीशक्त्या सह सुषुम्नारन्ध्रं प्रविश्य ब्रह्मरन्ध्रपर्यन्तमुद्गनेडास्पृष्टात्तस्मान्मातृकापद्मात्स्यन्दितां क्षकाराद्यकारान्तवर्णपङ्क्तिरूपाममृतबिन्दुसन्ततिं ब्रह्मरन्ध्रप्रभृतिमूलाधारपर्यन्तं व्याप्यावतिष्ठन्तीं भावयेत् । या कुण्डलिनीशक्तिर्मूलाधाराग्निशिखासामरस्येन प्रकाशमानसुषुम्नामार्गेण ब्रह्मरन्ध्रपर्यन्तमुद्गता सैव मातृकापद्मविनिस्सृतामृतबिन्दुस्यन्दिसन्ततिसामरस्येनामृतायमाना परमानन्दरूपिणी मातृकाशक्तिरिति भावयेत् । तदाहुः—

प्रकाशमानां प्रथमप्रयाणे
प्रतिप्रयाणे त्वमृतायमानाम् ।
अन्तः पदव्यामनुसञ्चरन्ती-
मानन्दमुद्रामवलोकयामः ॥ इति ॥

तत्र ब्रह्मरन्ध्रस्थितमातृकापद्मप्रभृत्यकारादिक्रमेण मूलाधारपर्यन्तं व्याप्य स्थितायां मातृकारूपायां शक्तौ अकारादिभिरष्टभिर्वर्णैरेको

वर्गः, ळकारादिभिरष्टभिरन्यो वर्गः, क्षकारादिभिः पञ्चभिः पञ्चभिर्वर्णैः सप्तवर्गा इत्येतान्नववर्गान् क्रमादादित्यसोमबुधगुरुशुक्राङ्गारकशनिराहुकेतुरूपान् माणिक्यवैडूर्यपुष्यरागवज्रविद्रुमेन्द्रनीलमौक्तिकगोमेधमरकताकारान् भावयेत्। सैषा नवग्रहात्मकनवरत्नरूपापन्नब्रह्मरन्ध्रादिमूलाधारपर्यन्तव्याप्तसकलवर्णमयी मालिकाऽऽभ्यन्तराक्षमालिका। माणिक्यमौक्तिकविदूरजपुष्यरागवज्रप्रवाल गुलिकाबलवैरिरत्नैर्गोमेतकैर्मरकतैश्च कृताक्षमाला श्लाघ्या नवग्रहमयाखिलवर्णपूर्णा। एनामक्षमालां हृत्पुण्डरीकमध्यगतदीपाकारपरमेश्वरप्रभारूपशब्दमयैः पराख्यशक्तिनिस्सृतां वा विभावयेत्। तदग्रे च मालामन्त्रं नवरत्नमयकल्पलताग्रे पुष्पादिव निस्सृतं विभाव्य क्षकारं मेरुं कृत्वा ळकारादिक्रमेणाक्षमालायां मूलमन्त्रस्य गमागमौ विभावयेत्। तस्यां मन्त्रस्यारोहणभावनायां मन्त्रस्य शिरसि ळकारादीन् वर्गान् विसर्जनीयसहितान् विन्यस्यावरोहणभावनायां मन्त्रस्यादावकारादीन् वर्णान् विन्द्वन्तान् विन्यस्य जपं कुर्यात्। एवं कृते शतं मन्त्रस्यावृत्तयो भवन्ति। तदनन्तरं षोडशस्वरवर्गस्पर्शवर्गपञ्चकान्तस्थवर्गोष्मवर्गरूपवर्गाष्टके क्रमेण मन्त्रं विन्यस्याष्टधा मन्त्रमावर्तयेत्। एवमष्टोत्तरशतसङ्ख्याजपः कृतो भवति। जपारम्भकाले च मूलमन्त्रेण तस्य परदेवतां मणिना प्रभामिव समरसीभूतां मूलमन्त्रेण सह तदीयान्नकारादिवर्णान् पीत कृष्ण धूम्र पीत रक्तवर्णान् तद्देवतारूपतया तत्समरसीभूतान् ब्रह्मविष्णुरुद्रेश्वरसदाशिवांश्च विभाव्य, हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रेषु क्रमेण नकारादिवर्णैः सह ब्रह्मादीन् परित्यजेत्। अयमर्थः सर्वोऽपि प्रागेव लिखितश्लोकेषु संक्षेपेण सूचितः। एवमाभ्यन्तराक्षमालया जपं कर्तुमशक्तः प्रागुक्तक्रमेण जपारम्भकाले मन्त्रं मातृकाशक्त्यारूढं विभाव्य मन्त्र(सम्पुटीकृत) मातृकाक्षराणि विभाव्य केवलमेव मन्त्रं रुद्राक्षादिकृतबाह्याक्षमालया विगणयन् जपेत्॥

तत्प्रकारः — उत्तमादिक्रमेणामलकबदरचणकप्रमाणैरेकवक्त्रैस्त्रिवक्त्रैश्चतुःपञ्चषट्सप्ताष्टदशैकादशवक्त्रैर्वा एकसङ्ख्यवक्त्रैर्भिन्न—सङ्ख्यवक्त्रामिश्रितैरष्टोत्तरशतसङ्ख्यैश्चतुःपञ्चाशत्सङ्ख्यैः सप्तविंशतिसङ्ख्यैर्वा सुवर्णरजतादिमये क्षौमपट्टादिमये वा सूत्रे परस्परमुखसंयोजनेन परस्परपृष्ठसंयोजनेन च स्यूतैर्मेरुसहितैर्वर्णा-

नुगुणरुद्राक्षैर्निर्मितां सद्योजातादिमन्त्रैः प्रत्येकं शतवारावृत्तैः क्रमेण कृतक्षालनघर्षणधूपालेपनाभिमन्त्रणरूपपञ्चसंस्कारामीशानमन्त्रे—णाघोरमन्त्रेण वाभिमन्त्रितमेरुकां शिवपूजाक्रमेणावहनादिभिः पूजितां जपारम्भकाले हुंफडन्तास्त्रेण प्रोक्षितां हृदयेन गन्धपुष्पाक्षतादिभिर्मालामुद्राप्रदर्शनेन च पूजितां दक्षिणहस्ते गृहीतां वस्त्रसङ्गोपितामक्षमालां वाचिकजपे मध्यमायां निधाय तर्जन्यङ्गुष्ठाभ्यां, उपांशुजपेऽनामिकायां निधाय मध्यमाङ्गुष्ठाभ्यां, मानसजपे कनिष्ठिकायां निधायानामिकाङ्गुष्ठाभ्यां च गणयेत्। बुभुक्षुरक्षमालामधो नयेत् मुमुक्षुरूर्ध्वं नयेत्। मेरुलङ्घनदोषे प्रायश्चित्तमघोरसहस्रजपः। तद्दोषास्पर्शाय मेरुहीनाक्षमाला कर्तव्या। एवमक्षमालायाः पादयोः पतनेऽप्यघोरसहस्रजपः। भूमौ तस्याः पतने [1]त्रिशतजपः। वाससि पतने तच्छतजपः। जपारम्भकाले एकं पुष्पं दक्षिणहस्तस्य कनिष्ठिकानामिकामध्ये कृत्वा जप्तव्यम्। रुद्राक्षमालिकया जपे तद्ग्रहणसौकर्याय दक्षिणहस्तेन गृहीतं पुष्पं वामहस्ते निधाय जप्तव्यम्। अद्रुतविलम्बितं सावधानं जपं समाप्य वामकरतलेऽस्त्रकवचहृदयानि उपर्युपरि विन्यस्य तदुपरि जपकाले धृतं पुष्पं निधाय हृदयकवचास्त्रैः सम्पुटीकृत्यास्त्रेण संरक्ष्य कवचेनावकुण्ठ्य दक्षिणहस्ते पुनर्गृहीत्वा हृत्प्रदेशे निधाय पूर्णचन्द्रोपमं जपं तद्गतं ध्यायन् भूनिवेशितदक्षिणजानुर्भूत्वा हां "गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्। सिद्धिर्भवतु मे देव त्वत्प्रसादात्त्वयि स्थिते।" हां हौं शिवाय नमः स्वाहा। श्रीपरमशिव जपं त्वयि निवेदयामीति जपमर्घ्याम्बुचुलकेन साक्षतकुशपुष्पेण शिवस्य वरदहस्ते निवेदयेत्। अयं भुक्तिमुक्तिसाधकस्य स्वकृतजपस्य विस्मयसङ्कीर्तनकर्मनाशजलसंस्पर्शादिभिर्विनाशशङ्कया तत्संरक्षणाय शिवहस्ते निक्षेपः। मन्त्रश्लोकस्यायमर्थः। गुह्यातिगुह्यानां मन्त्रतत्त्वादीनां गोप्ता त्वमेव। अतः सर्वगोप्तृत्वादस्माकं जपमपि गृहाण। येन यदास्मिन् जपे त्वयि स्थिते त्वत्प्रसादादस्माकं भुक्तिमुक्तिरूपा सिद्धिर्भवत्येव। तस्मान्मयि कृपया तद्गृहाणेति। ततो हां—

> यत्किञ्चित्कर्म हे देव सुकृतं चैव दुष्कृतम्।
> तन्मे शिवपदस्थस्य भुङ्क्ष्व क्षपय शङ्कर॥

---

[1] तस्त्रिशज्जपः.

हां हौं शिवाय स्वाहा, परमशिवाय मम सुकृतं दुष्कृतं च निवेदयामि इति स्वकीयं सुकृतदुष्कृतात्मकं सर्वं कर्म प्रागुक्तक्रमेण चुलकोदकेन निवेदयेत्। तत्र सुकृतजातस्य भोगार्थस्य मोक्षान्तरायपरिहारार्थस्य संरक्षणार्थं निवेदनं, दुष्कृतजातस्य क्षपणार्थम्। अतः सुकृतं भुङ्क्ष्व पालय, दुष्कृतं क्षपय नाशयेति योजना। भोगनिस्पृहस्य केवलमुमुक्षोस्तु मोक्षान्तरायपरिहारार्थं सुकृतमात्रमेव भुङ्क्ष्वेति पालनप्रार्थना। भोगार्थसुकृतस्य तु शिवपूजायामङ्गफलत्वेनानुषङ्गिकस्य मानुषानन्दादिहिरण्यगर्भानन्दान्तभोगप्रापकस्य विषयेभ्यो जुगुप्सितमानसं केवलमुमुक्षुं प्रति "एते वै निरयास्तात स्थानस्य परमात्मनः" इति पुराणोक्तरीत्या नरकप्रापकस्य दुष्कृतरूपतया क्षपणप्रार्थनैव। यद्यपि पालनार्थे भुजिधातोः परस्मैपदितया भुनक्षीति रूपेण भाव्यम्। तथापि मन्त्ररूपे श्लोके वैदिकमन्त्रेषु रक्षस्वेति प्रयोग इव छान्दसोऽयं "व्यत्ययो बहुलमि" त्यात्मनेपदप्रयोगः। यद्वा भुङ्क्ष्वेति भोग एवोच्यते। न तु पालनम्। सुकृतशब्देन केवलमुक्त्यर्थिनः पूजकस्य यदनिष्टं भोगार्थसुकृतं तदेवोच्यते। न तु मुक्त्यर्थमपेक्षितम्। तद्भोगः शिवस्य राज्ञो राज्यभोगवत्स्वाधीनव्यवहारः। न तु स्वयमेव भोजनम्। स्वाधीनव्यवहारश्च पूजकस्य प्रियेषु ज्ञातिषु तस्य यथाकथञ्चित्सुहृत्सु वा निवेशनम् मुमुक्षोरनपेक्षितं सुकृतं शिवस्तस्य ज्ञातिसुहृद्भ्यः प्रयच्छतीति श्रुतिप्रसिद्धिः। यद्यपि तस्य दुष्कृतं द्विषद्भ्यः प्रयच्छतीत्यपि श्रुतिप्रसिद्धिरस्ति, तथापि शिवपूजकः सर्वैमष्टमूर्तेः शिवस्य रूपं मन्यमानस्तान्न द्वेष्टीति तेन स्वदुष्कृतस्य स्वस्मिन् फलाजनकत्वरूपं क्षपणमेव प्रार्थयितुमुचितमिति तत्प्रार्थना मन्त्रे निबद्धा। ततः—

शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत्।
शिवो जयति सर्वत्र यः शिवः सोहमेव तु॥

हां हौं शिवाय स्वाहा परमशिवमात्मानं तुभ्यं निवेदयामि, इति प्रागुक्तरीत्या चुलकोदकेन निवेदयेत्। अत्र मन्त्रश्लोके सोहमिति भागेन स्वस्य शिवस्य च शरीरशरीरिभावः प्रतिपाद्यते। शिवस्य

नियामकत्वेन शरीरित्वात् पूजकस्य नियम्यत्वेन शरीरत्वाच्च। शरीरशरीरिभावं सोऽहमिति सामानाधिकरण्यं धर्मज्ञः सुन्दरो राजेतिवत्। एवेत्ययोगव्यवच्छेदः। यश्शिव इति परममङ्गलवाची शिवशब्दः रूढ्या त्रिविधेनाण्याणवमायिककर्मरूपेण मलेनापस्पृष्ट इति—

अनादिमलसंश्लेषप्रागभावात्स्वभावतः।
शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः॥

इत्यादिषु प्रसिद्ध इत्यर्थः॥

अथवा शीङ्धातोरौणादिकेन वन्प्रत्ययान्तत्वह्रस्वत्वनिपातेन शेते सामरस्येन वर्ततेऽस्मिन् कल्याणगुणजातमिति व्युत्पत्त्या परस्परविरुद्धौदार्यमाधुर्यविशेषज्ञत्वनिरतिशयत्वसहिष्णुत्वादिस-माश्रयणीयत्वोपयोगिसकलकल्याणगुणरत्नाकर इति।

नास्ति यद्यदकल्याणं तत्तदस्य कदाचन।
कल्याणं सकलं चास्ति परमात्मा शिवो यतः॥

इत्यादिषु प्रसिद्ध इत्यर्थः। अथवा—

हिंसिधातोः सिंहशब्दो वशकान्तौ शिवः स्मृतः।
वर्णव्यत्ययतः सिद्धः पश्यकः कश्यपो यथा॥

इति निपातेन वा, शुभमिच्छतीति व्युत्पत्त्या सर्वभूतहिताशासितेति।

समेधयति यन्नित्यं सर्वार्थानामुपक्रमे।
शिवमिच्छन् मनुष्याणां तस्माद्देवः शिवः स्मृतः॥

इत्यादिषु प्रसिद्ध इत्यर्थः। अथवा शिवशब्दाच्छुभवाचिनस्तत्करोतीति णिचि पचाद्यचि 'णेरनिटि' इति णेर्लोपे च सति शिवं करोति सर्वेषामिति व्युत्पत्त्या सकलभूतहितकर्तेति।

समा भवन्ति मे सर्वे दानवाश्चामराश्च ये।
शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुराः॥

इत्यादिषु प्रसिद्ध इत्यर्थः। अथवा श्यैङ् गताविति धातोरौणादिकेन वन्प्रत्ययस्याकारयकारलोपस्य च निपातेन श्यायते प्राप्यत इति व्युत्पत्त्या भोगमोक्षार्थिभिर्भजनीय इति।

यद्द्वारि मत्तमातङ्गा वायुवेगास्तुरङ्गमाः ।
पूर्णेन्दुवदना नार्यः शिवपूजाविधेः फलम् ॥

सर्वमन्यत्परित्यज्य शिव एव शिवंकरः ।
परो ध्येयोऽथ देवेशः समाप्ताथर्वणी श्रुतिः ॥

इत्यादिषु प्रसिद्ध इत्यर्थः । अथवा—

यद्द्यक्षरं नाम गिरेरितं नृणां
सकृत्प्रसङ्गादघमाशु हन्ति तत् ।
पवित्रकीर्तिं तमलङ्घ्यशासनं
भवानहो द्वेष्टि शिवं शिवेतरः ॥

इत्यादिषु सकलदुरितहरत्वेनानुशिष्टस्य शिवशब्दस्य वाच्यो यः प्रसिद्ध इत्यर्थः । "शिवो जयति सर्वत्र" ति सर्वेष्वपि लोकेषु शिव एव यजति धर्माधिकारित्वेनावतिष्ठते । कर्मवश्यसकलजीवात्मकः स एव नियन्तेत्यर्थः । शिवः सर्वमिदं जगत्, भूतभौतिकसकलजडाजडप्रपञ्चात्मकस्तन्नियामक इत्यर्थः । भोक्ता प्रपन्नानां पालयिता । दाता प्रपन्नानां प्रामादिके पातकाद्यन्तराये सति तस्य शोधयिता । एतानि विशेषणानि शिवे स्वात्मनिवेदनतदङ्गोपयुक्तानि । तथा हि—नियम्यस्य पूजकस्य नियामकस्य शिवस्य च नियतनियम्यनियामकभावरूपशरीरशरीरिभावेन शिवं प्रति पूजकस्य तवाहमस्मीत्यनुसन्धानमेव आत्मनिवेदनम् । तदिह सोहमेवेत्यत्र तत्पदोक्ते शिवे अहंपदेन स्वशरीरकत्वं एवकारेण तदयोगव्यवच्छेदार्थकेन तस्य नियतत्वं चानुसन्धानविषयत्वरूपं तदुपपादकमभिहितम् ॥

अस्य चात्मनिवेदनस्याङ्गपञ्चकमाहुः—

आनुकूल्यस्य सङ्कल्पः प्रातिकूलस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥

कार्पण्यमिति । तत्र सर्वभूतानुकूल्याचरणतत्प्रातिकूल्यवर्जनरूपाङ्गद्वयोपपादकं सर्वोऽपि जीववर्गः पूजकं प्रति शरण्यस्य शिवस्य शरीरमित्येतदभिहितम् । तेन प्राणिमात्रे शिवपूजकेन राजशरीरे

भृत्य इवानुकूल्येन वर्तितव्यम्, तत्प्रातिकूल्यं वर्जनीयमिति लभ्यते। अत एवोक्तं वायवीयसंहितायां शिवस्य मूर्त्यष्टकनिरूपणप्रकरणे—

आत्मा तस्याष्टमी मूर्तिः शिवस्य परमात्मनः।
व्यापकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम्॥

सर्वोपकारकरणं सर्वानुग्रहणं तथा।
सर्वाभयप्रदानं च शिवस्याराधनं विदुः॥

देहिनो यस्य कस्यापि क्रियते यदि निग्रहः।
अष्टमूर्तेरनिष्टं तत्कृतमेव न संशयः॥ इति॥

रक्षिष्यतीति विश्वासे तु सर्वैरपि विशेषणैरुपपादकमभिहितम्। अहमेवेत्युक्तं स्वशरीरकत्वं तावत् स्वरक्षणविश्वासोपपादकम्। को हि स्वशरीरं न रक्षेत्। शिवशब्दोक्तमुक्तविश्वासविरोधिरागद्वेषादिहेतुमलराहित्यं समाश्रयणीयतोपयोगिसकलकल्याणशालित्वं सकलभूतहिताशंसितृत्वं सकलभूतहितकर्तृत्वं हितविरोधिसकलदुरितनिवर्तकशिवशब्दवाच्यत्वमित्येतत्सर्वमपि तदुपपादकम्। "शिवो यजति सर्वत्र शिवः सर्वमिदं जगत्"। इति विशेषणद्वयोक्तं चेतनाचेतनात्मकसकलप्रपञ्चनियन्तृत्वरूपं सर्वेश्वरत्वमपि तदुपपादकम्। सर्वेश्वरो हि तद्भक्ताभिलषितदानसमर्थ इति विश्वसितुं शक्यः। पालनार्थाद्भुजिधातोः दैप्शोधन इति धातोश्च ताच्छील्यार्थकत्वेन भोक्ता दातेति विशेषणद्वयेनाभिहितं भक्तरक्षणस्वभावकत्वं तदीयग्रामादिकमहापातकादिसकलदुरितनिवर्तकस्वभावकत्वं च तदुपपादकमिति स्पष्टमेव। गोप्तृत्ववरणेऽपि भोक्तृत्वमेवोपपादकम्। स्वयमेव रक्षकस्वभावः कथं रक्षको भवेति प्रार्थितो न रक्षेत्। (तुशब्देन) देवतान्तरनिरपेक्षत्वरूपकार्पण्योपपादकं स्वस्य देवतान्तराणां च नियम्यनियामकभावराहित्यरूपं तुशब्देनोक्तमिति विवेकः॥

एवं त्रिभिश्श्लोकैर्जपक्रियात्मसमर्पणानन्तरं पञ्चब्रह्मषडङ्गमन्त्रानपि मूलमन्त्रदशांशसंयोगेन जप्त्वा शिवमष्टपुष्पिकया पुष्पाञ्जलित्रयेण चाभ्यर्च्य पुरतः कृताञ्जलिबन्धः स्थित्वा स्तोत्रमपि

विज्ञापयेत्। पञ्चावरणस्तोत्रैरन्यैरपि श्रुतिस्मृतिपुराणागमादिदृष्टैः पूर्वाचार्यकृतैः स्तोत्रैर्वा यथासंभवं स्तुवीत। स्वकृतस्तोत्रं श्रुतितुल्यमिति पौराणिकाः॥

## प्रदक्षिणविधिः

एवं स्तुत्वा पुष्पाञ्जलिसमर्पणपूर्वकं साष्टाङ्गं प्रणम्य प्रदक्षिणत्रयं कृत्वा पञ्चवारं प्रणम्य पुनः प्रदक्षिणं कुर्यात्। पूजासाफल्यसिध्द्यर्थं प्रदक्षिणमावश्यकम्।

पदात्पदान्तरं गच्छेत्करौ चलनवर्जितौ।
स्तुतिर्वाचा हृदि ध्यानं चतुरङ्गं प्रदक्षिणम्॥

आसन्नप्रसवा नारी तैलपूर्णं यथा घटम्।
वहन्ती शनकैर्याति तथा कुर्यात्प्रदक्षिणम्॥

तत्प्रदक्षिणं त्रिविधम्। सव्यमपसव्यं सव्यापसव्यं चेति। देवं स्वस्य दक्षिणभागे कृत्वा क्रियमाणं सव्यम्। तद्विपरीतमपसव्यम्। उभयं मिलितं सव्यापसव्यम्। त्रिविधमपि इन्द्रदिगादीन्द्रदिक्पर्यन्तं कर्तव्यम्। सव्यापसव्यं सोमसूत्रस्थानादि सोमसूत्रस्थानान्तं वा कर्तव्यम्। तत्र सव्यं ब्रह्मचारिणाम्, अपसव्यं यतीनाम्, सव्यापसव्यं गृहिवानप्रस्थयोरिति कश्चन पक्षः। सव्यं साधारणं, अपसव्यं यतीनामेव, सव्यापसव्यं दीक्षितानामेवेत्यपरः पक्षः॥

## प्रणामविधिः

प्रणामश्चतुर्विधः। अष्टाङ्गः पञ्चाङ्गः त्र्यङ्ग एकाङ्गश्च। अष्टाङ्गो द्विविधः—दण्डप्रणामः केवलप्रणामश्च। पद्भ्यां कराभ्यां उरसा शिरसा वाचा क्रियमाणो दण्डप्रणामः। पादद्वयेन करद्वयेनोरसा शिरसा वाचा मनसा धिया दृष्ट्या च क्रियमाणो दण्डप्रणाम इति पक्षान्तरम्। अत्र मनसेत्यनन्यमनस्कत्वमुच्यते। धियेति शिवमहिमानुसन्धानरूपस्तोत्रं विविच्यत इति भेदः। जानुद्वयेन

करद्वयेनोरसा शिरसा मनसा वाचा दृष्ट्या च क्रियमाण इत्यपि पक्षान्तरम्। पादद्वयेन जानुद्वयेन करद्वयेनोरसा शिरसा मनसा दृष्ट्या च क्रियमाण इत्यपि पक्षान्तरम्। पादद्वयेन बाहुद्वयेन उरसा शिरसा वाचा दृष्ट्या च क्रियमाण इत्यपि कश्चन पक्षः। शिरसा हस्ताभ्यां कर्णाभ्यां चुबुकेन बाहुभ्यां च भुवं संस्पृश्य क्रियमाणः केवलप्रणामोऽष्टाङ्गः। शिरसा हस्ताभ्यां जानुभ्यां च भुवं स्पृष्ट्वा क्रियमाणः पञ्चाङ्गः। शिरो हस्तौ बाहू च जानुनि निधाय क्रियमाणः पञ्चाङ्ग इति पक्षान्तरम्। शिरसि हस्ताभ्यामञ्जलिबन्धनं त्र्यङ्गनमस्कारः। केवलं शिरसैवानमनमेकाङ्गनमस्कारः। एते प्रणामा देशकालबलाद्यपेक्षया यथासंभवं विनियोक्तव्याः॥

## अग्निकार्यविधिः

इत्थं परमेश्वरं स्तुतिप्रदक्षिणनमस्कारैः सन्तोष्य "स्वामिन्नग्निकार्यं करोमी" ति विज्ञाप्य शिवादाज्ञां गृहीत्वा सामान्यार्घ्यकरोऽग्न्यगारं गत्वा निरीक्षणादिचतुस्संस्कारैः शुद्धे हस्तमाने मृत्सिकतान्यतरनिर्मिते स्थण्डिले अरणिसूर्यकान्तादिजनितं श्रोत्रियागारसमाहृतं वा वह्निं प्रज्वाल्य हुंफडन्तास्त्रेण प्रोक्षणताडने विधाय वौषडन्तकवचेनाभ्युक्ष्य हां हं हां वह्निमूर्तये नम इति संहारमुद्रया वह्निचैतन्यं पूरकवायुना हृत्पुण्डरीकमध्यवर्तिना अनन्ताव्ययकविप्रभृतिभिर्नामभिर्व्यवहितं समुद्भ्रान्तं प्रपञ्चस्य निरतिशयसुखप्रापकमप्राकृतपद्मकोशमहाप्रकाशप्रतीकाशं हृदयं ज्ञात्वाऽधोमुखं नाभेरुपर्यामूलरन्ध्रं गच्छन्तं सुषुम्नानाडीसहितमशेषशरीरव्याप्तं समस्तस्यापि विश्वस्य महदायतनं सन्ततं द्विसप्ततिसहस्रनाडीभिः परिवृतं इडा सुषुम्ना पिङ्गलाख्याभिर्नाडीभिः समरसीभूताभिः पुनश्च परिवृतमेवम्भूतं हृदयं महापद्मकोशसन्निभं तत्रैव लम्बमानं ज्ञात्वा तत्र अपारपारावारमध्यप्रदेशेऽतिसूक्ष्मं सर्वजगद्भवनविनोदहेतुभूतमतिरम्यं सुषिरं सकलजगत्प्रतिष्ठाकारणीभूतं विचिन्त्य तस्य मध्ये महाज्वालाजटिलं विश्वार्चिषं विश्वतोमुखमग्निं वैश्वानरं समस्तरसादिवस्तूनि विभज्य भुञ्जन्तं

तदधिष्ठातृत्वेन विद्यमानं अजरं कविं पुराणममृतं लिङ्गरूपं परमेश्वरं साधकस्यापादनलमस्तकं तापयन्तं तत्र नीवारशूकवदल्पीयांसं वह्निशिखामध्ये ज्वलन्तं वैश्वानरं तदधिष्ठातृत्वेन प्रसिद्धं परमेश्वरं तच्छिखामध्ये संचिन्त्य तमेव परमात्मानं पूर्णमेव गुरुकटाक्षात्सामरस्यदार्ढ्येनापरोक्षविषयीभूतं प्राणलिङ्ग व्यष्टिसमष्टिरूपमन्त्ररत्नवाच्यत्वेन व्यवस्थिताकारोकारमकारबिन्दुनादादिसकलतत्त्वकारणभूतं समष्ट्यात्मनेश्वररूपं व्यष्टिसमष्ट्यात्मना सदाशिवरूपं व्यष्टिसमष्ट्युभयसम्बन्धसामरस्यात्मना महालिङ्गस्वरूपं सर्वज्ञत्वसर्वनियन्तृत्वाद्यनन्तकल्याणगुणविशिष्टं भक्तानुग्रहैकदीक्षनं परमकारुणिकं पार्वतीपतिं ब्रह्मोपेन्द्रमहेन्द्रप्रभृतिसकलसुरनिकरपरिपूजितपादाम्बुजं उन्मनादिसकलभुवनातीतसोमलोकाख्याप्राकृतलोकमध्यवर्तिपरशिवपुरविहिताविर्भावं श्रीसाम्बशिवं ध्यात्वा पूर्वोक्तरेचकपूरकक्रमेण हां वह्निमण्डलाय नम इति तत्र स्थितेन वह्निना संयोज्य तत्सहितं सुषुम्नामार्गेण द्वादशान्तं प्रापय्य परमशिवसंपृक्तं कृत्वा रेचकेन पिङ्गलया निस्सार्य हां हूं वह्निचैतन्याय नम इति तमुद्भवमुद्रया ज्वलदग्नौ निक्षिपेत्। तदनु सद्योजातादिमन्त्रैर्नमोऽन्तैः पञ्चभिरग्निं संपूज्य वौषडन्तशक्तिमन्त्रेण धेनुमुद्रयामृतीकृत्य कवचेनावकुण्ठ्य अस्त्रेण संरक्ष्य हृदयेनाभ्यर्च्य पारमेश्वरवीर्यमिति विभाव्य वागीश्वरं वागीश्वरीं च समरसावीशदिग्गतौ ध्यात्वा वागीश्वरीगर्भरन्ध्रादध्यात्मसंमुखं[1] वागीश्वरेण तद्वीर्यं क्षिप्यमाणं विभावयेत् । ततः स्वाहान्तमूलेनाहुतिपञ्चकं दत्वा हां शिवाग्निस्त्वं हुताशनेति नाम कृत्वा गर्भाधानादिपञ्चसंस्कारादिसंस्कृतमग्निं विभाव्य पितरौ हृदयेनाभ्यर्च्य विसृज्य सामान्यार्घ्यजलेन वौषडन्तकवचेन कुण्डं मेखलां च संप्रोक्ष्य मेखलाया दिक्षु पूर्वोत्तराग्रान् दश दश दर्भान् कवचेनास्तीर्य मेखलायाः पूर्वपश्चिमदक्षिणोत्तरदिक्षु ब्रह्मविष्णुरुद्रानन्तान् समभ्यर्च्याग्न्यर्भकं रक्षतेति विज्ञाप्य—

> पञ्चवक्त्रयुतं रक्तं सप्तजिह्वाविराजितम् ।
> दशहस्तं त्रिणेत्रं च सर्वाभरणभूषितम् ॥

---

[1] गर्भनाड्यामात्म-पा.

रक्तवस्त्रपरीधानं पङ्कजोपरि संस्थितम् ।
बद्धपद्मासनासीनं दशायुधसमन्वितम् ॥ इति ।

शिवाग्निं ध्यात्वा तस्योर्ध्ववक्त्रे कनका बहुरूपा अतिरिक्तेति जिह्वात्रयं पूर्वादिवक्त्रेषु सुप्रभा कृष्णा रक्ता हिरण्मयीति जिह्वाचतुष्टयं ध्यायेत् । ततो हां अग्नये नम इति संपूज्य हां हूं अग्नये स्वाहेति तिलाहुतिपञ्चकं हुत्वा—

अग्ने त्वमैश्वरं तेजः पावनं परमं यतः ।
तस्मात्त्वदीयहृत्पद्मे स्थाप्य सन्तर्पयाम्यहम् ॥

इत्यग्निं विज्ञाप्याग्नेर्हृदयकमले आसनमूर्तिसदाशिवावाहनपूर्वकं सर्वोपचारैः संपूज्याग्निवक्त्रे शिववक्त्रसंनिधानं विभाव्य स्वाहान्तमूलेन समिदाज्यलाजसर्षपतिलादिभिः शतं तदर्धं वा यथाशक्ति हुत्वा ब्रह्माङ्गानां दशांशाहुतिं हुत्वा हौं शिवाय वौषडित्यूर्ध्ववक्त्रे पूर्णाहुतिं दत्वा स्वाहान्तमूलेन चरुं ग्रासत्रयपरिमितं हुत्वा ब्रह्माङ्गानामेकैकाहुतिं हुत्वाऽऽचमनं प्रदाय चन्दनताम्बूलानि दत्वा [1]हस्तौ प्रक्षाल्याष्टपुष्पिकया संपूजयेत् । आज्याद्यभावे पत्रपुष्पादिभिर्वा जुहुयात् । ततः स्तोत्रप्रदक्षिणनमस्कारैः सन्तोष्य पराङ्मुखार्घ्यं दत्वा ततः शिवमुत्थाप्य लिङ्गस्थे शिवे योजयेत् । ततः परिस्तरणदर्भान् सङ्गृह्याग्रमध्यमूलान्याज्यासिक्तानि कृत्वा एकं दर्भं समादाय शेषमग्रप्रभृति दहेत् । तत एकं दर्भमग्नौ निक्षिप्य तद्भस्मना ललाटे तिलकं कुर्यात् । तद्भस्मधारणमायुःश्रीकीर्तिवर्धनं विजयारोग्यकरं च । ततस्तस्य दक्षिणभागे चतुरश्रमण्डलं कृत्वा मण्डलप्रान्ते पूर्वाद्युत्तरान्तासु महादिक्षु रुद्रमातृगणयक्षान् ईशानादिकोणेषु ग्रहासुरराक्षसनागान् मण्डलमध्ये ईशानाग्नेयनैरृत्यकोणेषु नक्षत्रराशिविश्वेदेवान् वायुवरुणदिशोर्मध्ये क्षेत्रपालं चाभ्यर्च्यार्घ्यं दत्वा जलमिश्रान्नेन रुद्रादिभ्यो बलिं प्रदायाचमनं दद्यात् । रुद्रादीनामभ्यर्चने नमोन्तास्तत्तन्मन्त्राः बलिदाने स्वाहान्ताः । क्षेत्रपालस्यैकवचनं, अन्येषां बहुवचनमिति भेदः । ततः प्राग्भागे चतुरश्रमण्डले इन्द्रादिविष्णवन्तानां लोकपालानां बलिं दद्यात् । ततो मण्डपाद्बाह्याङ्कणे गोमयमण्डले वायसा-

[1] भस्मपाद्याष्टपुष्पिकया–पा.

द्भ्यः समग्रभेदिभ्यः स्वाहा, अग्न्यादिभ्यः स्वाहा, सर्वेभ्यो ग्रहवास्तुदेवेभ्यः स्वाहा, इति पृथक् पृथग्बलिं दत्वा श्वभूतपतितप्रेतादिभ्योऽप्येकं बलिं निक्षिपेत्। यद्वा संक्षिप्य सर्वोद्देशेन—

ये रुद्रा रुद्रकर्माणो रौद्रस्थाननिवासिनः।
सौम्याश्चैव तु ये केचित्सौम्यस्थाननिवासिनः॥

मातरो रुद्ररूपाश्च गणानामधिपाश्च ये।
विघ्नभूतास्तथान्ये च दिग्विदिक्षु समाश्रिताः॥

सर्वे संप्रीतमनसः प्रतिगृह्णन्त्विमं बलिम्।
सिद्धिं जुषन्तु नः क्षिप्रं भयेभ्यः पान्तु मां सदा॥

इति मन्त्रेणैकं बलिं क्षिपेत्। सर्वमिदं बलिकार्यमग्निकार्याधिकारिणैव कर्तव्यम्, न सर्वैः। अग्निकार्याधिकारे सत्यपि होमोपकरणवैकल्ये तदशक्तौ वा होममन्त्रान् होमसङ्ख्यापेक्षया दशगुणावृत्त्या जपेत्। ततः शिवज्ञानपूजां कुर्यात्॥

## शिवज्ञानपूजाविधिः

शिवज्ञानानि कामिकादयो महादिव्यागमाः। तत्र कामिकं त्रिभेदं परार्धग्रन्थम्। योगजं पञ्चभेदं लक्षग्रन्थम्। अजितं चतुर्भेदं लक्षग्रन्थम्। दीप्तं नवभेदं लक्षग्रन्थम्। सूक्ष्ममेकतन्त्रं पद्मग्रन्थम्। सहस्रं दशभेदं शङ्खग्रन्थम्। अंशुमद्द्वादशभेदं पञ्चलक्षग्रन्थम्। सुप्रभेदमेकतन्त्रं त्रिकोटिग्रन्थम्। विजयमष्टभेदं त्रिकोटिग्रन्थम्। अनलमेकतन्त्रं त्रिंशत्सहस्रग्रन्थम्। वीरतन्त्रं द्वादशभेदं लक्षग्रन्थम्। चिन्त्यजं षड्विधं लक्षग्रन्थम्। कारणं सप्तभेदं कोटिग्रन्थम्। निश्वासमष्टभेदं कोटिग्रन्थम्। स्वायम्भुवं त्रिभेदं सार्धकोटिग्रन्थम्। रौरवं षड्भेदमष्टार्बुदग्रन्थम्। मकुटं द्विभेदं लक्षग्रन्थम्। विमलं षोडशभेदं त्रिलक्षग्रन्थम्। चन्द्रज्ञानं चतुर्दशभेदं त्रिकोटिग्रन्थम्। बिम्बं पञ्चदशभेदं लक्षग्रन्थम्। प्रोद्गीतं षोडशभेदं त्रिलक्षग्रन्थम्। ललितं दशभेदविंशत्यष्टसहस्रग्रन्थम्। सिद्धं चतुर्भेदं सार्धकोटिग्रन्थम्। सन्तानं सप्तभेदं षट्सहस्रग्रन्थम्। शर्वोक्तं पञ्चभेदं द्विलक्षग्रन्थम्।

पारमेश्वरं सप्तभेदं द्वादशलक्षग्रन्थम्। किरणं नवभेदं पञ्चकोटि-ग्रन्थम्। वातुलं द्वादशभेदं लक्षग्रन्थम्। एवमष्टाविंशतिभेदा दिव्यागमाः। परार्धशङ्ख पद्म षट्पञ्चाशत्सहस्राधिकैः षड्डुत्तरषष्ठ्या-लक्षैर्न्यूनं पद्मं चेत्येतावत्सङ्ख्या ग्रन्थाः। तदुपभेदा अष्टोत्तरद्विशत-सङ्ख्याः। इत्थम्भूतान् सर्वानपि दिव्यागमान् यथालाभं कतिचिद्वा, एकं वा, तत्रापि स्वपूजोपयोगिसंहितामात्रं वा, लक्षणशालिषु [1]पुस्तकेष्वालोकयेत्॥

## पुस्तकलक्षणम्

पुस्तकं तु द्वाविंशत्यङ्गुलदीर्घं त्र्यङ्गुलविस्तारं [2]श्रीमदक्षरम्। एकविंशत्यङ्गुलदीर्घं त्र्यङ्गुलविस्तारं श्रीरक्षम्। विंशत्यङ्गुलदीर्घं यवहीनत्र्यङ्गुलविस्तारं चन्द्रकान्तम्। इदमुत्तमत्रयम्। अष्टाद-शाङ्गुलदीर्घमर्धाधिकद्व्यङ्गुलविस्तारं नलिनम्। सप्तदशाङ्गुलदीर्घं त्रियवाधिकाङ्गुलत्रयविस्तारं श्रीनिवासम्, षोडशाङ्गुलदीर्घं द्वियवाधिकाङ्गुलद्वयविस्तारं श्रीभद्रम्, इदं मध्यमत्रयम्। पञ्चदशा-ङ्गुलदीर्घं यवाधिकाङ्गुलद्वयविस्तारं लक्ष्मीनिवासम, चतुर्दशाङ्गुल-दीर्घमङ्गुलद्वयविस्तारमुमाभद्रम्, त्रयोदशाङ्गुलदीर्घं यवहीनाङ्गुल-द्वयविस्तारं वीरभद्रम, इदं कनिष्ठत्रयम्। एवं विधेषु पुस्तकेषु यजमानस्य यान्यनुकूलानि पत्रचतुष्टयांशतृतीयांशयोर्मध्ये मध्या-गतसुषिरवन्ति कारयित्वा यवोदरमानैः कार्पाससूत्रैराबध्नीयात्। एतेषां शिवज्ञानपुस्तकानां पूजनाय शिवस्य दक्षिणपश्चिमे वायव्य-भागे वा त्रयस्त्रिंशद्धस्तप्रभृतिषु त्रिहस्तपर्यन्तेषु परिमाणेष्वन्यतम-परिमाणवद्विद्याकोशगृहं कृत्वा सुगन्धिचन्दनाद्यनुलिप्तभित्तिकस्य तस्य मध्ये नागदन्तादिरचितं सुवर्णरेखादिचित्रितं विद्यासिंहासनं निधाय तत्र दुकूलादिकमास्तीर्य तन्मध्ये सुवर्णरौप्यताम्रकांस्यार-कूटलोहदारुवेणुविदलनादिकृतां विद्यारत्नकरण्डरूपां मञ्जूषां निधाय तस्यां पुस्तकानि निदध्यात्। तेषु सर्वेभ्यः शिवज्ञानेभ्यो नम इति गन्धपुष्पधूपदीपनैवेद्यैः संपूज्य—

सर्वज्ञानप्रदं शम्भुं सर्वाज्ञानविघातकम्।
कायेन मनसा वाचा विद्यापीठाश्रयं भजे॥

---

[1] पुस्तकेषु लेखयेत्—पा. [2] लक्ष्मीप्रदम्—पा.

इति स्तुत्वा नमस्कुर्यात्। पुस्तकालाभे चतुरश्रमण्डलेऽष्ट-ष्टदलं पद्मं, तदावारकमष्टादशदलपद्मं च लिखित्वा कर्णिकायां हौं शिवाय नम इति वागीश्वरीसहितं शिवं संपूज्य पूर्वादिषु दशसु दलेषु कामिकादीन् सुप्रभेदान्तान् शिवेनाधिकरणान्तर-निरपेक्षेण साक्षान्निर्मिततया शैवसंज्ञान् दिव्यागमान् संपूज्याष्टा-दशसु दलेषु विजयादि वातुलान्ताननादिरुद्राद्यधिकरणेन शिवेन निर्मिततया रौद्रसंज्ञान् पूजयेत् ॥

## अथ गुरुपूजा

अथ गुरुं स्वपीठस्थं गत्वा तस्य पादौ प्रक्षाल्य शिवबुध्या-गन्धादिभिः संपूज्य पुष्पाञ्जलित्रयं कृत्वा साष्टाङ्गं त्रिः प्रणम्योत्थाय भूमौ जानुनी विन्यस्य कृताञ्जलिपुटः क्षमस्वेति ब्रूयात्। यदि—

मधुलुब्धो यथा भृङ्गः पुष्पात्पुष्पं वनान्तरे।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥

इति शास्त्रमनुसृत्याधिकज्ञानार्थमन्यं गुरुमाश्रयति तदापि पूर्वगुरु-मपि पूजयेत्। ततः शिवसमीपमागत्याष्टपुष्पिकया शिवं संपूज्य विशेषार्घ्यं दत्वा प्रणामपुरस्सरमभिमतप्रार्थनां कृत्वा—

न्यूनं वाप्यधिकं वापि यन्मया मोहतः कृतम्।
सर्वं तदस्तु संपूर्णं त्वत्प्रसादात्प्रभो मम ॥

इति संप्रार्थ्य—

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।
दासोऽयमिति मां मत्वा क्षन्तव्यं भक्तवत्सल ॥

स्वामिन् क्षुद्रेण दासेन मलीमसधिया मया।
कदर्थितोऽपि यद्भक्तिवशात्प्रीतः क्षमस्व तत् ॥

इति विज्ञापयेत्। ततः सद्योजातादिक्रमेण पञ्चसु शिरस्सु शिवमभ्यर्च्य अस्त्रादिहृदयान्तान्यङ्गानि प्रातिलोम्येन संपूज्य पूर्ववद्यथेष्टमूर्ध्वमुखो भवेति संप्रार्थ्य हां हौं शिवाय साङ्गाय पराङ्मुखार्घ्यं स्वाहेति पराङ्मुखार्घ्यं दत्वा, सद्यादीनि ब्रह्माण्य-

स्त्रादीन्यङ्गानि च गर्भावरणरूपाणि देवस्याङ्गेषु योजयेत् । अन्येभ्योऽपि तत्तदावरणदेवेभ्यः पराङ्मुखार्घ्यं दद्यात् । हुं फडन्तास्त्रेण करद्वयाङ्गुष्ठतर्जन्यग्राभ्यामूर्ध्वे पुष्पं प्रक्षिपन् नाराचमुद्रया मन्त्रानुत्थाप्य [1]हां हौं हं शिवमूर्तये नमः इति दिव्यमुद्रया शिवस्य हृदयस्थाने संयोज्य तेषां तत्र लयं विभावयेत् । तदनु गुरुविद्यापीठसप्तगुरुमहालक्ष्मीगणपतिद्वारपालेभ्योऽपि पराङ्मुखार्घ्यं दत्वा स्वस्वमन्त्रेण तान्विसर्जयन् । ततः परिवारदेवेभ्योऽपि पराङ्मुखार्घ्यं दत्वा प्रत्येकं सपुष्पैर्वस्त्रैराच्छाद्य, अस्त्रमन्त्रेण पेटकस्य पार्श्वेषु निदध्यात् । ततः शिवमन्त्रं समुच्चार्य पद्मपीठाल्लिङ्गमादाय दुकूलादिभिः संवेष्ट्य पेटकमध्ये विन्यस्य भीमरुद्रं स्मरन् रक्षेति शिवाज्ञां विज्ञाप्य पिधानं कुर्यात । ततो मिश्रपूजां कुर्वन् प्रागकृतपञ्चपूजः शिवस्योद्वासनानन्तरं आवाहनादिसर्वोपचारसहितां चण्डपूजां कुर्यात् । इत्थं प्रातर्मध्याह्नसायाह्नार्धरात्रेषु कालेषु वा प्रातरादिकालद्वये वा प्रातःकालमात्रे वा घटिकात्रयेण पूजा कर्तव्या । संक्रान्त्युपरागाष्टमीचतुर्दश्यादिव्यतिरिक्तकालेषु बुभुक्षुणा रात्रौ पूजा वर्जनीया । तेनापि त्रिकालपूजा क्रियते चेदस्तमयं समारभ्य घटिकात्रयमध्ये सायंकालपूजा समापनीया । मुमुक्षोस्तु न कालनियमः । यद्वा बुभुक्षोरपि न कालनियमः ।

> यथासंभवकाले तु यथासंभवनाडिकाः ।
> आत्मार्थयजनं कुर्याद्यथाशक्त्यनुरोधतः ॥

इत्यप्यागमदर्शनात् । एवं प्रपञ्चोपचारान् कर्तुमशक्नुवन् षोडश, दश, पञ्चोपचारान् वा कुर्यात् ॥

## उपचारभेदः

आवाहनासन पाद्यार्घ्याचमनस्नान वस्त्रोपवीत गन्धपुष्प धूपदीप नैवेद्यमुखवास स्तोत्रसहितप्रणामप्रदक्षिणसहितविसर्जनानि षोडशोपचाराः । यद्वा आसनावाहन पाद्याचमनार्घ्य स्नानवस्त्र-

---

[1] हां हं हां–पा.

गन्धपुष्प नैवेद्यताम्बूल धूपदीपारार्तिक भस्मचुलकोदकानि षोडशोपचाराः। आसनावाहन पाद्याचमनार्घ्यस्नानवस्त्रगन्धपुष्पनैवेद्यानि दशोपचाराः। गन्धपुष्पधूपदीपनैवेद्यानि पञ्चोपचाराः। यद्यपि—

पार्थिवं गन्धपुष्पाद्यं कन्दमूलफलादिकम्।
आप्यं वारि पयो वस्त्रं दधि गोमूत्रकादिकम्॥
आग्नेयं हेमरत्नादि दीपमाभरणादिकम्।
वायव्यं चामरं धूपं व्यजनं तालवृन्तकम्॥
नाभसं गेयवाद्याद्यं वीणावेणुस्वनादिकम्।
एते पञ्चोपचारास्ते कथिताः शास्त्रवेदिभिः॥

इति पञ्चोपचाराः प्रपञ्चेन दर्शिताः, तथाप्यशक्तानां गन्धादिनैवेद्यान्तोपचारा एव क्रमात्पार्थिवनाभसवायव्यतैजसाप्याः पञ्चोपचाराः। सर्वोपचाराः शिवस्यावाहनवन्निश्वासोच्छ्वासरूपचन्द्रार्कगतिनिरोधेन कर्तव्या इत्यागमप्रसिद्धेः। केषुचिदुपचारेषु मात्रागणनेन कालनियमोऽप्यागमेषु दर्शितः। आवाहने द्वादश मात्राः। पाद्ये पञ्च। आचमने तिस्रः। अर्घ्ये एकः। गन्धे षट्। धूपे द्वादश। दीपे षट्। नैवेद्ये चतुर्विंशतिः। आरार्तिके सप्त। नीराजने षोडश। भस्मार्पणे सप्त। छत्रे पञ्च। चामरे दश। व्यजने तिस्रः इति। एवं चन्द्रार्कगतिनिरोधेन क्रियमाणेषूपचारेषु तत्तन्मन्त्रा मनसैव जप्तव्याः। मन्त्राश्च प्रासादशिवमन्त्र पञ्चब्रह्म षडङ्गरूपास्तत्तदुपचारेषु यथाविधि विनियोक्तव्याः। तत्रावाहनपाद्यवस्त्रविलेपन भूषण दर्पणच्छत्रचामरतालवृन्त जपस्तोत्रनमस्कारेष्वन्येषु च विशेषोक्तिरहितेषूपचारेषु मन्त्रान्तो नमश्शब्दः। अर्घ्यासनधूपदीप नैवेद्यपानीयमुखवासनीराजन पवित्र जपपूजात्मसमर्पणहोमेषु स्वाहाशब्दः। मार्जनसेचनपुष्पपूर्णाहुतिषु वौषट्शब्दः। मलस्नानशोधन पाशच्छेदन प्रोक्षण ताडनभेदन विघ्ननिवारणेषु हुं फट्शब्दः। रक्षायां फट्शब्दः। आचमने स्वधाशब्दः। एवमुक्तनियमैः पञ्चोपचारानपि कर्तुमशक्तः केवलमष्टपुष्पिकयार्चयेत्॥

आसने प्रथमं पुष्पं दातव्यं शुद्धचेतसा।
मूर्तिध्यानं हृदा कार्यं पुष्पेणैवापरेण तु॥

पञ्चपुष्पप्रदानेन पञ्चाङ्गानि प्रकल्पयेत् ।
शिवं तथाष्टमेनैव कथिता चाष्टपुष्पिका ॥

पञ्चाङ्गानि मूर्धादीनि । पञ्चब्रह्माणि नेत्रवर्जितानि हृदयादीनि वा।

एतानि चाष्टपुष्पाणि सर्वसाधारणानि तु ।
सर्वसिद्धिप्रदानीह तथा सर्वाश्रमेषु च ॥

सर्वेषां चैव वर्णानां सर्वसाधारणानि च ।
एककालं द्विकालं वा त्रिकालं वा प्रपूजयेत् ॥

प्रातर्मध्याह्नसमये तथाचास्तमिते रवौ ।
पूजयेत्परया भक्त्या त्वष्टपुष्पविधानतः ॥

दरिद्राणामनाथानां बालस्त्रीबालिशेषु च ।
भोगिनां व्याधिजुष्टानां तथा ध्यानार्पितात्मनाम् ॥

शिवशास्त्रानुरक्तानां नानासिद्धिहितात्मनाम् ।
अनुरक्तविरक्तानां कथिता साष्टपुष्पिका ।

इति कालोत्तरवचनात् । भोगो राज्यपरिपालनं तद्वन्तो भोगिनः, तेषां राज्यपरिपालनं कुर्वतामित्यर्थः । राज्यपरिपालनेन बहुषु शिवस्थानेषु शिवभक्तानां गृहेषु च पूजाप्रवर्तनेन महत्पुण्यं लभ्यते। शिवशास्त्रानुरक्तानां तद्व्याख्यानतदध्ययननिरतानामित्यर्थः । शिवशास्त्रव्याख्यानेन हि लोके यथावच्छिन्नपूजाप्रवर्तनेन बहुपुण्यं लभ्यत इति ॥

### कपिलापूजाविधिः

शिवपूजां समाप्य कपिलापूजां कुर्यात् । यथा—

कपिलां—नन्दा भद्रा सुरभिः सुशीला [1]सुमनाश्चेति पञ्चगोमातृरूपायै कपिलायै नमः इति गन्धपुष्पादिभिरभ्यर्च्य—

सौरभेयि जगन्मातर्देवानाममृतप्रदे ।
गृहाण वरदे ग्रासमीप्सितार्थं च देहि मे ॥

---

[1] सुमनस्संज्ञा—पा.

इति ग्रासं दत्वा—

वन्दितासि वसिष्ठेन विश्वामित्रेण जन्हुना ।
कपिले [1] हर मे पापं यन्मया दुष्कृतं कृतम् ॥

इति संप्रार्थ्य—

गावो ममाग्रतो नित्यं गावो मे सन्तु पृष्ठतः ।
गावो मे हृदये चापि गवां मध्ये वसाम्यहम् ॥

इति जपेत् ।

एवं नरो जपन्मन्त्री त्रिसन्ध्यं नियतः शुचिः ।
विमुक्तः सर्वपापेभ्यः शिवलोकं प्रपद्यते ॥

## परार्थालयदर्शनम्

ततः [2] परं आलयसमीपस्थः पूजान्ते शिवालयं गत्वा तत्सेवामपि कुर्यात् । तत्रायं क्रमः—

देवालयसमीपं गत्वा गोपुरद्वारबाह्ये वा बलिपीठस्य बाह्ये वा स्थूललिङ्गात्मकस्य विमानस्य नमस्कारं कुर्यात् । ततो भद्रलिङ्गस्य बलिपीठस्य ध्वजस्तम्भस्य वृषभस्यापि नमस्कारं कृत्वा—

अन्तःप्रदेशे शिवदर्शने च शिवार्चने तत्फलसिद्धिलाभे ।
देह्यभ्यनुज्ञां भगवन् प्रसन्नस्त्वत्पादपद्मप्रणताय मह्यम् ॥

इति वृषभं संप्रार्थ्य बलिपीठादधोदेशे साष्टाङ्गं शिवं प्रणमेत् । देहं वस्त्रेणाच्छाद्य न प्रणमेत् । शिवस्याग्रपृष्ठवामभागगर्भगृहेषु नमेत् । प्रत्यङ्मुखे चोत्तरदिङ्मुखे च लिङ्गे वामभागेऽपि प्रणमेत् । प्रणम्य च देवदेवस्य पुरतः पुष्पाञ्जलिं क्षिपेत् । ततः प्रदक्षिणं कुर्यात् । गर्भगृहे प्रदक्षिणमर्चकस्यैव । अन्तर्मण्डले प्रदक्षिणं दीक्षितानामेव । अन्तर्हारादिषु सर्वेषाम् । तत्रान्तर्हारे प्रदक्षिणमेकगुणम् । मध्यहारे त्रिगुणम् । मर्यादायां चतुर्गुणम् । महामर्यादायां पञ्चगुणम् । क्षेत्रावधौ शतगुणम् । एवं बलकालानुरूपे प्रदेशे एकविंशतिः पञ्चदश वा सप्त वा पञ्च वा त्रीणि वा

---

[1] दह–पा. [2] परार्थालय–पा.

प्रदक्षिणानि कुर्यात्। अत्यन्तमनवसरेऽप्येकं प्रदक्षिणं कुर्यात्। एवं प्रदक्षिणं कुर्वन् गर्भगृहेऽन्तर्मण्डले च संभावितं सोमसूत्रलङ्घनं न कुर्यात्। तल्लङ्घनवर्जनार्थं गर्भगृहे सोमसूत्रप्रभृति सव्यापसव्यमेव कर्तव्यम्। ततो बहिरन्तर्मण्डलमात्रे सव्यापसव्यम्। तत्रैवैन्द्रादि सोमसूत्रादि वा कार्यमिति प्रागुक्तम्। प्रदोषे तु—

वृषादिचण्डनाथान्तं वृषभं सोमसूत्रकम्।
पुनर्वृषं चण्डनाथं नालदेशस्य पार्श्वतः॥

(?गमनादिति तत् कथं सङ्गच्छते। प्रदक्षिणेन शिवलिङ्गस्य फलं भवति। सङ्ख्याधिक्येन फलाधिक्यं च वर्णितम्। तत्रैव प्रदेशान्तरे सोमसूत्रोल्लङ्घनदोषोऽपि श्रुतः।

ननु विधिवाक्यश्रवणानन्तरप्राप्तस्य प्रदक्षिणस्य फलश्रवणान्निषेधश्रवणाच्च समप्रधानतुल्यबलविरोधे विकल्प इति स्मृत्यवगाहनाच्च "उदिते जुहोति, अनुदिते जुहोति" इति वाक्यवद्विकल्प इति चेत्; न; न रात्रौ दधि मधु भुञ्जीतेति निषेधस्य गृहागताय शान्तायातिथये लवणमन्नं दध्याहारं प्रकल्पयन्मध्वन्नदानेन तोषयेदिति विधिवाक्यापेक्षया प्राबल्यवर्णनेन विध्यपेक्षया निषेधस्यैव प्राबल्यवर्णनात् प्रदक्षिणविध्यपेक्षया सोमसूत्रलङ्घननिषेधस्यैवौचित्यात्।

नन्वेवं सति "न हिंस्यादि"ति निषेधस्य "अग्नीषोमीयं पशुमालभेते"ति विध्यपेक्षया प्राबल्ये शास्त्रव्याकोपः स्यादिति चेत्; न; तस्य [1]सामान्यविधित्वेन क्रतुबाह्यहिंसापरत्वान्निषेधप्राबल्यस्य "उदिते जुहोति अनुदिते जुहोती"तिवत्तुल्यबलत्वाभावात्तत्कालविशेषपक्षेण विधेश्चरितार्थत्वात् कालविशेषे प्रदेशे च निषेधप्रवृत्त्यापत्तेः।?)

पुनः प्रयायाच्चण्डं च तथैव वृषपृष्ठकम्॥
एवं सव्यापसव्यं तु प्रदक्षिणमिहोच्यते।

आद्यन्तं वृषदेवस्य [2]तत्त्वस्थानमुदाहृतम्।
त्रिचण्डस्थानसंयुक्तं द्विस्थानं सोमसूत्रकम्॥

---

[1] सामान्याविशेषविधित्वेन—पा. [2] चतुरस्थान—पा.

इत्युक्तप्रकारेण कर्तव्यम् । सोमसूत्रं च प्रासादाद्बहिर्नालप्रदेशे [1] प्राग्वद्विस्तारमानं तदर्धमानं वा, तस्य लङ्घने दोषः । सूत्राद्बहिर्लङ्घने तु न दोषः । तदभ्यन्तरेऽपि सङ्कटे तृणादिकमन्तर्धाय लङ्घनीयम् ।

तृणैः काष्ठैस्तथा पर्णैः पाषाणैर्लोष्टकादिभिः ।
अन्तर्धातं पुनः कृत्वा सोमसूत्रं तु लङ्घयेत् ॥

इती वचनात् । क्वचिदपसव्यस्य निषेधोऽप्यास्ते ।

सोमसूत्रद्वयं यत्र यत्र वा विष्णुमन्दिरम् ।
अपसव्यं न कुर्वीत कुर्यादेव प्रदक्षिणम् ॥

इति । ततो द्वारपालौ नन्दिकेश्वरं च नमस्कृत्य तत्तदनुज्ञयान्तः प्रविश्य विघ्नराजं पुष्पाञ्जलिविकिरणमस्तकाहतिपूर्वकं नमस्कृत्वा मण्डपं प्रविश्य देवं नमस्कृत्य मस्तके हृदये वाञ्जलिं बध्वा यथाधिकारं वैदिकागमिकलौकिकपौराणिकद्राविडादिस्तोत्रैः स्तुवीत । तत्राचार्यस्यैव गर्भगृहं प्रविश्य सेवा । इतरेषां ब्राह्मणानामर्धमण्डपं प्रविश्य । क्षत्रियाणामर्धमण्डपद्वारमुखेऽवस्थाय । वैश्यानां वृषाग्रे । शूद्राणां वृषपृष्ठे । वैश्यशूद्राभ्यां वृषाग्रे वृषपृष्ठे च गोमयेन चतुरश्रमण्डलं कृत्वा तत्रैव पुष्पाञ्जलिर्दातव्यः । एवं नृत्तमूर्त्यादीनामपि पुष्पोपहारपूर्वकं प्रणामः कार्यः । शिवप्रणामानन्तरं चण्डेश्वरं प्रणमेत् । इत्थं पीठादिचण्डान्तनमस्कारानन्तरं देवालये संभावितनानापराधसंक्षालनाय देवस्य सन्निधौ यथाशक्ति मूलमन्त्रं जपित्वा देवस्य पृष्ठीकरणं विना निर्गच्छेत् । अपराधाश्च शिवालयमध्ये वाहनारोहणसोपानहसञ्चार गोपुरप्रतिमाच्छायालङ्घननिर्माल्यस्पर्शतल्लङ्घनशिवबलिपीठमध्यसञ्चार प्रमदास्पर्शरागपूर्वकतद्वीक्षणवृथाहासगानभूषणसोत्तरीयप्रदक्षिणनमस्कारैक----हस्तनमस्कार वामभागादिनमस्काराकालनमस्कारप्रभृतयः । एतेषु संभावितान् वर्जनीयानपराधान् क्षमाप्य निर्गच्छेत् । एवं शिवं सेवमानेन ग्रामभूषणादिपत्रपुष्पपर्यन्तेन द्रव्येण वा संमार्जनादिना शरीरव्यापारेण वा देवालयोपकारपर्यवसायिवाङ्मात्रेण

[1] प्रासादविस्तार-पा.

वा कैङ्कर्यं कृत्वैव सेवनीयम्। प्रतिदिनं सेवायामशक्तश्चेदष्टम्यादिषु सेवेत। अष्टम्यामष्टभिर्दिवसैः पर्वणि पक्षेण संक्रान्तौ मासेन च कृतस्य पापस्य क्षयः। प्रदोषे तु त्रिविधकरणार्जितानां महत्तराणामपि पापानां क्षयः। विषुवायनोपरागमहोत्सवादिषु सेवया शिवपदप्राप्तिः॥

एतत्सर्वं वीरशैवव्यतिरिक्तानामवश्याचरणीयम्। तेषां तु तत्सर्वपरिज्ञानमात्रम्, न तु क्रियान्तम्, स्वशरीरस्यैव शिवालयत्वेन भावितत्वात्॥

ततो गृहमागत्य यथावसरं स्वल्पमात्रं वा सिद्धान्तशास्त्रश्रवणं तदभ्यासं वा दीक्षितैः सहादीक्षितसन्निधिं परिहृत्य कुर्यात्॥

न प्रकाश्यमिदं ज्ञानमभक्तानां वरानने।
रक्षणीयं प्रयत्नेन तस्करेभ्यो यथा धनम्॥

इति वचनात्। अथ मध्याह्नसमये प्रपञ्चेन संकोचेन वाष्टपुष्पिकामन्त्रेण वा पूजयेत्। कुतश्चिद्वैकल्यात्स्वपरिगृहीतलिङ्गार्चनालाभे तुल्यानुष्ठायिना परेणार्चिते लिङ्गे संक्षेपेणाष्टपुष्पिकामात्रं कुर्यात्। स्थिरलिङ्गे वा साधारणमन्त्रैरर्चनं कुर्यात्॥

प्रणवो मातृका माया व्योमव्यापी षडक्षरः।
प्रासादोऽघोरमन्त्रश्च सप्त साधारणा मताः॥

एवं यथाकथंचिच्छिवमभ्यर्च्य काले भोक्तुमिच्छन् सर्वस्मादपि पाकादग्र्यमुद्धृत्य ततोऽर्धं शिवाय निवेद्य इतरार्धेन यथाधिकारं वैदिकं शैवं च होमं कुर्यात्। वैदिको वैश्वदेवहोमः। शैवश्चुल्लीहोमः॥

## चुल्लीहोमः

तस्यायं क्रमः।

चुल्लीं निरीक्षणादिभिः संशोध्य तत्राग्निं पूरककुम्भकाभ्यां बिन्दुनाभिस्थानाग्निभ्यां सहैकीकृत्य भौतिकबैन्दवजाठराग्नित्रयं रेचकेन निस्सार्य पिङ्गलया चुल्लिकाग्नौ निक्षिप्य तदनन्तरं अग्नये नमः, सोमाय नमः, सूर्याय नमः, बृहस्पतये नमः, प्रजापतये नमः,

सर्वेभ्यो देवेभ्यो नमः, सर्वेभ्यो विश्वेभ्यो नमः। अग्नये स्विष्टकृते नमः, इत्यग्नावाग्नेयादिपूर्वान्तमग्न्यादीन् संपूज्य स्वाहान्तैस्तत्तन्मन्त्रैर्हुत्वा तान् विसर्जयेत् ॥

## निर्माल्यभोजनम्

ततो निवेदितं तच्छेषं वा भुञ्जीत। शिवनिवेदितभोजने फलवचनानि बहूनि श्रूयन्ते—

मदीयभुक्तनिर्माल्यं पादाम्बु कुसुमं दलम्।
धर्ममर्थं च कामं च मोक्षं च ददते क्रमात् ॥

इति। तन्निषिद्धवचनान्यपि श्रूयन्ते—

न धारयेत्क्वचिच्छम्भोर्निर्माल्यं न च भक्षयेत्। इत्यादीनि। एतेषां शिवदीक्षासहिततद्रहितविषयत्वेन व्यवस्था ॥

निर्माल्यं निर्मलं शुद्धं निर्मलत्वादनिन्दितम्।
तस्मादभोज्यं निर्माल्यमशुद्धैरशिवात्मकैः ॥

जिह्वाचापल्यसंयुक्तः शिवसंस्कारवर्जितः।
शिवनिर्माल्यभोजी चेद्रौरवं नरकं व्रजेत्।

इत्यादिशिवपुराणवचनादिति केचित्। कामिकादिसिद्धान्ततन्त्रेषु दीक्षितानामेव समयाचारभेदेन—

"निर्माल्यं नच भुञ्जीत शिवभक्तं न निन्दयेत्।"

इत्यादिनिषेधवचनानि।

"निर्माल्यभक्षणेऽघोरं प्रमादादयुतं जपेत्"

इत्यादिप्रायश्चित्तविधानानि च श्रूयन्ते। अतः—

खाद्यानि चादनीयानि पेयान्यन्यानि यानि च।
देयानि तानि वै शम्भोरश्नीयाद्दासभावतः ॥

इत्यादिपुराणवचनानि वैदिकपौराणिकपाशुपतादिविहितशिव-संस्कारेण ये दीक्षितास्तेषामेव शिवनिर्माल्यं ग्राह्यम्, नतु कामिकादिसिद्धान्ततन्त्रेण दीक्षितानामिति केचित्। कामिक एव—

अशुद्धात्मा [1]शुद्धिलोभाद्यद्भुक्तं पावनं परम्।
भक्षयन्नाशमाप्नोति रसभोक्ता यथा द्विजः॥

मल्लिङ्गधारिणो लोके देशिका मत्परायणाः।
मदेकशरणास्तेषु योग्यं नैवान्यजन्तुषु॥

इति वचनात्—

उपवाससहस्राणि प्राजापत्यशतानि च।
शिव[2]प्रसादलेशस्य कोट्यंशेनापि नो समाः॥

इत्यादिवातुलागमप्रभृतिवचनाच्च। सिद्धान्ततन्त्रे दीक्षितानामपि शिवनिवेदितं प्रशस्तमेव। शिवनिर्माल्यनिषेधप्रायश्चित्तवचनानि तु "देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितम्। चण्डभुक्तिबहिः-क्षिप्तं" इति पञ्चविधनिर्माल्यविषयाणि। कामिके—

देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितम्।
चण्डद्रव्यं च निर्माल्यं निर्माल्यं षड्विधं भवेत्॥

ग्रामादीशस्य देवस्वं देवद्रव्यं पटादिकम्।
नैवेद्यं कल्पितं तस्मै देशोच्छिष्टं निवेदितम्॥

चण्डद्रव्यं तु तद्दत्तं निर्माल्यं प्रेरितं बहिः।

इति निर्माल्यषाड्विध्यविभागनिर्माल्योपभोगदोषसङ्कीर्तन तत्प्रायश्चित्तोपदेशानन्तरमेव निवेदिताख्यनिर्माल्यस्वीकारानुमत्यर्थं "अशुद्धात्मा शुद्धिलोभा" दित्यादिश्लोकद्वयस्य पठितत्वात्। एवं च सिद्धान्ततन्त्रेषु शिवनिवेदितनिषेधवचनानि तदुक्तशिवदीक्षारहित-विषयाणीत्यपरे। सुप्रभेदे—

सदाशिवस्य निर्माल्यं मनुष्याणां न भोजनम्।
पशूनां च गजानां च जले वाथ विनिक्षिपेत्॥

---

[1] अशुचिर्लोभान्मद्भुक्तं–पा. [2] प्रसादतीर्थस्य–पा.

अथवा वह्निना दह्याद्भूमौ वा निखनेद्बुधः।

इति सदाशिवनिर्माल्यस्य मनुष्यमात्रसाधारण्येनाभोज्यत्वं प्रतिपाद्य तस्य भूवह्निगोगजादिष्वेव प्रतिपत्तिवर्णनाच्च सदाशिवनिर्माल्यं [1]दीक्षारहितानामप्यभोज्यमेव। तेषां शिवनिर्माल्यं प्रशस्तमिति वचनानि तु सकलनिर्माल्यविषयाणि।

प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत्।

इति सकलेषु चण्डाधिकारनिषेधात्। कारणे—

सकलानां च नैवेद्यं सर्वेषां भोजने भवेत्।

इति सकलनैवेद्यानुमतिवर्णनात्। तदपि शिवदीक्षितैस्तत्परिचारकैरेव भोक्तव्यम्। सुप्रभेदे—"सदाशिवस्य निर्माल्य"मित्याद्युक्त्वा अनन्तरं—

सकलानां तु निर्माल्यं परिचारकभोजनम्।
तदप्यन्यजनानां तु भोजने दोषकृद्भवेत्॥

इत्युक्तत्वादित्यपरे। सदाशिवनिर्माल्येष्वपि मनुष्यादिस्थापितशिवलिङ्गार्पितेष्वेव निषेधः। नतु चरलिङ्गादिषु; तेषु चण्डाधिकाराभवात्।

बाणलिङ्गे चरे लोहे रत्नलिङ्गे स्वयम्भुवि।
प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत्॥

लिङ्गे स्वायम्भुवे बाणे रत्नजे रसनिर्मिते।
सिद्धप्रतिष्ठिते लिङ्गे न चण्डोऽधिकृतो भवेत्॥

इति वचनादित्येके। चरलिङ्गादिषु चण्डाधिकारो नास्तीति वचनानि वैदिकपौराणिकवामदक्षिणतन्त्रादिविषयाणि, न तु कामिकादिसिद्धान्तवचनविषयाणि।

स्थिरे चरे तथा रत्ने मृद्दारौ शैलकल्पिते।
लोहचित्रमये वाणे स्थितश्चण्डो नियामकः॥
सिद्धान्ते नेतरे तन्त्रे नवामे न च दक्षिणे। इति।

---

[1] दीक्षतानामप्य—पा.

अव्यक्तव्यक्तलिङ्गेषु मण्डले स्थण्डिलेऽनले।
चरे स्थिरे तथा रत्ने मणिचित्रादिके तथा॥
गन्धान्नसंभवे लिङ्गे मृद्भस्मफलकल्पिते।
तथा पुष्पमये लिङ्गे चण्डपूजा नियामिका॥

इति च कालोत्तरादिषु विशेषदर्शनात्। ततो निर्माल्यविधिनिषेधयोश्चरस्थिरादिविषयत्वेन न व्यवस्थितिः, किं तु निर्माल्यविशेषविषयत्वेन।

ताम्बूलं भस्म तैलं च गन्धपुष्पमपूपकम्।
फलादि भक्षणद्रव्यं निर्माल्यमिति [1]चोच्यते॥

इति वचनादिति केचित्। कामिके—

स्वेष्टलिङ्गे च यद्दत्तं चरुवत्तन्न संशयः।
नैवेद्यं भ्रातृपुत्राणां योगिनां चैव दापयेत्॥

इति चरुदृष्टान्तवर्णनात्। कारणे—

स्फाटिकं बाणलिङ्गं च स्थापितं चरमेव वा।
तन्निवेदितनिर्माल्यं न निर्माल्यं प्रकल्पयेत्॥
बालानां युवतीनां च भोजनं बलवर्धनम्।

इत्यनिर्माल्यत्वप्रतिपादनाच्च चरलिङ्गादिनिवेदितान्नमपि भोज्यमेव। किंतु पूजकस्य न भोज्यम्। "नैवेद्यं भ्रातृपुत्राणा" मित्यादि विशेषवचनात्। ताम्बूलादिमात्रस्य ग्राह्यत्ववचनं तु मनुष्यादिस्थापितलिङ्गविषयमित्यपि केचित्॥

नैवेद्यं कल्पयित्वा तु शिवायेति तदूर्ध्वतः।
निवेद्य मह्यमुच्छिष्टं भुङ्क्ते प्रत्यहमादरात्॥
सोऽयं मत्सदृशः प्रोक्तश्चरुभुग्यस्तथा भवेत्।

इति कामिके—"निवेद्य भुङ्क्त" इति निवेदनकर्तुरपि तदुच्छिष्टभोजनप्रतिपादनात् पूजकस्यापि शिवनिवेदितं भोज्यमेव। तस्य निवेदितभोजननिषेधवचनानि तु संहाररुद्रादिनिवेदितविषयत्वेन

---

[1] नोच्यते—पा.

योज्यानीत्यपि केचिद्वदन्ति। सदाशिवकर्तृकं परमशिवावाहनपुरस्सरं तत्पूजानिरूपणावसान एव तन्निवेदितप्राशननिषेधस्य दिव्यागमेषु बहुशः श्रवणात्। विधिनिषेधसहस्रशबलितं सर्वविधमपि शिवनिर्माल्यं वर्जनीयमित्येव युक्तम्॥

श्रूयते च महान्दोषः श्रूयते च महाबलम्।
फलं तत्र परित्याज्यं दोषो हि बलवत्तरः॥

इति वचनात्। न च कामिके—

पत्रं पुष्पं फलं तोयमन्नं पाद्यमथौषधम्।
अनिवेद्य न भुञ्जीत भगवन्तं सदाशिवम्॥

इत्यनिवेदितभोजननिषेधः श्रूयत इति वाच्यम्। तस्यातिथिसत्काररहितभोजननिषेधवत् तच्छेषभोजनविधिपरत्वसंभवात्॥

अन्नाद्यमौषधं तोयं पत्रं पुष्पं फलादिकम्।
शिवाय दत्तं तच्छेषं भोज्यं भुञ्जीत बुद्धिमान्॥

इति सिद्धान्तशेखरे तथैव प्रतिपादनाच्चेत्येवमितरे वर्णयन्ति। एवं निर्माल्यविधिनिषेधवचनानां विचारे नव पक्षाः संपन्नाः। शिवसंस्काररूपदीक्षावतामेव शिवनिर्माल्यानुमतिरन्येषां तन्निषेध इत्याद्यः पक्षः। शिवसंस्कारवत्स्वपि वैदिकादिदीक्षावतामेवात्याश्रमिप्रभृतीनां तदनुमतिः, न तु कामिकादिसिद्धान्ततन्त्रोक्तदीक्षावतां, तेषां तन्निषेधतद्भक्षणप्रायश्चित्तविधानदर्शनादिति द्वितीयः पक्षः। निवेदितव्यतिरिक्तपञ्चविधनिर्माल्यविषय एव निषेधप्रायश्चित्तोपदेशः, निवेदितं तु तेषामपि ग्राह्यमिति तृतीयः पक्षः। निवेदितमध्येऽपि शिवलिङ्गनिवेदितनिषेधात् सकलनिवेदितमेव ग्राह्यमिति चतुर्थः पक्षः। शिवलिङ्गनिवेदितं न सर्वं निषिद्धम्, किंतु मनुष्यादिप्रतिष्ठापितस्थिरलिङ्गनिवेदितमेव, चरलिङ्गादिनिवेदितं तु ग्राह्यम्, तत्र चण्डाधिकाराभावादिति पञ्चमः पक्षः। कामिकादिगतनिवेदितनिषेधतदनुमतिवचनानां स्थिरचरादिविषयतया न व्यवस्था; कामिकादिसिद्धान्तमार्गे चरादिपूजायामपि चण्डसद्भावात्, किंत्वन्नादिविषयो निषेधः, फलापूपताम्बूलादिविषयानुमतिरिति व्यवस्था, तदितरेषु विशेष-

वचनसद्भावादिति षष्ठः पक्षः। चरलिङ्गादिनिवेदितमन्नादिकमपि ग्राह्यमेव, किं तु भ्रात्रादिभ्यो देयम्, नतु पूजकेन भोज्यमिति सप्तमः पक्षः। शिवार्पणबुध्या शिवनिवेदितं पूजकेनापि भोज्यमित्यष्टमः पक्षः। [1]विधिनिषेधवर्णनयोर्निषेधवचनस्य बलीयस्त्वात्सर्वस्यापि शिवनिर्माल्यस्य वर्जनमेव युक्तमिति नवमः पक्षः। एतेषु नवमः पक्षस्तावदत्यन्तमयुक्तः; शिवनिर्माल्यस्वीकारे महाफलप्रतिपादकानां बहूनां दिव्यागमपुराणादिवचसामप्रामाण्यप्रसङ्गात्। [2]नह्यागमवचनेषु वर्णमप्यप्रामाण्यं सहते। नितरां शिववाक्येषु। येष्वर्थवादतया प्रामाण्योपपादनमपि महते प्रत्यवायायेति सर्वदिव्यागमघण्टाघोषः। "श्रूयते च महान्दोष" इत्यादिवचनं तु यत्र विधिनिषेधयोरुभयोरप्यन्यत्र प्रामाण्यावकाशस्तत्र तयोर्द्वयोः क्वचिन्मेलने निषेधो बलीयानित्येतत्परम्। यथा द्वादश्यामामलकप्राशस्त्यवचनप्रमाण्यमर्कवारमेलनरहितद्वादश्यां सावकाशम्, अर्कवारे तन्निषेधवचनप्रामाण्यं द्वादशीमेलनरहितार्कवारे सावकाशम्, द्वादश्यामर्कवारमेलने सत्यामलकफलनिषेधवचनद्वयप्राप्तौ निषेधवचनं बलीय इति। फलवचनानां सर्वथैवाप्रामाण्यापादकं निषेधवचनानां बलीयस्त्वं तु प्रामाणिका नाद्रियन्ते। अतोऽत्र विधिनिषेधवचनानां विषयव्यवस्था[3]प्रदर्शनमेव युक्तम्॥

तां तु प्रदर्शयिष्यामः पूर्वदर्शितवर्त्मना।
सर्वागमाविरोधेन सर्वशैवानुमोदिनीम्॥

शैवानां भोजनं त्रिविधम्। शिवपूजासमाप्तौ बाह्यकुण्डे शिवाग्निकार्यवत् तदनन्तरं शिवाग्निकार्या(न)न्तरमात्मभोजनमिति भावनयैकम्। नैवेद्यसमये निवेद्यमानद्रव्याणां रूपार्पणात्मकं शिवे निवेदनस्यारम्भमात्रकृतमात्मभोजनं तु शिवाय तद्द्रव्यार्पणात्मकनिवेदनपूर्वकमिति भावनया द्वितीयम्। प्रथमं निवेदनसमय एव परस्त्वदादियागीयहविरिव सूक्ष्मरूपतया निवेद्य रुच्या सह शिवेनोपभुक्तमेवात्मभोजनं शिवदासस्य कर्म तदुच्छिष्टस्वीकरण-

---

[1] फलनिषेधवचनयोः—पा. [2] ह्यार्षेषु वचनेषु—पा. [3] प्रामाण्यदर्शनमेव—पा.

रूपमिति भावनया तृतीयम् । तत्राद्यं सुप्रभेदे वह्निकार्यपटले प्रपञ्चितम्—

अग्निकार्यस्य चान्ते तु प्राणाग्नौ होममाचरेत् ।
तत्पार्श्वे वह्निशालायां भोजनस्थानमुच्यते ॥

गृहे वापि प्रकर्तव्यं प्राणाग्नियजनं परम् ।
तत्स्थानं गोमयालिप्तं शुद्धं कृत्वा विशेषतः ॥

पिष्टचूर्णैरलङ्कृत्य सवितानं सदीपकम् ।
सौवर्णं राजतं ताम्रं कांस्यं वा कदलीदलम् ॥

[1]पात्रमेकं तथा ग्राह्यं शोधयित्वा यथार्हकम् ।
पात्रेऽशेषाणि संयोज्य [2]स्वात्मार्थं शिवमर्चयेत् ॥

आत्मा तु यजमानोऽसौ बुद्धिस्तत्पत्निका स्मृता ।
केशरोमाणि दर्भाः स्युर्जिह्वाद्यं यज्ञपात्रकम् ॥

हृत्पुण्डरीकवेद्यां तमन्तस्थाग्नौ प्रपूजयेत् ।
रोमदर्भान् परिस्तीर्य प्रणवं शिवसंयुतम् ॥

उच्चार्य परिषिच्याथ शिवेनाभ्युक्ष्य मन्त्रवित् ।
शिवमन्त्रं जले जप्त्वा ब्रह्माण्यङ्गान्यनुक्रमात् ॥

शिवं ध्यात्वा शिवायेति जलं पीत्वा हृदा पुनः ।
शिवाय जुहुयादीशमन्त्राद्यैर्ब्रह्मपञ्चभिः ॥

मध्यमानामिकाङ्गुष्ठैरादायान्नं शनैः शनैः ।
यद्वामृतेत्यादिमन्त्रैर्जलं पीत्वा विशेषतः ॥

पञ्चाहुतीश्च जुहुयात्प्राणमन्त्रैश्च पञ्चभिः ।
पात्रसंस्पर्शनं कृत्वा पश्चाद्भुञ्जीत साधकः ॥

आचम्य च विधानेन आदित्याभिमुखः स्थितः ।
उदरं शिवमन्त्रेण सव्येनाभिमृशेत्ततः ॥

दक्षिणाङ्गुष्ठकेनाम्भः पादाङ्गुष्ठे तु दक्षिणे ।
स्रावयेत्तु शिवं स्मृत्वा हृन्मन्त्रं तु समुच्चरन् ॥

---

[1] पात्रमेतत्तु संग्राह्यं. [2] स्वात्मरथं शिव—पा.

चुलकोदकमेतत्स्यात्स्वात्मनः पादमूलतः ।
प्राणाग्निहोत्रमित्येतन्नित्यमेवमुदाहृतम् ॥

अग्निकार्यमिदं प्रोक्तं शृणु त्वं कुण्डलक्षणम् । इति ॥

इदं भोजनमनिवेदितान्नेनैव कर्तव्यम् । तदर्थमनिवेदि[1]तान्नसद्भावः "अन्नेनार्धेन जुहुयात्तद्विधिश्च निगद्यते"।

इत्यादिचुल्लीहोमप्रकरणगतागमवचनैर्दर्शितः। द्वितीयं भोजनं तु वातुलोत्तरे दर्शितम्—

रूपं समर्प्य द्रव्यस्य रुचिमप्यर्पयेच्छिवे ।
उभयार्पणहीनं चेन्नैवेद्यं निष्फलं भवेत् ॥

तत्तत्प्रसादभोगान्तं नैवेद्यार्पणमुच्यते ।
प्रसाददानहीनं चेन्नैवेद्यमपि निष्फलम् ॥

इत्यादिना । इदमारब्धासमाप्तनिवेदनक्रियेणान्नेन कर्तव्यम्। नैवेद्योपचारसमये देवस्य पुरतो यन्नैवेद्यं निहितं तस्य तदानीं रूपार्पणेनारब्धा निवेदनक्रिया रुच्यर्पणपर्यन्तमनुवर्तत इति तदेवारब्धासमाप्तनिवेदनक्रियमन्नम् । तच्च देवपित्राद्युद्देशेन प्रशस्तं तदुद्देशेन दत्तमन्नं तत्समर्पणबुध्येव पूजकः शिवार्पण-बुध्या भुञ्जीत ॥

तृतीयं भोजनम्—

मल्लिङ्गधारिणो लोके देशिका मत्परायणाः ।
मदेकशरणास्तेषु [2] भोग्यं नैवान्यजन्तुषु ॥

स्वाद्यानि चादनीयानि पेयान्यन्यानि यानि च ।
देयानि तानि वै शम्भोरश्नीयाद्दासभावतः ॥

---

[1] तान्नसद्भावः परार्थपूजायां—

एकभागं निवेद्यं स्यादेकभागं हुतं भवेत् ।
एकभागं तु बल्यर्थं शेषमाचार्यभोजनम् ॥

इत्यागमवचनैर्दर्शितः। आत्मार्थपूजायां—

पाकादर्धं समुद्धृत्य तस्यार्धं शंभवेऽर्पयेत् ।
अन्नावर्धेन जुहुयात्–पा. [2] योग्यं–पा.

दासमार्गप्रपन्ना ये शैवे पाशुपते स्थिताः ।
तैरेव भोज्यं पेयं चाघ्रातव्यं च मुमुक्षुभिः ॥

इति कामिकादिषु च प्रसिद्धमिदं भोजनं निवेदितान्नेनैव कर्तव्यम् । देवस्य पुरतो मुमुक्षुभिर्नैवेद्योपचारसमये यन्निहितं तत्तदानीमेव सूक्ष्मरूपेण रुच्या सह शिवेनोपभुक्तमिति निवेदितमुच्यते । [1]तदेव शिवोच्छिष्टं तु शुश्रूषार्थं ब्राह्मणो दास्यं प्रपन्नः, शूद्रस्तदुच्छिष्टमिदं दास्यं प्रपन्नो भुञ्जीत । एवं च शिवनिर्माल्ये यानि सामान्यतो निषेधवचनानि तानि शिवदास्यभावनारहितपशुरूपमनुष्यमात्रविषयाणि । यानि तु दीक्षितान् शिवदास्यभावनावत एवाधिकृत्य तत्तन्निषेधवचनानि तानि निवेदितव्यतिरिक्तपञ्चविधनिर्माल्यविषयाणीति व्यवस्थाद्वयं प्राचीनैरेव दर्शितम् । अत्र द्वितीयव्यवस्था "निर्माल्ये षड्विधे भोज्यमेकमेव निवेदितम्" इत्याद्यागमप्रसिद्धा । प्रथमव्यवस्था शिवपुराणे स्पष्टं प्रपञ्चिता । तत्र हि—

अनर्हं मम नैवेद्यं पादाम्बु कुसुमं दलम् ।
इतीश्वरेण कथितमिति केचिन्महर्षयः ॥

वदन्ति तत्कथं स्वामिन् यथार्थं कथयस्व मे ।

इति जैमिनिप्रश्ने—

देवदेवस्य वचसो विषयस्तत्र जैमिने ।
ये वीरभद्रशापिताः शिवभक्तिपराङ्मुखाः ॥

शम्भोरन्येषु देवेषु ये भक्ता ये न दीक्षिताः ।
येऽशुद्धकर्मिणः शम्भोरन्यत्र समबुद्धयः ॥

तेषामनर्हमीशस्य तत्प्रसादचतुष्टयम् ।

इति व्यासवचनं दृश्यते । अन्यानि च [2]दीक्षितानां भक्तानां शिवनिर्माल्यं योग्यमित्यर्थे कामिकादिप्रसिद्धानि वचनानि प्रागुदाहृतानि ॥

---

[1] तदेव शिवोच्छिष्टं शुश्रूषार्थं ब्राह्मणादास्यं प्रपन्नः शूद्रस्तदुच्छिष्टमिव शिवदास्यं प्रपन्नो भुञ्जीत—पा. [2] अदीक्षितानामभक्तानां शिवनिर्माल्यमयोग्य—पा.

ननु शिवनिर्माल्यं सकलपातकहरं सर्वव्याधिनिवर्तकं अखिलयज्ञफलप्रदमशेषतीर्थस्नानतुल्यं भुक्तिमुक्त्येकसाधनमिति शिवशास्त्रैरुद्घोष्यते, भक्तिदीक्षारहितैर्न भक्ष्यं न स्प्रष्टव्यमित्यप्युच्यते, कथमेतदुपपद्यते । तथा सकलपापनिवर्तकशक्त्यादियुक्तं सर्वप्रायश्चित्तादिवच्छिवनामकीर्तनवद्वा सर्वसाधारणीभवितुमेव हि योग्यं कथं केषांचित्परिहरणीयं स्यात् । अतः शिवनिर्माल्यं निकृष्टमित्येवमेव केषांचित्परिहरणीयमासीदिति कुतो न भवति । हरदत्ताचार्यैरपि [1]संमुग्धनित्योत्कर्षापकर्षसाधारण्येनैवोक्तम्—

उत्कर्षतः परिहरन्त्यपकर्षतो वा
 का वासना भवति कस्य कृते न विद्मः ।
यद्दीक्षितस्य पतितस्य च तुल्यरूपं
 प्रत्यादिशन्ति मुनयः कमनीयमन्नम् ॥
चण्डालचण्डिलचितानलशौण्डिकानां
 गोब्राह्मणज्वलनदीक्षितयोषितां वा ।
[2]स्पर्शः कथा भवति वासनया निषिद्धः
 स्पृष्टेषु वा शिवकथा विहिता विशुद्धिः ॥
वर्ज्यान्नमाहुरपि दीक्षितमग्निकल्पं
 भोज्यान्नमेव कृतराजपरिक्रयं तम् ।
शङ्खास्थि पावनमपावनमस्थि नृणा-
 मित्थं स्थितं वचनमत्र परायणं नः ॥ इति ।

तस्माद्विविच्येदं कथनीयम्—किमुत्कर्षतः शिवनिर्माल्यं केषांचित् परिहरणीयं अपकर्षतो वेति, उच्यते; शिवनिर्माल्यं सकलपापहरत्वादिसर्वोत्कृष्टगुणशालीत्यत्र तावन्न विवादावकाशः । येषु पुराणागमेषु केषांचित्तन्निषेधः कृतः, तेष्वेव तथाविधगुणशालीत्यपि प्रतिपादितत्वात् । श्रूयन्ते हि पुराणागमेषु वचनानि—

पादोदकं च निर्माल्यं भक्त्या धार्यं प्रयत्नतः ।
न तं स्पृशन्ति पापानि मनोवाक्कायजान्यपि ॥

---

[1] समग्रुक्तरीत्योत्कर्ष—पा. [2] स्पर्शः कथं भवति भावनया निषिद्धः—पा.

भक्षयेद्यो नरो भक्त्या पवित्रमिति शंसितः ।
शुद्धात्मा ब्राह्मणस्तस्य पापं क्षिप्रं विनश्यति ॥

मत्प्रसादोदकं पुष्पं सदा धार्यं मदाश्रितैः ।
रोगिभिश्च विशेषेण विषदिग्धैश्च यत्नतः ॥

स्वेष्टलिङ्गे च यद्दत्तं चरुवत्तन्न संशयः ।
राजसूयसहस्रस्य फलं प्राप्नोति नारद ॥

पादोदकं महातीर्थं गङ्गा च यमुनानदी ।
नर्मदा सरयूर्विप्राः तथा गोदावरीनदी ॥

सदा सन्निहितास्त्वेताः शम्भोः स्नानोदके मुने ।
शम्भोः स्नानोदकं सेव्यं सर्वतीर्थमयं हि तत् ॥

अयुतं यो गवां दद्याच्छ्रोत्रियायाहिताग्नये ।
मम पादजले स्नात्वा तत्फलं समवाप्नुयात् ॥

इत्यादीनि । वैद्यशास्त्रे च—

निर्माल्यसलिलं प्राश्य देवदेवस्य शूलिनः ।
क्षयकुष्ठज्वरश्वासैर्मुच्यते किल्बिषैरपि ॥ इति ।

रामायणेऽपि—

तत्र देवर्षिगन्धर्वा वसुधातलवासिनः ।
भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ इति ।

भागवतेऽपि—

किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये
ब्रह्मादयस्तदवकीर्य जटाः श्मशाने ।
तच्छोध्य भस्मनृकपालवसत्पिशाचै-
र्ये मूर्धभिर्दधति तच्चरणावसृष्टम् ॥ इति ।

एवं परमपावनस्यापि शिवनिर्माल्यस्य स्पर्शे केषांचिन्निषेधः शिवलिङ्गस्पर्शे निषेध इव तेषामनधिकारप्रयुक्त एव । यथा हि पूर्वं लौकिकशिलाविशेषरूपमपि शिवलिङ्गं प्रतिष्ठासंस्कारेण निर-स्तमायाविकारभूताशुद्धरूपं चिन्मयं जातमिति तदनन्तरमदीक्षिता-

नामस्पृश्यमासीत्, एवं निर्माल्यमपि निरीक्षणादिसंस्कारबृन्देन तथाभूतं जातं तदनन्तरं शिवेन स्वोपभोगयोग्यमित्युपभुक्तं चेत्यतिविशुद्धं जातम्, अतस्तेषामस्पृश्यमासीत्। एतदभिप्रायेणोक्तं वातुलोत्तरे—

सुप्रतिष्ठितलिङ्गेषु न यथा पूर्वभावना।
तथा शिवप्रसादस्य पूर्वनाम न संस्मरेत्॥ इति।

एवंभूतं शिवनिर्माल्यं दीक्षया विधूतकल्मषाणां छिन्नपाशानां शिवभक्तानामेव शिवलिङ्गमिव स्पृश्यं तदाज्ञया भोज्यं च। ते हि शिवभक्ताः शिवदीक्षया प्रतिदिवसपरिचीयमानभूतशुद्धिदण्डमुण्डकलान्यासेन च शिवलिङ्गवच्छिवनिर्माल्यवच्चाप्राकृतरूपाः सम्पन्नाः

"हस्तपादादिसाधर्म्याद्रुद्रात्मकवपुर्धरान्।
प्राकृतानेव मन्वानो नावजानाति बुद्धिमान्"॥

इति वायुसंहितावचनात्। यत्तु सकलपापहरत्वादिगुणवत्त्वे सर्वप्रायश्चित्तवत किमिति सर्वसाधारणं न जातमित्याशङ्कितं तदप्येतेन निरस्तम्। अतिविशुद्धशिवनिर्माल्यस्पर्श एवान्येषामनधिकारस्योक्तत्वात्। नहि ब्रह्महत्यादिमहापातकहरमित्यघमर्षणादिवैदिकसूक्तं वेदश्रवणेऽप्यनधिकारिणामत्रैवर्णिकानां साधारणं भवति। न च तावता वैदिकसूक्तस्य कश्चिदपकर्षः, किं तूत्कर्ष एव। तदभिप्रायेणैव पुराणेष्वीश्वरवचनम्—

अशुद्धात्मा शुद्धिलोभान्मद्भुक्तं पावनं परम्।
भक्षयन्नाशमाप्नोति शूद्रो ह्यध्ययनादिव॥ इति।

यत्तु शिवनामकीर्तनवदतिविशुद्धमपि शिवनिर्माल्यं सर्वसाधारणं किमिति न जातमिति शङ्कितं—तत्र ब्रूमः। अतिविशुद्धमप्राकृतमपि शिवनाम शिवाज्ञया सर्वसाधारणं जातम्, तद्घटितं वैदिकं पञ्चाक्षरं जीवरत्नमपि। तथाहि वायुसंहितायाम्—

कलौ कलुषिते काले दुर्जये दुरतिक्रमे।
अपुण्यतमसाच्छन्ने लोके धर्मपराङ्मुखे॥

क्षीणे वर्णाश्रमाचारे सङ्करे समुपस्थिते ।
सर्वाधिकारे सन्दिग्धे निश्चिते वा विपर्यये ॥
गुरूपदेशेऽविहिते गुरुशिष्यक्रमे गते ।
केनोपायेन मुच्यन्ते भक्तास्तव महेश्वर ॥

इत्यम्बिकायाः प्रश्ने शिववचनम्—

[1]आश्रित्य परमां विद्यां हृद्यां पञ्चाक्षरीं मम ।
भक्त्या विभावितात्मानो मुच्यन्ते कलिजा नराः ॥
मनोवाक्कायजैर्दोषैर्वक्तुं स्मर्तुमगोचरैः ।
दूषितानां कृतघ्नानां निर्दयानां छलात्मनाम् ॥
लुब्धानां वक्रमनसामपि मत्प्रवणात्मनाम् ।
मम पञ्चाक्षरी विद्या संसारभयहारिणी ॥
मयैवमसकृद्देवि प्रतिज्ञातं धरातले ।
पतितोऽपि विमुच्येत मद्भक्तो विद्ययानया ॥ इति ।

पुनश्च—

कर्मायोग्यो भवेन्मर्त्यः पतितो यदि सर्वथा ।
कर्मायोग्येन यत् कर्म कृतं तन्नरकाय हि ॥
ततः कथं विमुच्येत पतितो विद्ययानया ।

इत्यम्बिकाप्रश्ने शिववचनम्—

सत्यमेतत्त्वया प्रोक्तं तथापि शृणु सुन्दरि ॥
रहस्यमिति मत्वैतद्गोपितं यन्मया पुरा ।
[2]समन्त्रकं मां पतितः पूजयेद्यदि मोहतः ॥
नारकी स्यान्न सन्देहो मम पञ्चाक्षरं विना । इति ।

एवं शिवाज्ञया सर्वसाधारण्यापादनादेवेदमाज्ञासिद्धमित्यपि तत्र व्यवहृतम्—

तदल्पाक्षरमर्थाढ्यं वेदसारं विमुक्तिदम् ।
आज्ञासिद्धमसन्दिग्धं वाक्यमेतच्छिवात्मकम् ॥ इति ।

---

[1] वायवीये उत्तरखण्डे १४ अध्यायः. [2] स्वकर्मपतितो मर्त्यः—पा.

तस्मादतर्कनीयः शिवनाम्नो महिमेति तस्य पतितचण्डालादि-साधारण्यं युक्तमेवेत्यलं प्रपञ्चेन। प्रकृतमनुसरामः॥

यत्तु "सदाशिवस्य निर्माल्यं मनुष्याणां न भोजन" मित्याद्युदाहृतं, तच्चण्डार्पितसदाशिवनिर्माल्यविषयम्। कामिके –

निर्माल्यं तु समानीय चण्डेशाय निवेदयेत्।
यतो निर्मलतां याति तन्निर्माल्यं प्रकीर्त्यते॥

चण्डस्याचमनं दत्वा निर्माल्यं तु विसर्जयेत्।
अगाधेऽम्भसि चाग्नौ वा गवां वापि निवेदयेत्॥

इति चण्डसमर्पणानन्तरमेव जलादिषु प्रतिपत्तिविधानात्, तत्रैव "चण्डभोज्यं दुराधर्षं वर्जनीयं प्रयत्नतः" इति "देवस्वं चण्डभोज्यं वा नान्यभोगाय कल्पते" इति च चण्डद्रव्यस्य सर्वाभोज्यत्वप्रतिपादनेन तावन्मात्रस्यैव जलादिषु प्रतिपत्त्यपेक्षत्वाच्च। नन्वेवं सति सर्वमपि शिवनिर्माल्यमभोज्यमेवेत्युक्तं भवति,

लेह्यचोष्यान्नपानादि ताम्बूलं स्रग्विलेपनम्।
निर्माल्यं निखिलं तुभ्यं प्रदत्तं तु शिवाज्ञया॥

इति चण्डसमर्पणमन्त्रलिङ्गानुसारेण सर्वस्यापि शिवनिर्माल्यस्य चण्डाय समर्पणीयत्वावगमादिति चेत्—मैवम्; कामिके परार्थपूजायाम्—

"ऐशान्यां पूजयेच्चण्डं गन्धपुष्पादिभिः क्रमात्।
तस्मै समर्पयेत्सर्वं निर्माल्यं यत्प्रकल्पितम्"॥

इति सर्वस्य निर्माल्यस्य चण्डेशाय समर्पणीयत्वमुक्त्वा—

लिङ्गमूर्ध्निस्थमित्येके पिण्डि[1]कायामथापरे।
ऐशान्यां पिण्डिकास्थं वा बाह्ये चण्डगृहे नयेत्॥

इति गन्धपुष्पनिर्माल्यैकदेशसमर्पणपक्षस्याप्युक्ततया तन्न्यायेन निवेदितान्नेऽप्येकदेशसमर्पणपक्षाङ्गीकारोन्नयनात्। अन्यत्र—

शिवोपभुक्तं स्रग्गन्धमन्नपानादिकं तथा।
निवेदितमिति प्रोक्तं सर्वपापहरं परम्॥

---

[1] कास्थमथापरे–पा.

निर्माल्ये षड्विधे भोज्यमेकमेव निवेदितम् ।

इति चण्डद्रव्यात् पृथक् निवेदितसद्भावस्य साक्षादेव प्रतिपादनाच्च । आत्मार्थपूजायां तु नैतच्छङ्कावकाशः ; कामिक एव शिवपूजानिरूपणानन्तरं "अन्ते चण्डेश्वरं यजेत्" इत्युपक्रम्य—

बाणे लोहे चले सिद्धे न चण्डेशः स्वयम्भुवि ।

इति चण्डपूजानिषेधात् । अजितेऽप्यात्मार्थपूजायाम्—

न द्वारपूजा कर्तव्या न चण्डेशनिवेदनम् ।
नामन्त्रणहविस्तत्र न नित्योत्सवमेव च ॥

इति तत्प्रतिषेधात् । यदि तु प्रागुदाहृतकालोत्तरवचनानुसारेण चण्डपूजा क्रियते तथापि न दोषः । अंशुमति चण्डेशार्चनपटले—

केवलं सहजं चैव स्वतन्त्रं च त्रिधा मतम् ।
आत्मार्थे केवलं प्रोक्तं मण्डले तु समर्चयेत् ॥

यामाङ्गं सहजं ज्ञेयं चण्डरूपं प्रतिष्ठितम् ।
यामाङ्गं चेत्स्वतन्त्रं स्याच्चण्डेशस्यार्चनं त्रिधा ॥

इति चण्डेशार्चनत्रैविध्यमुपक्रम्यात्मार्थयजनान्तचण्डपूजायां—

विलेपनं च दामं च दत्वा तन्मूलमन्त्रतः ।
नैवेद्यं चैव ताम्बूलं तन्मूलेनैव दापयेत् ॥

इति पृथगेव गन्धपुष्पादिकमुक्त्वा—

केवलस्यार्चनं प्रोक्तं सहजस्यार्चनं शृणु ।
अन्तर्मण्डलदेशे तु मण्डलस्य च गोचरे ॥

चण्डेशं स्थापयेद्विद्वान्निर्माल्येनैव चार्चयेत् ।

इति यामाङ्गचण्डेश्वरपूजायामेव निर्माल्यसमर्पणस्योक्तत्वात् । सिद्धान्तसारावल्यामपि चण्डपूजाप्रकरणे—

नैवेद्यं तद्विधानोक्तं दत्वा ताम्बूलसंयुतम् ।
यामाङ्गं तच्छिवेनोपभुक्तं चापि निवेदयेत् ॥

इत्युक्तत्वाच्च । "सदाशिवस्य निर्माल्यं चण्डेशाय समर्पयेत्" इत्यात्मार्थपूजाप्रकणगतसूक्ष्मवचनानुरोधेन चण्डेशाय निर्माल्य-

समर्पणपक्षेऽपि न दोषः। परार्थपूजोक्तरीत्या तदेकदेशसमर्पण-संभावत्। स्मृतिनिबन्धेषु च—

> विष्वक्सेनाय दातव्यं नैवेद्यस्य शतांशकम्।
> पादोदकं प्रसादं च लिङ्गे चण्डेश्वराय च॥

इति निवेदितशतांशस्यैव चण्डभागत्वप्रतिपादानाच्च। एवं "सदाशिवस्य निर्माल्यमि"ति सुप्रभेदवचनस्य कामिकवचनाद्यनुसारेण यत्सदाशिवनिर्माल्यं चण्डेशाय समर्पितं तन्मनुष्याणामभोज्यमित्यर्थः। अथ वैवं तदभिप्रायः—शिवस्य निर्माल्यं शिवदास्यभावनारहितानां पशुप्रायाणां केवलमनुष्याणां न भोज्यम्। अतः काम्यतया परार्थपूजायामात्मार्थपूजायां वा समृद्धमहाहविर्निवेदने सति तावद्भोजनासमर्थानां देवालयपरिचारकाणां पूजकगृहवासिनामन्येषां च शिवदीक्षावतां शिवभक्तानामलाभे तेभ्यो दत्तावशिष्टं यथाकथञ्चिन्मनुष्यमात्रे न दातव्यम्। किं तु गोगजेभ्यो देयं अगाधेऽम्भस्यग्नौ वा क्षेप्तव्यं भूमौ वा खातव्यमित्येतत्परम्। यथाश्वमेधादिषु क्रतुषु ऋत्विजां तावद्धविश्शेषभक्षणसामर्थ्याभावे ऋत्विग्भ्यो दत्तावशिष्टं हविरनुपनीतेषु वर्णान्तरेषु न दातव्यम्, किं तूपनीतेषु ब्राह्मणादिषु दातव्यमग्नौ वा क्षेप्तव्यमित्येतत्परं—

> हविश्शेषान्भक्षयितुमृत्विजश्चेन्न शक्नुयुः।
> विप्रेभ्यः सम्प्रयच्छेयुः क्षिपेयुर्वा हुताशने॥

इति वचनम्। यथा वा ब्राह्मणोच्छिष्टभोक्तृतद्दासशूद्राभावे तदप्सु क्षेप्तव्यं भूमौ वा खातव्यमित्येतत्परं "अशक्तौ भूमौ निखनेदप्सु वा प्रवेशयेत्" इति वचनम्। एतदभिप्रायेणैवोक्तं हरदत्ताचार्यैः—

> यद्ब्राह्मणस्त्वमसि नाकसदां निकाये
> तुभ्यं निवेदितमभोज्यमिति स्मरन्ति।
> उच्छिष्टमीश्वर विशिष्टमपि द्विजानां
> भूमौ निखेयमथवाम्भसि मज्जनीयम्॥ इति।

अस्य श्लोकस्य उच्छिष्टभोक्तृदाससद्भावेऽपि तदुच्छिष्टं भूमौ निखेयमम्भसि वा मज्जनीयमिति न तात्पर्यम्।

> उच्छिष्टमात्रं दातव्यं जीर्णानि वसनानि च।

इति दास्यमनुप्रपन्नाय शुश्रूषवे शूद्रायोच्छिष्टान्नदानस्मरणात् । जीर्णान्युपानच्छत्रवासःकूर्चान्युच्छिष्टाशनं शिल्पवृत्तिश्चेति शुश्रूषायाः शूद्रधर्मत्वस्मरणाच्च । एवमेव तुभ्यं निवेदितमभोज्यमित्यत्रापि शिवनिवेदितभोजनार्हस्य शिवदास्यं प्रपन्नस्यालाभे यस्मै कस्मैचिन्न दातव्यम्, किं तु खननादिनैव तत्प्रतिपादनीयमिति तात्पर्यम् । इत्थमनेन श्लोकेनाचार्यैरुत्कर्षत एव निर्माल्यं दासातिरिक्तैः परिहार्यम्, न त्वपकर्षत इति विभावितमेव । उत्कर्षत इत्याद्यनन्तरश्लोकैस्तु शिवोत्कर्षनिरूपणग्रन्थे तत्प्रसादोत्कर्षनिरूपणं नोपयोगीति विभावनाय प्रौढ्या सं[1]मुग्धरीतिरवलम्बिता । यानि तु स्वेष्टलिङ्गसमर्पितमपि भ्रातृपुत्रभगिन्यादिभ्य एव देयमित्येवं प्रतिपादकानि तान्यग्निकार्यरूपभोजनकर्तृशिवार्चकविषयाणि । तेन हि तत्स्वयं भोक्तुमशक्यम् । शिवाग्निकार्यरूपस्वभोजनेनैव प्रसङ्गात् [2]तृप्तिरूपस्वकार्यस्यापि सिद्धेः । अदीक्षितेभ्यस्तु तद्दानं प्रतिषिद्धं इष्टयादिहविश्शेषवदुपेक्षादोषपरिहाराय न्यायतो भक्षणेनैव प्रतिपादनीयम् । दीक्षितानां च तद्भोजनं महाफलप्रदम् । अतः केभ्यो देयमित्याकांक्षायां स्वगृह एवादीक्षितत्वेऽपि येऽग्निकार्यानधिकारिणः स्त्रीबालादयस्तेभ्यो देयमित्येवंपराणि । यत्तु कामिके—

> निर्माल्यलङ्घनं कृत्वा दक्षिणस्यायुतं जपेत् ।
> लङ्घनेन समः स्पर्शः समे विक्रयभक्षणे ॥

इति लङ्घन इव निर्माल्यस्पर्शेऽपि दीक्षितानां प्रायश्चित्तविधानम्, यच्च—

> "यन्निर्माल्येन संस्पृष्टं तद्भजा पुरुषेण वा ।
> पादोनं तत्र पूर्वोक्तं स्पर्शलङ्घनभक्षणे ॥

इति निर्माल्यतद्भक्षयितृस्पृष्टस्य स्पर्शे प्रायश्चित्तविधानम्, तत्र सर्वत्रापि निर्माल्यपदं बहिः क्षिप्तनिर्माल्यविषयम् । तस्मिन् प्रायश्चित्तप्रकरणे—

> देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितम् ।

---

[1] समं वक्तीति. [2] आपत्ति, वल्लप्ति–पा.

चण्डद्रव्यं च निर्माल्यं निर्माल्यं षड्विधं भवेत् ॥

इति बहिः क्षिप्ते विशिष्य निर्माल्यसंज्ञाकरणात् ।

"पिण्डिकास्थं न निर्माल्यमपि देवे विसर्जितम्"।

इति देवविसर्जनानन्तरमपि बहिःक्षेपपर्यन्तं स्पर्शप्रायश्चित्तपरिहाराय प्रायश्चित्तप्रकरणे "देवस्वं देवताद्रव्यं" इति पदैर्निर्माल्यत्वाभाववर्णनाच्च । अन्यथा प्रायश्चित्तविधानगतनिर्माल्यशब्दानां सर्वनिर्माल्यविषयत्वे तत्र बहिःक्षिप्तेति विशिष्य निर्माल्यसंज्ञाकरणस्य वैयर्थ्यप्रसङ्गात् । विसर्जनानन्तरमपि बहिःक्षेपपर्यन्तं निर्माल्यत्वाभाववर्णनस्यासामञ्जस्यप्रसङ्गाच्च । देवभूम्यादिस्पर्शतत्संस्पृष्टस्पर्शेषु दोषाभावेन स्पर्शप्रायश्चित्तगतनिर्माल्यशब्दानां विशेषविषयत्वावश्यम्भावाच्च । बहिः क्षिप्तं च तदुच्यते यन्महाहविर्निवेदनादिषु भक्तपरिचारकेभ्यो दत्तावशिष्टं, गोगजादिभ्यो बहिर्नीतं, जलादिषु क्षिप्तं, बहिर्बल्यर्थं दत्तं वा, तत्सर्वं वचनबलाद्यूपोपस्थानानन्तरं यूपवदस्पृश्यमेव ॥

नन्वेवं तर्हि तत्र निर्माल्यभक्षणादिप्रायश्चित्तोपदेशानां बहिःक्षिप्तमात्रविषयत्वे देवस्वदेवताद्रव्यनिवेद्यचण्डद्रव्याणां भक्षणादिषु प्रायश्चित्तविधानं न लभ्यत इति चेत्—न ; तत्रैव निर्माल्यभक्षणोपेक्षणदानविक्रयलङ्घनस्पर्शेषु निर्माल्यतद्भक्षयितृस्पृष्टभक्षणलङ्घनस्पर्शेषु च प्रायश्चित्तविधानानन्तरं—

देवायतनवस्त्वन्यद्देवग्रामादिसंभवम् ।
व्रीह्यादि येन केनैवोपाधिनाऽऽदाय भक्षणम् ॥

करोति यः स संमूढो मलान्नः स्तेयकृन्मतः ।"

इत्यादिना देवस्वदेवताद्रव्यनिवेद्यचण्डद्रव्याणां भोगदानयोः पृथगेव प्रायश्चित्तवर्णनात् । सूक्ष्मागमे—

निर्माल्यस्य निवेद्यस्य लङ्घने दानकर्मणि ।
चान्द्रायणं चरेत्तत्तु गोगजानां विनिक्षिपेत् ॥

इति निर्माल्यात्पृथङ्निवेद्यग्रहणादपि प्रायश्चित्तोपदेशगत निर्माल्यशब्दानां विशिष्य निर्माल्यसंज्ञाकरणं बहिः क्षिप्तमात्रविषयत्वं ज्ञाप-

यति। अन्यथा तेषां षड्विधनिर्माल्यपरत्वे निवेदनस्यापि तदन्तर्भूततया पृथङ्निवेद्यग्रहणं व्यर्थं स्यात्। यत्तु कामिक एव—

स्नानपानीयदुग्धाद्यैर्यदि सिक्तो भवेत्तदा।
स्नायात्प्रक्षालयेद्वापि नाभेरूर्ध्वमधस्तथा॥
चरलिङ्गेऽप्ययं न्यायो विहितो यज्ञमन्दिरे।

इति शिवस्याभिषेकसमयेऽभिषेकजलदुग्धदध्यादिद्रव्यसेकेनाप्यूर्ध्वतदधोगात्रविभागेन स्नानप्रक्षालनविधानं, तच्छिवाभिषेकजलबिन्दूनामर्चकं प्रत्यपवित्रताभिप्रयेण न भवति; शिवाभिषेकजलादिप्राशस्त्यस्य प्राक् प्रपञ्चितत्वात्, किं तु तदनन्तरं (अर्चकेन करिष्यमाणं) शिवस्य गन्धविलेपनादिकं तन्निर्माल्यसंसिक्तगात्रेण कर्तुमयुक्तम्; गुरोरभ्यङ्गस्नपनं कृतवता तैलबिन्दुसंसक्तगात्रेण शिष्येण गुरोर्गन्धविलेपनादिकमिवेत्यभिप्रायेण। एवमन्यान्यप्येतादृशानि संभावितानि वचनानि नेतव्यानि। तदित्थमग्निकार्यबुध्या भुञ्जानैर्निवेदितशेषो भोक्तव्यः। दास्यबुध्या भुञ्जानैर्निवेदितं भोक्तव्यमिति व्यवस्था निरवद्या। सा च वायुसंहितायामपि दर्शिता—

ततः स्वयं च भुञ्जीत शुद्धमन्नं यथासुखम्।
निवेदितं वा देवेशे तच्छेषं चात्मशुद्धये॥

श्रद्दधानो न लोभेन न चण्डाय समर्पितम्।
गन्धमाल्यादि यच्चान्यत्तत्राप्येष समो विधिः॥

न तु तत्र शिवोऽस्मीति बुद्धिं कुर्याद्विचक्षणः। इति॥

निवेदितं भुञ्जानः स्वहृत्पुण्डरीकान्तरवह्निमध्यगतशिवभावनया स्वस्य शिवाग्निकार्यरूपशिवपूजाकर्तृतामभिप्रेत्य शिवोऽहमिति बुद्धिं न कुर्यात्, किंतु शिवदास्यबुद्धिमेव कुर्यादित्यर्थः। एवं निवेदितान्नभोजनं कुर्वता प्राणाहुतयोऽपि निवेदितेनैव कर्तव्याः॥

प्राणाग्निहोत्रं यः कुर्याच्छिवस्यैव प्रसादतः।
अश्वमेधायुतं पुण्यं [1]सिक्थे सिक्थे लभेन्नरः॥

इति शिवपुराणवचनात्॥

---

[1] सिद्धे सिद्धे भवेन्नरः; सिक्थे सिक्थे लभेन्नरः-पा.

## भोजनविधिः

अनन्तरं भोजनविधिः—[1][स्वाहान्तैः स्वसूत्रोक्तमन्त्रैर्हुत्वा तान्विसर्जयेत्। एवमग्निकार्यं निर्वर्त्य] धौतकरः समाचान्तः शिवभक्तैः सदाचारैः सहितो हीनजातीयानदीक्षितानेकपङ्क्तौ परिहरन् भोजनस्थानमासाद्य पीठे प्राङ्मुख उपविश्य चतुरश्रेण हस्तमानेनाचार्यपुत्रसाधकसमयिक्रमेण चतुस्त्रिद्व्येकरेखाङ्कितेन परितो भस्मरेखाङ्कितेन मण्डलेन भूषिते भूतले सुवर्णरजतताम्रलोहान्यतमनिर्मितं कांस्यनिर्मितं वा सप्तधा भस्मना शोधितमघोराभिमन्त्रितं तदभावे कदलीपलाशपद्मचूतमधूकाद्यनिन्दितपत्रमयं वा पात्रं निधाय तत्र घृतेनोपस्तीर्य परिवेषितं द्विरभिघारितं सव्यञ्जननिवेदितं शुद्धमन्नमस्त्रेण संप्रोक्ष्य [2]त्रिषु मृत्युञ्जयपूर्वकेण मृत्युञ्जयाय वौषण्मन्त्रेण सप्तवारमभिमन्त्र्य यथावर्णं परिषेचनादि कृत्वा ग्रासार्धमात्रेणान्नेन नागकूर्मकृकरदेवदत्तधनञ्जयेभ्यः उपप्राणवायुभ्यः स्वाहेति स्वस्य दक्षिणभागे गोमयोपलिप्ते मण्डले दद्यात्। ततः सव्यहस्तकनिष्ठिकया संस्रावस्रुवेण नागादिभ्यश्चुलकोदकं दत्वा माषमज्जनार्हं शिष्टजलममृतमन्त्रेण प्राश्य प्राणाहुतिपञ्चकं कुर्यात्। तेन प्राणापानव्यानोदानसमानानां क्रमेण तदाश्रितानामात्मानो भूतयोनयः पातालतलवासिनः पितरो देवा इत्येषां च तृप्तिं भावयेत्। ततो यथातृप्ति भोजनानन्तरमुच्छिष्टान्नमादाय "नरकवासिभ्यः स्वाहे"ति भूमौ दत्वा उत्तरापोशनानन्तरं तच्छेषजलं कनिष्ठाङ्गुलिना विस्राव्य हस्तोद्वर्तनादि शुद्धाचमनानन्तं कर्म कृत्वा [3][भुक्तदोषशुद्ध्यर्थं दक्षिणकराङ्गुष्ठजलेन दक्षिणपादाङ्गुष्ठाग्रस्थितकालाग्निरुद्रं सेचयेत्] अङ्गुष्ठाग्रोदकेन कालाग्निरुद्रं सेचयेत। अनिवेदितभोजिनां तु भोजने विशेषः प्रागेव सुप्रभेदोदाहरणेन दर्शितः। निवेदितभोजिनामनिवेदितभोजिनां च भोजनकालादन्यत्र यदन्यदौषधताम्बूलपानीयादि भोज्यं गन्धपुष्पादि भोग्यं वोपतिष्ठेत तत्सर्वं मनसा देवाय समर्प्यैव भोक्तव्यम्।

---

[1] इति क्वचिद्दृश्यते. [2] त्र्यक्षरमृत्युञ्जय–पा. [3] इति पाठो दृश्यते.

पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम् ।
अनिवेद्य न भुञ्जीत भगवन्तं [1]सदाशिवम् ॥

इति कामिकवचनात् ।

उपभोगाय पुरतो वस्तु यद्यदुपस्थितम् ।
[2]तत्समर्प्य तु देवाय विदधीतात्मभावतः ॥

इति वातुलवचनाच्च । यत्तु—

अन्नाद्यमौषधं तोयं पत्रं पुष्पं फलादिकम् ।
शिवाय दत्त्वा तच्छेषं भोज्यं भुञ्जीत बुद्धिमान् ॥

इत्यौषधादेर्निवेदितशेषस्य भोजनविधानं तत् अग्निकार्यार्हेण अनिवेदितभोजनं कुर्वता भोजनमध्यग्राह्यौषधादिविषयम् । अन्यत्र तु शिवदासानां शिवोच्छिष्टमेव ग्राह्यम् । किं च भक्तेन यत्किञ्चित्फलमुद्दिश्य या क्रिया लौकिकी वैदकी वा कर्तुमिष्यते, सा सर्वापि शिवाराधनरूपेति भावेन कर्तव्या । तत्तत्क्रियाजन्यसुखमपि शिवस्तद्भोक्तेति शिवे समर्प्य तद्भुक्तमेव सुखं मया भुज्यत इति भावेन भोक्तव्यम् । एवं विनैव स्वयत्नमुपनताः शब्दस्पर्शरूपरसगन्धाख्या विषयाश्च शिवसमर्पणपूर्वकं तदुच्छिष्टबुध्यैव स्वेन्द्रियैरनुभवितव्याः । तत्तद्विषयानुभवजन्यं सुखमपि तदुच्छिष्टबुद्ध्यैव भोक्तव्यम् ।

या या क्रिया विधातव्या प्रस्तुता जायते पुनः ।
तां तां कुर्यान्महादेवसमर्पणधिया सुधीः ॥

इन्द्रियादागतं किंचिद्यत्सुखं तच्छिवार्पितम् ।
कृत्वा प्रसादं भोक्तव्यं तदिन्द्रियमुखेन च ॥

इति वातुले श्रवणात् । तदर्थं च भक्तेन सदा सावधानेन भाव्यम् ।

संयोगेषु वियोगेषु चाणुमात्रसुखानि च ।
यः कुर्यादिष्टलिङ्गेषु सावधानो निरन्तरम् ॥

---

[1] समाहितः—पा. [2] तत्तत्समर्प्य देवाय विदधीतात्मसात्ततः—पा.

गच्छंस्तिष्ठन् स्वपन् जाग्रद्भुञ्जानो मैथुने रतः ।
यः शिवार्पितचेतस्को भक्तिमान् स तु नान्यथा ॥

इति बृहत्कालोत्तरे श्रवणात् । एवं क्रियासमर्पणपूर्वकं क्रियां कुर्वतः विषयसमर्पणपूर्वकं विषयाननुभवतस्तत्तज्जन्यसुखसमर्पणपूर्वकं सुखं भुञ्जानस्य च सावधानस्य भक्तस्य पूर्वजन्मवासनावशेन क्वचित्क्वचित्प्रमादान्निषिद्धक्रियां कुर्वतोऽपि निषिद्धविषयाननुभवतोऽपि निषिद्धसुखं भुञ्जानस्यापि न पापलेपो भवति। किं तु सर्वं शिवसमाराधनमिति भावयतः सर्वमपि शिवप्रीतय एव भवति। तत्रात्मभोगार्थं नृत्तावलोकनहर्म्योपवनदीर्घिकादिक्रीडारूपां क्रियामारभमाणस्तत्तत्क्रियासमये संभावितानां वाक्पाणिपादपायूपस्थरूपकर्मेन्द्रियव्यापारसाध्यानां श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणरूपज्ञानेन्द्रियजन्यतत्तद्विषयसाध्यानां च सुखानां समर्पणार्थं स्वकीये श्रोत्रादिज्ञानेन्द्रियपञ्चके वागादिकर्मेन्द्रियपञ्चके च क्रमेणाधिष्ठातृत्वेन संनिहितानामीशानादीनां श्रोत्रादिवागादीनि स्वकीयश्रोत्रादिवागादिष्वैक्येनानुसन्धाय तत्तदिन्द्रियव्यापारसाध्यसुखान्यैशानादिमूर्तीरधिष्ठात्रा शिवेनानुभूयमानानि विभाव्य तान्येव सुखानि शिवोच्छिष्टबुध्या स्वयं भुञ्जीत। अयत्नोपनमद्विषयसुखसमर्पणं तत्तद्विषयोपगमसमयेषु सावधानेन कर्तुमशक्तः प्रातर्वा शिवपूजावसाने वा भविष्यदेतत्समयपर्यन्तं संभावितायत्नोपनमच्छब्दस्पर्शरूपरसगन्धात्मकविषयानुभवतज्जन्यसुखानि शिवाय समर्पयामीति युगपदेव समर्पयेत्। एवं युगपद्विषयार्पणं हृदयादिषु वा, हृदयादिस्थानभावितस्य साम्बशिवस्य श्रोत्रादिषु वा, हृदयादिस्थानभावितस्य सदाशिवस्य क्रमादीशानादिमुखगतश्रोत्रादिषु वा, स्वकीयश्रोत्राद्यैक्येन संहितेष्वीशानादीनां श्रोत्रादिषु वा, कर्तव्यम्। सर्वत्रापि समर्पणे नमोन्तः शिवमन्त्र एव मन्त्रः। तस्य च शिवायेदं न मम इत्यर्थो भावनीयः। स चार्थो ममकारस्य जीववाचकस्य षष्ठ्यन्ततया लभ्यत इति सर्वमेतदतिरहस्यम्। इत्थं प्रतिदिनं प्रातः शिवचिन्तनशक्यस्नानविभूतिरुद्राक्षधारणादिनोपासनापूर्वकं त्रिकालं द्विकालमेककालं वा चत्वारिंशता षोडशभिर्दशभिः पञ्चभिरुपचारैरष्टपुष्पिकामात्रेण वा यथावसरं शिवं पूजयञ्छिवशास्त्राण्य-

धीयानः शिवकथाः समाकर्णयन् भोजनकाले शिवाग्निकार्यबुद्ध्या शिवनिवेदितशेषं वा शिवदास्यबुद्ध्या शिवनिवेदितं वा स्वीकुर्वन् अन्यत्ताम्बूलपानीयगन्धपुष्पादिभोग्यजातं शिवसमर्पितं कृत्वैव भुञ्जानश्चिकीर्षितं कर्मजातं तत्फलरूपाणां सुखानां शिवोपभोग्यत्वं विभाव्य शिवाराधनबुद्ध्या कुर्वाणः [1]स्वयत्नतः प्रकृतोपनतानपि विषयान् तत्तद्विषयोपस्थितिसमयेषु युगपद्वा शिवार्पितान्विदधानः सर्वाण्यपि सुखानि शिवोच्छिष्टबुद्ध्यैवानुभवन् बहिर्लौकिककार्यविचार[2]कालानप्यन्ततः शिवनामरूपानुसन्धानेन सफलयन्नन्तरध्वनि गमागमाभ्यां विहरन्तीं निरतिशयप्रकाशामृतरूपिणीमानन्दलेखामगि समयेष्वाकलयन् पञ्चाक्षरपरदैवतमनेकोपनिषदन्विष्यमाणचरणाम्बुजमखिलदेवतासार्वभौममपारकरुणाम्बुधिमाश्रितरक्षाधुरंधरमम्बिकया सह निजहृदयजलरुहकुहरे विहरमाणमानन्दसन्दोहमूर्तिं परमशिवमनवरतमन्तर्दृशावलोकयन्निष्टबन्धुभिः सह सुखमासीत ॥

अत्रायं सिद्धान्तः—शिवस्यैवागमोक्तमप्येतत्सर्वं पूर्वोत्तरविरोधि स्नानं सन्ध्या, वैदिकतया भस्मरुद्राक्षधारणम्, मन्त्रराजजपः, द्वारपालार्चनम् पीठार्चने विष्ण्वादिदेवतान्तरभजनप्रसक्तिः, उपचारोक्तमुद्राविशेषाः करद्वयव्यापारसाध्याः, [3]वैदिकादौ लिङ्गस्थापनम्, सव्यपाणिना घण्टानादपुरस्सरं दीपदर्शनादि, क्वचिद्धोमः, इत्यादिसर्वं कथमुपपद्यत इत्यत्रायं निष्कर्षः—

अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् ।
नराणां क्षीणपापानां शिवे भक्तिः प्रजायते ॥

इत्याद्यनेकप्रमाणपर्यालोचनया वैदिककर्मणां वैशेष्यवर्णनात् । कर्मभिस्साधनैस्साध्यरूपशिवभक्तेरेव वीरशैवैरपि साधनीयत्वात्तद्व्यतिरिक्तदेवतान्तरभजनं च न प्राधान्येनाङ्गीकुर्मः । किं तु पतिरूपपरमेश्वरविभूतिविशेषत्वेन सर्वासां देवतानां शिवपूजोपयोगित्वेन वर्णनं हेम्नः परमामोदः । नास्ति कश्चिद्विरोधशङ्कावकाशः ॥

---

[1] स्वयत्नमनपेक्ष्योपनतानपि—पा. [2] कालेऽप्यनन्तशिवनामानुसन्धानेन—पा.
[3] सद्योवेदिकादौ—पा.

द्वात्रिंशदुपदेशोक्ताः पदार्थास्त इमे श्रुताः ।
शिवपूजान्तर्गतास्ते हि सर्वे वर्ण्याः पृथक् पृथक्

पिण्डादिज्ञानशून्यान्तमेकोत्तरशतस्थलम् ।
षट्स्थलान्तर्गतं तद्वद्द्वात्रिंशदुपदेशकाः ॥

शिवपूजान्तर्गतास्ते स्युस्तदेवमुपवर्ण्यते।

तथाहि—उपासना द्विविधा सगुणोपासना निर्गुणोपासना चेति। द्वात्रिंशदुपदेशार्थानां सगुणोपासनाङ्गत्वेऽपि तन्त्रेणादिमोपदेशचतुष्टयार्थस्य निर्गुणोपासनाङ्गत्वं मुख्यतयावगन्तव्यम् । यथा दीक्षणीया [निर्वाहक] निर्वाप्यदेवतानां दीक्षणीयेष्टिनिर्वहणद्वारा सोमस्यापि [निर्वाहकत्वम्] द्वारम्, सोमयागस्यैवोद्देश्यत्वात्। प्रकृते च निर्गुणोपासनाङ्गमुखोपदेशचतुष्टयं सगुणोपासनायामप्युपयुक्तम्; सगुणोपासनायामपि निर्गुणोपासनस्यैवोद्देश्यतत्वात् । परम्परया इतरे चोपदेशा निर्गुणोपासनाङ्ग[1][मेव। अष्टाविंशत्युपासनाः ताः सगुणोपासनायन्ते][1] तच्च वैदिकतन्त्रानुमोदितमेव न केवलतान्त्रिकम्, केवलतान्त्रिकाद्वैदिकतान्त्रिकस्यातिशयितत्वात् । एकमेवाद्वितीयमित्यादि वैदिकं वीरशैवम्। द्वैतादि सकलं केवलतान्त्रिकत्वेनाप्रमाणत्वादुपेक्षणीयम् । तन्त्रागमैकवाक्यतया तन्त्रोक्तवैदिकाश्राचाराः सङ्ख्याविरोधेनोपपादिताः। [2]राज्ञः केवलस्यार्चनादपि सामात्यवर्गस्य वस्त्राद्युपहारेण राज्ञः प्रीत्यैवाचरितेन राज्ञ एवातिप्रीतिरुदेति][2] तद्वत्सगुणस्य तद्द्वारपालस्यार्चनं शिवस्यैवोत्कर्षावहम्। किं तु शिव(रूपधिया) सदृशत्वेन तदधिकत्वेन वा देवतान्तरभजनं नरकपतनायेत्युपवर्णितमागमेषु। राजसाम्येन राजाधिक्येन वान्यपरिचरणे राज्ञः कोपः, तेन राजद्रोही श्वमुद्राद्यङ्कितः सन् देशादुत्सार्यः, तद्वच्छिवसमत्वेनाधिकत्वेन वा विरोधसंपादनं नरकायेत्यास्तां विस्तरः। वातुलोत्तरे देवीं प्रति शिववचनम्—

वेदार्थ एव देवेशि कामिकाद्यागमैः पुनः ।
त्वयि स्नेहेन ते स्पष्टं वर्णिताः क्रमशो मया ॥

---

[1] मेव अष्टाविंशत्युपदेशान्ताः। सगुणोपासनायामपि ते उपयुज्यन्ते—इत्यर्थः स्यात्.

[2] यथा सामात्यवर्गाय राज्ञि कृतेन वस्त्राद्युपहारेण केवलराज्ञ एवातिप्रीतिरुदेति तद्वदित्यर्थः.

वेदार्थदूषको यस्तु मदागमविदूषकः ।
मदागमविरोधी च वैदिकश्च्यवते क्षणात् ॥

निगमागमसारूप्यं मत्प्रसादेन लभ्यते ।
निगमे चागमे तुल्यो मद्भक्तः स्यान्न संशयः ॥

तत्रापि वीरशैवाख्यं रहस्यं तद्वदामि ते ।
शिवशब्दश्रवणतः सर्वं प्राप्तं विभावयेत् ॥

तद्विरोधिषु वैमुख्यं मुख्यं मत्प्रीतिकारणम् ।
प्राणं वापि परित्यज्य शिवधर्मोत्तरो भवेत् ॥

अन्तर्द्रोही बहिर्द्रोही नरकायातनावुभौ ।
यः स्वयं सर्वशास्त्रज्ञः शैवकर्मणि कर्मठः ॥

अन्यलाञ्छनसंयुक्तैः संभाषी सहवासवान् ।
मद्द्रोहिस्नेहसंपन्नोऽन्तर्द्रोहीति कथ्यते ॥

बहिर्द्रोही स विज्ञेयोऽन्यलाञ्छनसंयुतः ।
कल्पान्ते स विमुच्येत नान्तर्द्रोही विमुच्यते ॥

एष एव गणाचार एतदेव शिवार्चनम् ।
एतदेवोपासनं च मद्द्रोहिपरिवर्जनम् ॥

ये भस्मलाञ्छिता देवि ये च रुद्राक्षभूषणाः ।
ये पञ्चाक्षरजल्पाका मद्रूपांस्तान्विभावयेत् ॥

भक्तिरेव हि सर्वेषां निगमेष्वागमेषु च ।
फलाय प्रभवेद्देवि सन्देहे तु विनश्यति ॥

अभक्तो वाथ भक्तो वा मदुक्तार्थविशारदान् ।
मद्रूपेणैव विज्ञाय विश्वसेन्मोक्षमाप्नुयात् ॥

विश्वासः परमो मोक्षो विश्वासोऽर्थप्रदः स्वयम् ।
अविश्वासेन शास्त्रेषु नश्यत्येव बुधोऽपि सः ॥

विश्वासश्चरलिङ्गेषु तेषु पूजा विशेषतः ।
प्राणलिङ्गेऽथवा स्थाणौ कुर्यात्कारयिता क्षमः ॥

तेषु तेषूपदेशेषु स्पष्टोऽर्थश्चैवमादिकः ।
शिवोदितस्ततः सर्वं वीरशैवं हि वैदिकम् ॥

अजानन्तो वीरशैवमतमाद्यं परात्परम् ।
विमुह्यन्ति नराः सर्वे कलिकल्मषचेतसः ॥

यस्मिन्ननुग्रहः शम्भोर्मतिस्तस्यात्र निस्सरेत् ।
शिव एव परं सत्यं तत्पूजा मोक्षदायिनी ॥

व्याख्यां पूजाविधानस्य प्रवदामि समासतः ।
शिवशास्त्रे शिवेनैव शिवायै कथितस्य तु ॥

अङ्गमाभ्यन्तरं यागमग्निकार्यावसानकम् ।
[1] विधाय वा न वा पश्चाद्वहिर्यागं समाचरेत् ॥

तत्र द्रव्याणि मनसा कल्पयित्वा विशोध्य च ।
ध्यात्वा विनायकं देवं पूजयित्वा विधानतः ॥

दक्षिणे चोत्तरे चैव नन्दीशं सुयशां तथा ।
आराध्य मनसा सम्यगासनं कल्पयेत्ततः ॥

आधारानन्तसंयुक्तसिंहयोगासनादिकम् ।
पद्मासनं वा विमलं तत्त्वत्रयसमन्वितम् ॥

तस्योपरि शिवं ध्यायेत्साम्बं सर्वमनोहरम् ।
सर्वलक्षणसंपन्नं सर्वावयवशोभितम् ॥

सर्वातिशयसंयुक्तं सर्वाभरणभूषितम् ।
रक्तास्यपाणिचरणं कुन्दमन्दस्मिताननम् ॥

शुद्धस्फटिकसङ्काशं फुल्लपद्मत्रिलोचनम् ।
चतुर्भुजमुदाराङ्गं चारुचन्द्रकलाधरम् ॥

वरदाभयहस्तं च मृगटङ्कधरं शुभम् ।
सर्वकल्याणनिलयं चारुनीलगलान्तरम् ॥

सर्वोपमानरहितं सानुरागपरिच्छदम् ।
ततः संचिन्तयेत्तस्य वामभागे महेश्वरीम् ॥

प्रफुल्लोत्पलपत्राभविस्तीर्णायतलोचनाम् ।
पूर्णचन्द्राभवदनां नीलकुञ्चितमूर्धजाम् ॥

---

[1] विधायैवाग्निं पश्चात्—इति स्यात्.

नीलोत्पलदलप्रख्यां चन्द्रार्धकृतशेखराम् ।
अतिवृत्तघनोत्तुङ्गस्निग्धपीनपयोधराम् ॥

तनुमध्यां पृथुश्रोणिं पीतसूक्ष्मतराम्बराम् ।
सर्वाभरणसंपन्नां ललाटतिलकोज्वलाम् ॥

विचित्रपुष्पसङ्कीर्णकेशपाशोपशोभिताम् ।
सर्वतोऽनुगुणाकारां किञ्चिल्लज्जानताननाम् ॥

हेमारविन्दं विकसद्दधानां दक्षिणे करे ।
दण्डवच्चापरं हस्तं न्यस्यासीनां सहासने ॥

एवं देवं च देवीं च ध्यात्वासनवरे शुभे ।
सर्वोपचारवद्भक्त्या भावपुष्पं समर्पयेत् ॥

अथवा परिकल्प्यैव मूर्तिमन्यतमां विभोः ।
शैवीं सदाशिवाख्यां वा तथा माहेश्वरीं पराम् ॥

षड्विंशकाभिधानां वा श्रीकण्ठाख्यामथापि वा ।
मन्त्रन्यासादिकं चापि कृत्वा स्वस्यां तनौ यथा ॥

तस्यां मूर्तौ मूर्तिमन्तः शिवं सदसतः परम् ।
ध्यात्वावाह्य क्रमेणैव पूजां निर्वर्तयेद्धिया ॥

समिदाज्यादिभिः पश्चान्नाभौ होमं च भावयेत् ।
भ्रूमध्ये च शिवं ध्यायेच्छुद्धदीपशिखाकृतिम् ॥

इत्थमङ्गे सतन्त्रे च यागे ध्यानमये शुभे ।
अग्निकार्यावसाने च सर्वत्रैव समो विधिः ॥

अथ चिन्तामयं सर्वं समाप्याराधनक्रमम् ।
लिङ्गे च पूजयेदेवं स्थण्डिले वानलेऽथवा ॥

प्रोक्षयेन्मूलमन्त्रेण पूजास्थानं विशोधयेत् ।
गन्धचन्दनतोयेन पुष्पं तत्र विनिक्षिपेत् ॥

अस्त्रेणोत्सार्य वै विघ्नमवकुण्ठ्य च वर्मणा ।
अस्त्रं दिक्षु च विन्यस्य अर्चये[1]दर्चकं शुभम् ॥

---

[1] दर्चनाशुभम्-पा.

तत्र दर्भान् परिस्तीर्य क्षालनप्रोक्षणादिभिः ।
संशोध्य सर्वपात्राणि द्रव्यशुद्धिं समाचरेत् ॥

प्रोक्षणीमर्घ्यपात्रं च पाद्यपात्रमतः परम् ।
तथैवाचमनीयस्य पात्रं चेति चतुष्टयम् ॥

प्रक्षाल्य प्रोक्ष्य वीक्ष्याथ क्षिपेत्तेषु जलं शिवम् ।
पूजाद्रव्याणि सर्वाणि यथालाभं विनिक्षिपेत् ॥

रत्नादि रजतं हेम गन्धपुष्पाक्षतादयः ।
फलपल्लवदर्भाश्च पुण्यद्रव्याण्यनेकधा ॥

स्नानोदके सुगन्धादि पानीये च विशेषतः ।
शीतलानि मनोज्ञानि कुसुमादीनि निक्षिपेत् ॥

उशीरं चन्दनं चैव पाद्ये तु परिकल्पयेत् ।
जातीतक्कोलकर्पूर बहुमूलतमालकान् ॥

क्षिपेदाचमनीये च चूर्णयित्वा विशेषतः ।
एलां सर्वेषु पात्रेषु कर्पूरं चन्दनं तथा ॥

कुशाग्राण्यक्षतांश्चैव यवव्रीहितिलान्यपि ।
आज्यसिद्धार्थपुष्पाणि भसितं चार्घ्यपात्रके ॥

कुशपुष्पयवव्रीहिबहुमूलतमालकान् ।
प्रक्षिपेत्प्रोक्षणीपात्रे भसितं च यथाक्रमम् ॥

सर्वत्र मन्त्रं विन्यस्य वर्मणावेष्ट्य बाह्यतः ।
पश्चादस्त्रेण संरक्ष्य धेनुमुद्रां प्रदर्शयेत् ॥

पूजाद्रव्याणि सर्वाणि प्रोक्षणीपात्रवारिणा ।
संप्रोक्ष्य मूलमन्त्रेण शोधयेद्विधिवत्ततः ॥

पात्राणां प्रोक्षणीमेकामलाभे सर्वकर्मसु ।
साधयेदर्घ्यमाहुस्तत्सामान्यं साधकोत्तमाः ॥

ततो विनायकं देवं भक्ष्यभोज्यादिभिः क्रमात् ।
पूजयित्वा विधानेन द्वारपार्श्वे तु दक्षिणे ॥

अन्तःपुराधिपं साक्षान्नन्दिनं सम्यगर्चयेत् ।
चामीकराचलप्रख्यं सर्वाभरणभूषितम् ॥

वालेन्दुमकुटं सौम्यं त्रिणेत्रं च चतुर्भुजम् ।
दीप्तशूलमृगीटङ्कहेमवेत्रधरं विभुम् ॥

चन्द्रविम्वाभवदनं हरिवक्त्रमथापि वा ।
उत्तरद्वारपार्श्वे तु भार्यां च मरुतः सुताम् ॥

सुयशां सुव्रतामम्वापादमण्डनतत्पराम् ।
पूजयित्वा प्रविश्यान्तर्भवनं परमेष्ठिनः ॥

संपूज्य लिङ्गं वेरं वा निर्माल्यमपनोदयेत् ।
प्रक्षाल्य पुष्पं शिरसि न्यसेत्तस्य विशुद्धये ॥

पुष्पहस्तो जपेच्छक्त्या मन्त्रं मन्त्रविशुद्धये ।
ऐशान्यां चण्डमाराध्य निर्माल्यं चास्य दापयेत् ॥

कल्पयेदासनं पश्चादाधारादि यथाक्रमम् ।
आधारशक्तिं कल्याणीं श्यामां ध्यायेदधोमुखः ॥

तस्याः पुरस्तादुत्कण्ठमनन्तं कुण्डलाकृतिम् ।
धवलं पञ्चफणिनं लेलिहानमिवाम्बरम् ॥

तस्योपर्यासनं भद्रं कीर्णपुष्पं चतुष्पदम् ।
धर्मो ज्ञानं च वैराग्यमैश्वर्यं च पदानि वै ॥

आग्नेयादिश्वेतपीतरक्तश्यामादिवर्णतः ।
अधर्मादीनि पूर्वादीन्युत्तरान्तान्यनुक्रमात् ॥

राजावर्तमणिप्रख्यान्यस्य गात्राणि भावयेत् ।
अथोर्ध्वच्छदनं पद्ममासनं विपुलं शिवम् ॥

अष्टपत्राणि तस्याहुरणिमादिगुणाष्टकम् ।
केसरादीनि वामाद्या रुद्रा वामादिशक्तिभिः ॥

वीजान्यपि च ता एव शक्तयोऽन्तर्मनोन्मनी ।
कर्णिकोपरि वैराग्यनालं ज्ञानं शिवात्मकम् ॥

कन्दं च शिवधर्मात्मा कर्णिकान्ते त्रिमण्डलम् ।
त्रिमण्डलान्तरात्मादितत्त्वत्रितयमासनम् ॥
षडासनो वलिमुखं विचित्रास्तरणास्तृतम् ।
आसनं कल्पयेद्दिव्यं शुद्धविद्यासमुज्वलम् ॥

आवाहनं स्थापनं च सन्निरोधं निरीक्षणम् ।
नमस्कारं च कुर्वीत बध्वा मुद्रां पृथक् पृथक् ॥

पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं ततः परम् ।
धूपं दीपं च ताम्बूलं दत्वाऽथ स्नापयेच्छिवौ [1] ॥

अथवा परिकल्प्यैवमासनं मूर्तिमेव च ।
सकलीकृत्य मूलेन ब्रह्मभिश्चापरैस्तथा ॥

आवाहयेत्तथा देव्या शिवं परमकारणम् ।
शुद्धस्फटिकसङ्काशं देवं निष्कलमक्षरम् ॥

कारणं सर्वदेवानां सर्वलोकमयं परम् ।
अन्तर्बहिःस्थितं व्याप्याणोरल्पं महत्तरम् ॥

भक्तानामप्रयत्नेन दृश्यमीश्वरमव्ययम् ।
ब्रह्मविष्णुमहेन्द्राद्यैरपि देवैरगोचरम् ॥

वेदसारं च विद्भिरगोचरमिति स्मृतम् ।
आदिमध्यान्तरहितं भेषजं भवरोगिणाम् ॥

शिवतत्त्वमिति ख्यातं शिवार्थं जगतः स्थितम् ।
पञ्चोपचारवद्भक्त्या पूजयेल्लिङ्गमूर्धनि ॥

लिङ्गमूर्तेर्महेशस्य शिवस्य परमात्मनः ।
स्नानकाले प्रकुर्वीत जयशब्दादिमङ्गलम् ॥

पञ्चगव्यैर्दधिक्षीरघृतमध्वादिपूर्वकैः ।
फलैः फलानां सारैश्च तिलसर्षपसक्तुभिः ॥

बीजैर्यवादिभिः शस्तैश्चूर्णैर्माषादिसंभवैः ।
संस्नाप्यालिप्य पिष्टाद्यैः स्नापयेदुष्णवारिणा ॥

घर्षयेद्बिल्वपत्राद्यैर्लिप्तगन्धापनुत्तये ।
पुनः संस्नाप्य सलिलैश्चक्रवर्त्युपचारतः ॥

सुगन्धमालिकां दद्याद्धरिद्रां च यथाक्रमम् ।
ततः संसिच्य सलिलैर्लिङ्गं बेरमथापि वा ॥

[1] शिवम्–पा.

स्नापयेद्गन्धतोयेन कुशपुष्पोदकेन च ।
हिरण्यरत्नतोयैश्च मन्त्रसिद्धैर्यथाक्रमम् ॥

असंभवे तु द्रव्याणां यथासंभवसंभवैः ।
केवलैर्मन्त्रतोयैर्वा स्नापयेच्छ्रद्धया शिवम् ॥

कलशेनाथ शङ्खेन वर्धन्या पाणिनाथवा ।
सकुशेन सपुष्पेण स्नापयेन्मन्त्रपूर्वकम् ॥

पवमानेन रुद्रेणानिलेन त्वरितेन च ।
लिङ्गसूक्तादिसूक्तैश्च शिरसाथर्वणेन च ॥

ऋग्भिश्च सामभिश्चैव ब्रह्मभिश्चापि पञ्चभिः ।
स्नापयेद्देवदेवेशं शिवेन प्रणवेन च ॥

यथा देवस्य देव्याश्च कुर्यात्स्नानादिकं तथा ।
न तु कश्चिद्विशेषोऽस्ति तत्र तौ सदृशौ यतः ॥

प्रथमं देवदेवस्य कुर्यात्स्नानादिकाः क्रियाः ।
पश्चाद्देव्यै प्रकुर्वीत देवदेवस्य शासनात् ॥

नार्धनारीश्वरे पूज्ये पौर्वापर्यं च विद्यते ।
मन्त्रतन्त्रोपचाराणां लिङ्गे वान्यत्र वा क्वचित् ॥

कृत्वाभिषेकं लिङ्गस्य शुचिना च सुगन्धिना ।
संमृज्य वाससा दद्यादम्बरं चोपवीतकम् ॥

पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं च भूषणम् ।
धूपं दीपं च नैवेद्यं पानीयं मुखशोधनम् ॥

पुनराचमनीयं च मुखवासं ततः परम् ।
मकुटं च शुभं भद्रं सर्वरत्नैरलङ्कृतम् ॥

भूषणानि विचित्राणि माल्यानि विविधानि च ।
व्यजनं चामरं छत्रं तालवृन्तं च दर्पणम् ॥

दत्वा नीराजनं कुर्यात्सर्वमङ्गलनिस्वनैः ।
गीतनृत्तादिभिश्चैव जयशब्दरवान्वितैः ॥

[1] हैमं च राजतं ताम्रपात्रं वा मृण्मयं शुभैः ।
पद्माद्यैः शोभितैः पुष्पैर्बीजदध्यक्षतादिभिः ॥

---

[1] हैमेऽथ रजते ताम्रे पात्रे वा मृण्मये शुभे ।–पा.

त्रिशूलशङ्खयुग्माब्जनन्द्यावर्तैः करीषजैः ।
चित्रवत्सस्वस्तिकादर्शवज्रैर्वह्न्यादिचिह्नितैः ॥

अष्ट प्रदीपान् परितो निधायैकं तु मध्यतः ।
तेषु वामादिकाश्चिन्त्याः पूज्याश्च नव शक्तयः ॥

कवचेन समाच्छाद्य संरक्ष्यास्त्रेण सर्वतः ।
धेनुमुद्रां च सन्दर्श्य पाणिभ्यां पात्रमुद्धरेत् ॥

अथवारोपयेत्पात्रे पञ्च दीपान् यथाक्रमम् ।
विदिक्ष्वपि च मध्ये च दीपमेकमथापि वा ॥

ततस्तत्पात्रमुद्धृत्य लिङ्गादेरुपरि क्रमात् ।
त्रिः प्रदक्षिणयोगेन भ्रामयेन्मूलविद्यया ॥

दद्यादर्घ्यं ततो मूर्ध्नि भसितं च सुगन्धितम् ।
कृत्वा पुष्पाञ्जलिं पश्चादुपहारं निवेदयेत् ॥

पानीयं च ततो दत्त्वा दद्यादाचमनं ततः ।
पञ्चसौगन्धिकोपेतं ताम्बूलं च निवेदयेत् ॥

प्रोक्षयेत्प्रोक्षणीयानि गाननाट्यादि कारयेत् ।
लिङ्गादौ शिवयोश्चिन्तां कृत्वा शक्त्या जपेच्छिवम् ॥

प्रदक्षिणं प्रणामं च स्तवं चात्मसमर्पणम् ।
विज्ञापनं च कार्याणां कुर्याद्विनयपूर्वकम् ॥

अर्घ्यं पुष्पाञ्जलिं दत्त्वा बध्वा मुद्रां यथाविधि ।
पश्चात्क्षमापयेद्देवमुद्वास्यात्मनि चिन्तयेत् ॥

पाद्यादिमुखवासान्तमर्घ्यान्तं वातिसङ्कटे ।
पुष्पविक्षेपमात्रं वा कुर्याद्भावपुरस्सरम् ॥

तावदेव परो धर्मो भावेन सुकृतो भवेत् ।
असंपूज्य न भुञ्जीत शिवमाप्राणसञ्चरात् ॥

यदि पापेन भुञ्जीत स्वैरं तस्य न निष्कृतिः ।
प्रमादेन तु भुक्तं चेत्तदुद्गीर्य प्रयत्नतः ॥

स्नात्वा द्विगुणमभ्यर्च्य देवं देवीमुपोष्य च ।
शिवस्यायुतमभ्यस्य ब्रह्मचर्यपुरस्सरम् ॥

परेद्युः शक्तितो दत्वा सुवर्णाद्यं शिवाय वा।
शिवभक्ताय वा कृत्वा महापूजां शुचिर्भवेत्॥

अनुक्तं चात्र पूजायाः क्रम[1]लोपभयादि वा।
यत्तदन्यत्प्रवक्ष्यामि समासान्न तु विस्तरात्॥

हविर्निवेदनात्पूर्वं दीपदानादनन्तरम्।
कुर्यादावरणाभ्यर्चां प्राप्ते नीराजने तथा॥

तत्रेशानादिसद्यान्तं हृदाद्यस्त्रान्तमेव च।
शिवस्य च शिवायाश्च प्रथमावरणे यजेत्॥

ऐशान्यां पूर्वभागे वा दक्षिणे चोत्तरे तथा।
पश्चिमे च तथाग्नेय्यामैशान्यां नैरृते तथा॥

वायव्यां पुनरैशान्यां चतुर्दिक्षु ततः परम्।
गर्भावरणमाख्यातं मन्त्रं सद्यान्तमेव वा॥

हृदयाद्यस्त्रपर्यन्तमथवापि समर्चयेत्।
तद्बहिः पूर्वतः शक्रं यमं दक्षिणतो यजेत्॥

वरुणं वारुणे भागे धनदं चोत्तरे पुनः।
ईशमैशेऽग्निमाग्नेये नैरृते निरृतिं यजेत्॥

मारुते मारुतं विष्णुं नैरृते विधिमैश्वरे।
बहिः पद्मस्य वज्रादीन्यब्जान्तान्यायतान्यपि॥

प्रसिद्धरूपाण्याशासु लोकेशानां क्रमाद्यजेत्।
देवं देवीं च संप्रोक्ष्य सर्वावरणदेवताः॥

बद्धाञ्जलिपुटा ध्येयाः समासीना यथासुखम्।
सर्वावरणदेवानां साभिधानैर्नमोऽन्तकैः॥

पुष्पैः संपूजनं कुर्यान्नत्या [2] स्मृत्यैव च क्रमात्।
गर्भावरणमेवापि यजेदावरणं विना॥

यागे ध्याने जपे होमे बाह्ये चाभ्यन्तरेऽपि वा।
हविश्च षड्विधं देवि शुद्धं मुद्गान्नमेव च॥

---

[1] लोभभयादि वा–पा. [2] स्मृत्या वचःक्रमात्–पा.

पायसं दधिसंमिश्रं गौडं च कपिलाघृतम्।
एतेष्वेकमनेकं वा नानाव्यञ्जनसंयुतम् ॥

गुडखण्डान्वितं दद्यान्मथितं दधि चोत्तमम्।
भक्ष्याण्यपूपमुख्यानि स्वादुमन्ति फलानि च ॥

एलाचन्दनपुष्पाद्यं पानीयं (चा)तिशीतलम्।
मृदु तैलरसाक्तं च खण्डं पूगफलस्य च ॥

दलानि नागवल्ल्याश्च गौराणि च शिवानि च।
शैलमेव सितं चूर्णं नातिरूक्षं न चोषितम् ॥

कर्पूरं चाप्यकृतकं जात्यादिवनजं शुभम्।
आलेपनं चन्दनस्य [1] कालागरुरजोमयम् ॥

कस्तूरिका कुङ्कुमं च रसो मृगमदात्मकः।
पुष्पाणि सुरभीण्येव पत्राणि च शिवानि च ॥

दुकूलपटदेवाङ्गमयानि च सितानि च।
नवरत्नचितान्येव तपनीयमयानि च ॥

विद्युद्वलयकल्पानि भूषणानि विशेषतः।
सर्वाण्येतानि कर्पूरनिर्यासागरुचन्दनैः ॥

सुधूपितानि पुष्पाद्यैर्वासितानि समन्ततः।
चन्दनागरुकर्पूरकोष्ठगुग्गुलचूर्णकैः ॥

घृतेन मधुना चैव सिद्धो धूपः प्रशस्यते।
कपिलासंभवेनैव घृतेनातिसुगन्धिना ॥

नित्यं प्रदीपिता दीपाः शस्ताः कर्पूरवर्तिजाः।
पञ्चगव्यं च मथितं पयो दधि घृतं तथा ॥

कपिलासंभवं शम्भोरिष्टं स्नाने (ऽथ) च पानके।
आसनानि च भद्राणि गजदन्तमयानि च ॥

सुवर्णरत्नचित्राणि चित्राण्यास्तरणानि च।
मृदूपधानयुक्तानि सूक्ष्मतूलमयानि च ॥

---

[1] कालकण्ठरजो—पा.

उच्चावचानि रम्याणि शयनानि सुखानि च ।
दद्यात्समुद्रगामिन्या नद्या वाम्भः समाहृतम् ॥

वस्त्रपूतं च शीतं च विशिष्टं स्नानपानयोः ।
छत्रं शशिनिभं श्लक्ष्णं मुक्तादामविराजितम् ॥

नवरत्नाञ्चितं दिव्यं हेमदण्डमनोहरम् ।
चामरे च सिते सूक्ष्मे चामीकरपरिष्कृते ॥

राजहंसमयाकारे रत्नदण्डोपशोभिते ।
दर्पणं चापि सुस्निग्धं दिव्यगन्धानुलेपनम् ॥

समन्ताद्रत्नसञ्छन्नं स्रग्वरैश्च विभूषितम् ।
गम्भीरनिनदः शङ्खो हंसकुन्देन्दुसन्निभः ।

आस्यपृष्ठादिदेशेषु रत्नचामीकराश्रितः ।
काहळानि च रम्याणि नानानादकराणि च ॥

सुवर्णनिर्मितान्येव मौक्तिकालङ्कृतानि च ।
भेरीमृदङ्गमुरजतिमितापटहादयः ॥

समुद्रकल्पसन्नादाः कल्पनीयाः प्रयत्नतः ।
भाण्डान्यपि च रम्याणि पात्राण्यपि च कृत्स्नशः ॥

तदाधाराणि सर्वाणि सौवर्णान्येव साधयेत् ।
आलयश्च महेशस्य शिवस्य परमात्मनः ॥

राजावसथवत्कल्प्यः शिवशास्त्रोक्तलक्षणः ।
उच्चप्राकारसंभिन्नं भूधराकारगोपुरम् ॥

अनेकरत्नसञ्छन्नं हेमद्वारकवाटकम् ।
तप्तजाम्बूनदमयं रत्नस्तम्भशतावृतम् ॥

मुक्तादामवितानाढ्यं विद्रुमद्वारतोरणम् ।
चामीकरमयैर्दीप्तैर्मकुटैः कुम्भलक्षणैः ॥

अलङ्कृतशिरोभागमस्त्रराजेन चिह्नितैः ।
राजाहर्कनिवासैश्च राजवीथ्यादिशोभितैः ॥
रक्षितं प्रांशुशिखरैः प्रासादैश्च समन्ततः ।
आस्थानस्थानवर्यैश्च स्थितैर्दिक्षु विदिक्षु च ॥

अत्यन्तालङ्कृतं प्रान्तमन्तरावरणैरिव ।
उत्तमस्त्रीसहस्रैश्च नृत्तगीतविशारदैः ॥

वेणुवीणाविदग्धैश्च पुरुषैर्बहुभिर्युतम् ।
रक्षितं रक्षकैर्वीरैर्गजवाजिरथान्वितैः ॥

अनेकपुष्पवाटीभिरनेकैश्च सरोवरैः ।
दीर्घिकाभिरनेकाभिर्दिग्विदिक्षु समावृतम् ॥

वेदवेदाङ्गतत्त्वज्ञैः शिवशास्त्रविशारदैः ।
शिवाश्रमरतैर्भक्तैः शिवशास्त्रोक्तलक्षणैः ॥

शान्तैः स्मितमुखैः स्फीतैः सदाचारपरायणैः ।
शैवैर्माहेश्वरैश्चैव श्रीमद्भिः सेवितं द्विजैः ॥

एवमन्तर्बहिर्वाथ यथाशक्ति विनिर्मिते ।
स्थाने शिलामये दान्ते दारवे चेष्टकामये ॥

केवले मृण्मये वापि पुण्यारण्येऽपि वा गिरौ ।
नद्यां देवालयेऽन्यत्र देशे वाथ शुभे गृहे ॥

आढ्यो वाथ दरिद्रो वा स्वकां शक्तिमवञ्चयन् ।
वित्तैर्न्यायार्जितैरेव भक्त्या देवं समर्चयेत् ॥

अथान्यायार्जितैश्चापि भक्त्या चेच्छिवमर्चयेत् ।
न तस्य प्रत्यवायोऽस्ति भाववश्यो यतः प्रभुः ॥

न्यायार्जितैरपि द्रव्यैरभक्त्या पूजयेद्यदि ।
न तत्फलमवाप्नोति भक्तिरेवात्र कारणम् ॥

भक्त्या वित्तानुसारेण शिवमुद्दिश्य यत्कृतम् ।
अल्पे महति वा तुल्यं फलमाढ्यदरिद्रयोः ॥

भक्त्या प्रचोदितं कुर्यादल्पवित्तोऽपि मानवः ।
महाविभवसारोऽपि न कुर्याद्भक्तिवर्जितः ॥

सर्वस्वमपि यो दद्याच्छिवे भक्तिविवर्जितम् ।
न तेन फलभाक् स स्याद्भक्तिरेवात्र कारणम् ॥

---

[1] भिर्दिग्विदिक्षु विदारितम्—पा.

न तत्तपोभिरत्युग्रैर्न च सर्वैर्महामखैः।
गच्छेच्छिवपुरं दिव्यं मुक्त्वा भक्तिं शिवात्मिकाम्॥

गुह्याद्गुह्यतमं ह्येतत्सर्वत्र परमेश्वरे।
शिवे भक्तिर्न सन्देहस्तया युक्तो विमुच्यते॥

शिवमन्त्रजपो ध्यानं होमो यज्ञस्तपः श्रुतम्।
दानमध्ययनं सर्वं भावार्थं नात्र संशयः॥

भावहीनो नरः सर्वं कृत्वापि न विमुच्यते।
भावयुक्तः पुनः सर्वमकृत्वापि विमुच्यते॥

चान्द्रायणसहस्रैश्च प्राजापत्यशतैस्तथा।
व्रतैर्मासोपवासैश्च शिवभक्तस्य किं फलम्॥

अभक्ता मानवाश्चास्मिन् लोके गिरिगुहासु च।
तपन्ति चाल्पभोगार्थं भक्तो भावेन मुच्यते॥

सात्विकं मुक्तिदं कर्म सत्वे वै योगिनः स्थिताः।
राजसं सिद्धिदं कुर्युः कर्माणि रजसावृताः॥

असुरा राक्षसाश्चैव तमोगुणसमन्विताः।
ऐहिकार्थात् यजन्तीशं नराश्चान्येऽपि तादृशाः॥

तामसं राजसं वापि सात्विकं भावमेव वा।
आश्रित्य भक्त्या पूजार्थं कुर्वन् भद्रं समश्नुते॥

यतः पापार्णवात्त्रातुं भक्तिर्नौरिव निर्मिता।
तस्माद्भक्त्युपपन्नस्य रजसा तमसा च किम्॥

अन्त्यजो वाधमो वापि मूर्खो वा पण्डितोऽपि वा।
शिवभावं प्रपन्नश्चेत्पूज्यः सर्वसुरासुरैः॥

तस्मात्सर्वप्रयत्नेन भक्त्यैव शिवमर्चयेत्।
अभक्तानां क्वचिदपि फलं नास्ति यतस्ततः॥

वक्ष्याम्यतिरहस्यं ते श्रृणुष्वेदं वचो मम।
वेदैः शास्त्रैर्वेदविद्भिर्विचार्यैव सुनिश्चितम्॥

ब्रह्मघ्नो वा सुरापो वा स्तेयी वा गुरुतल्पगः।
मातृहा पितृहा वापि वीरहा भ्रूणहापि वा॥

संपूज्य मन्त्रतो भक्त्या शिवं परमकारणम् ।
तैस्तैः पापैः प्रमुच्यन्ते वर्षैर्द्वादशभिः क्रमात् ॥

तस्मात्सर्वप्रयत्नेन भक्तियुक्तो यजेच्छिवम् ।
भक्तश्चेन्नापरं किंचिद्भिक्षाहारो जितेन्द्रियः ॥

कृत्वापि सुमहत्पापं भक्त्या पञ्चाक्षरेण तु ।
पूजयेद्यदि देवेशं तस्मात्पापात्प्रमुच्यते ॥

अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः ।
तेषामेतैर्व्रतैर्नास्ति शिवलोकसमागमः ॥

भक्त्या पञ्चाक्षरेणैव यः शिवं सकृदर्चयेत् ।
सोऽपि गच्छेच्छिवस्थानं शिवमन्त्रस्य गौरवात् ॥

तस्मात्तपांसि यज्ञाश्च सर्वे सर्वस्वदक्षिणाः ।
शिवसूत्रार्चनस्यैते कोट्यंशेनापि नो समाः ॥

बद्धो वाप्यथ मुक्तो वा पाशात्पञ्चाक्षरेण चेत् ।
पूजयेन्मुच्यते भक्तो नात्र कार्या विचारणा ॥

अरुद्रो वाथ रुद्रो वा सूत्रेण शिवमर्चयेत् ।
यः कश्चित्पतितो वापि मूढो वा मुच्यते नरः ॥

षडक्षरेण वा नित्यं तथा पञ्चाक्षरेण वा ।
सब्रह्माङ्गेन वा तेन सहंसेन विमुच्यते ॥

[1]तस्माद्भक्तः शिवं भक्त्या सूत्रमन्त्रेण पूजयेत् ।
शिवभक्तो जितक्रोधो ह्यलब्धो लब्ध एव वा ॥

अलब्धाल्लब्ध एवात्र विशिष्टो नात्र संशयः ।
तस्माल्लब्ध्वैव देवेशं सूत्रमन्त्रेण पूजयेत् ॥

एककालं द्विकालं वा त्रिकालं सर्वदापि वा ।
येऽर्चयन्ति महादेवं विज्ञेयास्ते गणेश्वराः ॥

जातेनात्मद्रुहा येन नार्चितो भगवाञ्छिवः ।
सुचिरं सञ्चरत्यस्मिन् संसारे दुःखसागरे ॥

---

[1] तस्मान्मुक्ति–पा.

दुर्लभं प्राप्य मानुष्यं मूढो नार्चयते शिवम् ।
निष्फलं तस्य तज्जन्म मोक्षाय न भवेद्यतः ॥

दुर्लभं प्राप्य मानुष्यं येऽर्चयन्ति पिनाकिनम् ।
तेषां हि सफलं जन्म कृतार्थास्ते नरोत्तमाः ॥

भवभक्तिपरा ये च भवप्रवणचेतसः ।
भवसंस्मरणोद्युक्ता न ते दुःखस्य भागिनः ॥

भवनानि मनोज्ञानि विभ्रमा भ्रमणाः स्त्रियः ।
धनं चादृष्टपर्यन्तं शिवपूजाविधेः फलम् ॥

ये वाञ्छन्ति महाभोगं ग्राह्यं च त्रिदशालये ।
तेऽर्चयन्ति सदाकालं हरस्य चरणाम्बुजम् ॥

सौभाग्यं कान्तिमद्रूपं सत्यं त्यागः प्रभावता ।
शौर्यं च जगति ख्यातिः शिवमर्चयतो भवेत् ॥

तस्मात्सर्वं परित्यज्य शिवैकाहितमानसः ।
शिवपूजाविधिं कुर्याद्यदीच्छेच्छिवमात्मनः ॥

त्वरितं जीवितं याति त्वरितं याति यौवनम् ।
त्वरितं व्याधिरभ्येति तस्मात्पूज्यः सदा शिवः ॥

यावन्नायाति मरणं यावन्नाक्रमते जरा ।
यावन्नेन्द्रियवैकल्यं तावत्पूजय शङ्करम् ॥

न शिवार्चनतुल्योऽस्ति धर्मोऽन्यो भुवनत्रये ।
इति विज्ञाय यत्नेन पूजनीयः सदाशिवः ॥

द्वारयागं यवनिकां परिवारबलिक्रियाम् ।
नित्योत्सवं च कुर्वीत प्रासादे यदि पूजयेत् ॥

हविर्निवेदनादूर्ध्वं स्वयं वानुचरोऽपि वा ।
प्रासादपरिवारेभ्यो बलिं दद्याद्यथाक्रमम् ॥

निर्गम्य बलिदेवादि वाद्यैस्तत्तन्मुखास्थितः ।
पुष्पं धूपं च दीपं च दद्यादन्नं जलैः सह ॥

ततो दद्यान्महापीठे तिष्ठन् बलिमुदङ्मुखः ।
ततो निवेदितं देवे यत्तदन्नादिकं पुरा ॥

तत्सर्वं सावशेषं वा चण्डाय च निवेदयेत् ।
हुत्वा च विधिवत्पश्चात्पूजाशेषं समापयेत् ॥
कृत्वा प्रयोगं विधिवद्यावन्मन्त्रजपं ततः ।
नित्योत्सवं प्रकुर्वीत यथोक्तं शिवशासने ॥
विमले तैजसे पात्रे रक्तपद्मोपशोभिते ।
अस्त्रं पाशुपतं दिव्यं तत्रावाह्य समर्चयेत् ॥
शिरस्यारोप्य तत्पात्रं द्विजस्यालङ्कृतस्य तु ।
न्यस्तास्त्रवपुषस्तेन जप्तयष्टिधरस्य च ॥
प्रासादपरिवारेभ्यो बहिर्मङ्गलनिस्वनैः ।
नृत्तगेयादिभिश्चैव सहदीपध्वजादिभिः ॥
प्रदक्षिणत्रयं कृत्वा न द्रुतं न विलम्बितम् ।
महापीठं समाहृत्य त्रिः प्रदक्षिणयोगतः ॥
पुनः प्रविष्टो द्वारस्थो यजमानः कृताञ्जलिः ।
प्रासादाभ्यन्तरं नीत्वा ह्यस्त्रमुद्वाहयेत्ततः ॥
प्रदक्षिणादिकं कृत्वा यथापूर्वोदितं क्रमात् ।
प्रदाय चाष्टपुष्पाणि पूजामथ समापयेत् ॥

(उपमन्युः)—(वाय-उत्तर २८)

अतः परं प्रवक्ष्यामि शिवाश्रमनिषेविणाम् ॥
शिवशास्त्रोक्तमार्गेण नैमित्तिकविधिक्रमम् ॥
सर्वेष्वपि च मासेषु पक्षयोरुभयोरपि ।
अष्टम्यां च चतुर्दश्यां तथा पर्वणि च क्रमात् ॥
अयने विषुवे चैव ग्रहणे च विशेषतः ।
कर्तव्या महती पूजाऽ[1]धिका वापि [2]भक्तितः ॥
मासि मासि यथान्यायं ब्रह्मकूर्चं प्रसाध्य तु ।
स्नापयित्वा शिवं तेन पिबेच्छेषमुपोषितः ॥
ब्रह्महत्यादिदोषाणामतीव महतामपि ।
निष्कृतिर्ब्रह्मकूर्चस्य पानान्नान्यो विशिष्यते ।

---

[1] ह्यधिका—पु. पा. [2] शक्तितः—पु. पा.

[1] पुष्येषु पुष्यनक्षत्रे कुर्यान्नीराजनं विभोः।
माघे मघाख्यनक्षत्रे प्रदद्याद्घृतकम्बलम् ॥
फाल्गुने चोत्तरान्ते वै प्रारभेत महोत्सवम्।
चैत्रे चित्रापूर्णिमायां डोलां कुर्याद्यथाविधि ॥
[2] वैशाखेऽपि तु वैशाख्यां कुर्यात्पुष्पमहालयम्।
ज्येष्ठे मूलाख्यनक्षत्रे [शीत] सितकुम्भं [3]प्रदापयेत् ॥
आषाढे चोत्तराषाढे पवित्रारोपणं तथा।
श्रावणे प्राकृताद्यानि मण्डलानि प्रकल्पयेत् ॥
श्रविष्ठाख्ये तु नक्षत्रे प्रौष्ठपद्यां ततः परम्।
[4] प्रोक्षयेच्च जलक्रीडां पूर्वाषाढाश्रये दिने ॥
आश्वयुज्यां ततो दद्यात्पायसं च नवोदनम्।
अग्निकार्यं च तेनैव कुर्याच्छतभिषग्दिने ॥
कार्तिक्यां कृत्तिकायोगे दद्याद्दीपसहस्रकम्।
मार्गशीर्षे तथार्द्रायां घृतेन स्नापयेच्छिवम् ॥
अशक्तस्तेषु कालेषु कुर्यादुत्सवमेव वा।
आस्थानं वा महापूजामधिकं वा समर्चनम् ॥
[5] आवृत्तेऽपि च कल्याणे प्रशस्तेष्वपि कर्मसु।
दौर्मनस्ये दुराचारे दुस्स्वप्ने दुष्टदर्शने ॥
[6] उत्पाताद्यशुभे तस्मिन् रोगे वा प्रबलेऽथ वा।
स्नानपूजाजपध्यानहोमदानादिकाः क्रियाः ॥
निमित्तानुगुणाः कार्याः पुरश्चरणपूर्विकाः।
शिवालये च [7] विहते पुनस्सन्धानमाचरेत् ॥
य एवं शिवधर्मिष्ठो वर्तते नित्यमुद्यतः।
तस्यैकजन्मना मुक्तिं प्रयच्छति महेश्वरः ॥
एतद्यथोत्तरं कुर्यान्नित्यनैमित्तिकेषु यः।
दिव्यं श्रीकण्ठनाथस्य स्थानमाद्यं स गच्छति ॥

---

[1] पौषे तु—पु. पा. [2] वैशाख्यां तु विशाखायां—पु. पा. [3] प्रसाधयेत्.
[4] पोषयेच्च. [5] प्रवृत्ते. [6] उत्पाते वाशुभेऽन्यस्मिन्—पु. पा. [7] विहिते.

तत्र भुक्त्वा महाभोगान् कल्पकोटिशतं नरः ।
[1] कालान्तरे च्युतस्तस्मादौमं कौमारमेव च ॥

संप्राप्य वैष्णवं ब्राह्मं रुद्रलोकं विशेषतः ।
तत्रोषित्वा चिरं कालं भुक्त्वा भोगान् यथेप्सितान् ॥

पुनश्चोर्ध्वगत[2]स्तस्य तदेत्य स्थानपञ्चकम् ।
श्रीकण्ठाज्ज्ञानमासाद्य [3] पुनः शिवपुरं व्रजेत् ॥

अर्धचर्यारतश्चापि द्विरावृत्त्यैवमेव च ।
पश्चाज्ज्ञानं समासाद्य शिवसायुज्यमाप्नुयात् ॥

अर्धार्धचरितो यस्तु देही देहक्षयात्परम् ।
अण्डान्तं चोर्ध्वमव्यक्तमतीत्य भुवनद्वयम् ॥

संप्राप्य पौरुषं रौद्रं स्थानमद्रीन्द्रजापतेः ।
अनेकयुगसाहस्रं भुक्त्वा भोगाननेकधा ॥

पुण्यक्षये क्षितिं प्राप्य कुले महति जायते ।
तत्रापि पूर्वसंस्कारवशेन स [4] महामतिः ॥

पशुधर्मान् परित्यज्य शिवधर्मरतो भवेत् ।
तद्धर्मगौरवादेव [5] गत्वा शिवपुरं पुनः ॥

भोगांश्च [6] विपुलान् भुक्त्वा विद्येश्वरपुरं व्रजेत् ।
[7] तत्र विद्येश्वरैः सार्धं भुक्त्वा भोगान् बहून् क्रमात् ॥

अण्डस्यान्तर्बहिर्वाथ सकृदावर्तते पुनः ।
ततो लब्ध्वा शिवज्ञानं परां भक्तिमवाप्य च ॥

शिवसाधर्म्यमासाद्य न भूयो विनिवर्तते ।
यश्चातीव शिवे भक्तो विषयासक्त[8]चित्तवान् ॥

शिवधर्मानसौ कुर्वन्न कुर्वन् वा विमुच्यते ।
एकावर्तो द्विरावर्तस्त्रिरावर्तो निवर्तकः ॥

---

[1] कालान्तराच्चयुत. [2] स्तस्मादतीत्य स्थान–पु. पा. [3] तस्माच्छैवपुरं–पु. पा. [4] महाद्युतिः–पु. पा. [5] ध्यात्वा–पु. पा. [6] विविधान् भुक्त्वा विद्येश्वरपदं–पु. पा. [7] तत्राप्यतिचिरं कालं भुक्त्वा भोगान् तदात्मकान्. [8] चित्तवत्–पु. पा.

न पुनश्चक्रवर्ती स्याच्छिवधर्माधिकारवान्।
तस्माच्छिवाश्रितो भूत्वा येन केनापि हेतुना ॥
शिवधर्मे मतिं कुर्याच्छ्रेयसे चेत्कृतोद्यमः।
नात्र निर्बन्धयिष्यामो वयं कंचन केनचित् ॥
निर्बन्धेभ्योऽतिवादेभ्यः प्रकृत्यैतन्न रोचते।
रोचते वा परेभ्यस्तु पुण्यसंस्कारगौरवात् ॥
संसारकारणं येषां न प्ररोढुमलं भवेत्।
प्रकृत्यनुगुणं तस्माद्विमृश्यैतदशेषतः ॥
[1] शिवधर्मेऽधिकुर्वीत यदीच्छेच्छिवमात्मनः।
(शिवधर्मे मतिं कुर्याच्छ्रेयसे चेत्कृतोद्यमः ॥)

(कृष्णः)—(वाय–उत्तर २९)—

(भगवंस्त्वन्मुखादेव श्रुतं श्रुतिसमं मया।
स्वाश्रितानां शिवप्रोक्तं नित्यनैमित्तिकं तथा ॥)
इदानीं श्रोतुमिच्छामि शिवधर्माधिकारणम्।
काम्यमप्यस्ति चेत्कर्म वक्तुमर्हसि सांप्रतम् ॥

(उपमन्युः)—

अस्त्यैहिकफलं किञ्चिदामुष्मिकफलं तथा।
ऐहिकामुष्मिकं चापि तच्च पञ्चविधं पुनः ॥
किञ्चित् क्रियामयं कर्म किञ्चित्कर्म तपोमयम्।
जपध्यानमयं किञ्चित् किञ्चित्सर्वमयं तथा ॥
क्रियामयं तथा भिन्नं होमदानार्चनक्रमात्।
सर्वं शक्तिमतामेव नान्येषां फलदं भवेत् ॥
शक्तिश्चाद्या महेशस्य शिवस्य परमात्मनः।
[2] तस्मात्कार्याणि सर्वाणि कुर्यादाज्ञाधरः [3] सुधीः ॥
अथ वक्ष्यामि [4] काम्यं हि चेहामुत्र फलप्रदम्।
शैवैर्माहेश्वरैश्चैव कार्यमन्तर्बहिः क्रमात् ॥

---

[1] शिवधर्मे प्रकुर्वीत यदीच्छेच्छ्रियमात्मनः. [2] त्काम्यानि–पु.पा. [3] द्विजः–पु.पा. [4] काम्यानामिहा.

शिवो महेश्वरश्चेति नात्यन्तमिह भिद्यते ।
यथा तथा न भिद्यन्ते शैवा माहेश्वरा अपि ॥

शिवाश्रिते हि ते शैवा ज्ञानयज्ञरता नराः ।
माहेश्वराः समाख्याता कर्मयज्ञरता भुवि ॥

तस्मादभ्यन्तरे कुर्युः शैवा माहेश्वरा बहिः ।
नतु प्रयोगो भिद्येत वक्ष्यमाणस्य कर्मणः ॥

परीक्ष्य भूमिं विधिवद्गन्धवर्णरसादिभिः ।
मनोऽभिलषिते [1] रत्नवितानविततास्वरे ॥

सुप्रदीप्ते महीपृष्ठे दर्पणोदरसन्निभे ।
प्राची[2]मुत्खातयेत्पूर्वं शास्त्रदृष्टेन वर्त्मना ॥

एकहस्तं द्विहस्तं वा मण्डलं परिकल्पयेत् ।
आलिखेद्विलसत्पद्ममष्टपत्रं सकर्णिकम् ॥

रत्नहेमादिभिश्चूर्णैर्यथासंभवसम्भृतैः ।
[3] प्रतिवारणसंयुक्तं बहुशोभासमन्वितम् ॥

दलेषु सिद्धयः कल्प्याः केसरेषु सशक्तिकाः ।
रुद्रा वामादयस्त्वष्टौ पूर्वादिदलतः क्रमात् ॥

कर्णिकायां च वैराग्यं बीजेषु नव शक्तयः ।
कन्दे शिवात्मको धर्मो नाळे ज्ञानं शिवाश्रयम् ॥

कर्णिकोपरि वाह्नेयं मण्डलं सौरमैन्दवम् ।
शिवविद्यात्मतत्त्वाख्यं तत्त्वत्रयमतः परः ॥

सर्वासनोपरि सुखं विचित्रकुसुमान्वितम् ।
(परं व्योमावकाशं च विद्ययातीव भास्वरम् ॥)

परिकल्प्यासनं मूर्तावावाह्य परमेश्वरम् ।
पञ्चावरणसंयुक्तं पूजयेदम्बया सह ॥

शुद्धस्फटिकसङ्काशं प्रसन्नं शीतलद्युतिम् ।
विद्युद्वलयसङ्काशजटामकुटभूषितम् ॥
शार्दूलचर्मवसनं किञ्चित्स्मितमुखाम्बुजम् ।

---

[1] तत्र–पु. पा. [2] मुत्पादयेद्–पु. पा. [3] पञ्चावरण–पु. पा.

रत्नपद्मदलप्रख्यपाणिपादतलाधरम्।
सर्वलक्षणसम्पन्नं सर्वाभरणभूषितम्॥

दिव्यायुध(व)धरैर्युक्तं दिव्यगन्धानुलेपनम्।
पञ्चवक्त्रं दशभुजं चन्द्रखण्डशिखामणिम्॥

अस्य पूर्वमुखं सौम्यं बालार्कसदृशप्रभम्।
त्रिलोचनारविन्दाढ्यं बालेन्दुकृतशेखरम्॥

दक्षिणं नीलजीमूतसमानरुचिरप्रभम्।
भ्रुकुटीकुटिलं घोरं रक्तवृत्तेक्षणत्रयम्॥

दंष्ट्राकरालं दुर्धर्षं स्फुरिताधरपल्लवम्।
उत्तमं विद्रुमप्रख्यं नीलालकविभूषितम्॥

सविलासं त्रिणयनं चन्द्रार्धकृतशेखरम्।
पश्चिमं पूर्णचन्द्राभं लोचनत्रितयोज्वलम्॥

चन्द्रलेखाधरं सौम्यं मन्दस्मितमनोहरम्।
पञ्चमं स्फटिकप्रख्यं [1] विद्युल्लेखासमुज्ज्वलम्॥

अतीवसौम्यमुत्फुल्ललोचनत्रितयोज्ज्वलम्।
दक्षिणे शूलपरशुवज्रखड्गानलोज्ज्वलम्॥

सव्ये च नागनाराचघण्टापाशाङ्कुशोज्ज्वलम्।
निवृत्त्या जानुपर्यन्तमानाभेश्च प्रतिष्ठया॥

आकण्ठं विद्यया तद्वदाललाटं तु शान्तया।
तदूर्ध्वं शान्त्यतीताख्यकलया परया तथा॥

पञ्चाध्वव्यापिनं साक्षात्कलापञ्चकविग्रहम्।
ईशानमकुटं देवं पुरुषाख्यं पुरातनम्॥

अघोरहृदयं तद्वद्वामगुह्यं महेश्वरम्।
सद्यपादं च तन्मूर्तिमष्टत्रिंशत्कलामयम्॥

मातृकामयमीशानं पञ्चब्रह्ममयं तथा।
ओङ्काराख्यमयं चैव हंसशक्त्या समन्वितम्॥

---

[1] इन्दुलेखा—पा.

(पञ्चाक्षरमयं देवं षडक्षरमयं तु वा ।
अङ्गषट्कयुतं चैव जातिषट्कसमन्वितम् ॥)
तथेच्छात्मिकया शक्त्या समारूढाङ्कमण्डलम् ।
ज्ञानाख्यया दक्षिणतो वामतस्तु क्रियाख्यया ॥
तत्त्वत्रयमयं साक्षाद्विद्यामूर्तिं सदाशिवम् ।
[1]मूर्तिमूलेन सङ्कल्प्य सकलीकृत्य च क्रमात् ॥
संपूज्य च यथान्याय[2]मर्घ्येतन्मूलविद्यया ।
मूर्तिमन्तं शिवं साक्षाच्छक्त्या परमया सह ॥
तत्रावाह्य महादेवं सदसद्व्यक्तिवर्जितम् ।
पञ्चोपचरणं कृत्वा पूजयेत्परमेश्वरम् ॥
ब्रह्मभिश्च षडङ्गैश्च ततो मातृकया सह ।
प्रणवेन शिवेनैव शक्तियुक्तेन च क्रमात् ॥
[3]साङ्गेन च तथान्यैश्च देवमन्त्रैश्च कृत्स्नशः ।
पूजयेत् [4]परमं देवं केवलेन शिवेन वा ॥
पाद्यादिमुखवासान्तं कृत्वा प्रस्थापनं विना ।
पञ्चावरणपूजां तु प्रारभेत यथाक्रमम् ॥

(वाय-उत्तर ३०)—

तत्रादौ शिवयोः पार्श्वे दक्षिणे वामतः क्रमात् ।
गन्धाद्यैरर्चयेत्पूर्वं देवौ हेरम्बषण्मुखौ ॥
ततो ब्रह्माणि परित ईशानादि यथाक्रमम् ।
सशक्तिकानि सद्यान्तं प्रथमावरणे यजेत् ॥
षडङ्गान्यपि तत्रैव हृदयादीन्यनुक्रमात् ।
शिवस्य च शिवायाश्च वाह्नेयादि समर्चयेत् ॥
तत्र वामादिकान् रुद्रानष्टौ वामादिशक्तिभिः ।
अर्चयेद्वा न वा पश्चात् पूर्वादिपरितः क्रमात् ॥
प्रथमावरणं प्रोक्तं मया ते रघुनन्दन ।
द्वितीयावरणं प्रीत्या प्रोच्यते श्रद्धया शृणु ॥

---

[1] मूर्तित्वेनैव—पा. [2] मध्यान्तं मूलं—पु. पा. [3] शान्तेन—पु. पा. [4] परयादेवं—पा.

अनन्तं पूर्वदिक्पत्रे तच्छक्तिं तस्य वामतः।
सूक्ष्मं दक्षिणदिक्पत्रे शक्त्या सह समर्चयेत्॥

ततः पश्चिमदिक्पत्रे शक्त्या सह शिवोत्तमम्।
तथैवोत्तरदिक्पत्रे चैकनेत्रं समर्चयेत्॥

एकरुद्रं च तच्छक्तिं [1] पश्चादीशानदिग्दले।
त्रिमूर्तिं तस्य शक्तिं च पूजयेदग्निदिग्दले॥

श्रीकण्ठं नैरृते पत्रे तच्छक्तिं तस्य वामतः।
तथैव मारुते पत्रे शिखण्डीशं समर्चयेत्॥

द्वितीयावरणे चेज्याः सर्वतश्चक्रवर्तिनः।
तृतीयावरणे पूज्याः शक्तिभिश्चाष्टमूर्तयः॥

अष्टसु क्रमतो दिक्षु पूर्वादिपरितः क्रमात्।
भवः शर्वस्तथेशानो रुद्रः पशुपतिस्तथा॥

उग्रो भीमो महादेव इत्यष्टौ मूर्तयः क्रमात्।
[2] अन्तरान्तरतश्चैव महादेवादयः क्रमात्॥

शक्तिभिः सह संपूज्यास्तत्रैकादशमूर्तयः।
महादेवः शिवो रुद्रः शङ्करो नीललोहितः॥

ईशानो विजयो भीमो देवदेवो भवोद्भवः।
[3] कपालीशश्च कथ्यन्ते तथैकादश [4] मूर्तयः॥

तत्राष्टौ प्रथमं पूज्याः आग्नेयादि यथाक्रमम्।
देवदेवः पूर्वपत्रे [5] ऐशान्यामग्निगोचरे॥

भवोद्भवस्तयोर्मध्ये कपालीशस्ततः परम्।
तस्मिन्नावरणे भूयो वृषेन्द्रं पुरतो यजेत्॥

नन्दिनं दक्षिणे तस्य महाकालं तथोत्तरे।
शास्तारं वह्निदिक्पत्रे मातृर्दक्षिणदिग्दले॥

गजास्यं नैरृते पत्रे षण्मुखं वारुणे ततः।
ज्येष्ठां वायुदले गौरीमुत्तरे चण्डमैश्वरे।

---

[1] पश्चादीशदलेऽर्चयेत्–पु. पा. [2] अनन्तरं ततश्चैषां–पा. [3] कपर्दीशश्च–पु. पा.
[4] शक्तयः–पु. पा. [5] ईशानं चाग्नि–पु. पा.

शास्तृनन्दीशयोर्मध्ये मुनीन्द्रं वृषभं यजेत् ।
महाकालस्योत्तरतः पिङ्गलं तु समर्चयेत् ॥

शास्तृमातृसमूहस्य मध्ये भृङ्गीश्वरं यजेत् ।
[1]मातृविघ्नेशयोर्मध्ये वीरभद्रं समर्चयेत् ॥

स्कन्दविघ्नेशयोर्मध्ये यजेद्देवीं सरस्वतीम् ।
ज्येष्ठाकुमारयोर्मध्ये श्रियं साम्बशिवार्चिताम् ॥

ज्येष्ठागणाम्बयोर्मध्ये महामोटीं समर्चयेत् ।
गणाम्बाचण्डयोर्मध्ये देवीं दुर्गां प्रपूजयेत् ॥

अत्रैवावरणे भूयः शिवानुचरसंहतिम् ।
[2]रुद्रप्रमथभूताख्यां विविधां च सशक्तिकाम् ॥

शिवायाश्च सखीवर्गं यजेद्ध्यात्वा [3]समन्ततः ।
एवं तृतीयावरणे वितते पूजिते सति ॥

चतुर्थावरणं ध्यात्वा बहिस्तस्य समर्चयेत् ।
भानुः पूर्वदले पूज्यो दक्षिणे चतुराननः ॥

रुद्रो वरुणदिक्पत्रे विष्णुरुत्तरदिग्दले ।
चतुर्णामपि देवानां पृथगावरणान्यथ ॥

(तत्पूजानन्तरं कुर्यात्तच्छास्त्रोक्तप्रकारतः ।
अथवा भानुमभ्यर्च्य प्रथमावरणे यजेत् ॥)

तस्याङ्गानि षडेवादौ दीप्ताद्याभिश्च शक्तिभिः ।
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला क्रमात् ॥

अमोघा विद्युता चैव पूर्वादिपरितः स्थिताः ।
द्वितीयावरणे पूज्याश्चतस्रो मूर्तयः क्रमात् ॥

पूर्वाद्युत्तरपर्यन्ताः शक्तयश्च ततः परम् ।
आदित्यो भास्करो भानू रविश्चेत्यनुपूर्वशः ॥

अर्को ब्रह्मा तथा रुद्रो विष्णुश्चेति विवस्वतः ।
वितारा पूर्वदिग्भागे सुतारा दक्षिणे तथा ॥

---

[1] मातृविघ्नेशमध्ये तु–पु. पा. [2] रुद्रप्रथम–पु. पा. [3] समाहितः–पु. पा.

बोधिनी पश्चिमे भाग आप्यायन्युत्तरे पुनः ।
उषां प्रभां तथा प्राज्ञां सन्ध्यामपि ततः परम् ।
ऐशानादिषु विन्यस्य द्वितीयावरणे यजेत् ।
सोममङ्गारकं चैव बुधं बुद्धिमतां वरम् ॥
बृहस्पतिं बृहद्बुद्धिं भार्गवं तेजसां निधिम् ।
शनैश्चरं तथा राहुं केतुं धूम्रं भयङ्करम् ॥
समन्ततो यजेदेतान् तृतीयावरणे क्रमात् ।
अथवा द्वादशादित्यान् द्वितीयावरणे यजेत् ।
तृतीयावरणे चैव राशीन् द्वादश पूजयेत् ।
सप्तसप्तिगणांश्चैव बहिस्तस्य समन्ततः ।
ऋषीन्देवांश्च गन्धर्वान् पन्नगानप्सरोगणान् ।
ग्रामण्यश्च तथा यक्षान् यातुधानांस्तथा हयान् ॥
सप्तच्छन्दोमयांश्चैव वालखिल्यांश्च पूजयेत् ।
एवं तृतीयावरणे समभ्यर्च्य दिवाकरम् ॥
ब्रह्माणमर्चयेत्पश्चात्त्रिभिरावणैः सह ।
हिरण्यगर्भं पूर्वस्यां विराजं दक्षिणे ततः ॥
कालं पश्चिमदिग्भागे पुरुषं चोत्तरे यजेत् ।
हिरण्यवर्णः प्रथमो ब्रह्मा कमलसन्निभः ॥
कालो जात्यञ्जनप्रख्यः पुरुषः स्फटिकोपमः ।
त्रिगुणो राजसश्चैव तामसः सात्विकस्तथा ॥
चत्वार एते क्रमशः प्रथमावरणे स्थिताः ।
द्वितीयावरणे पूज्याः पूर्वादिपरितः क्रमात् ॥
सनत्कुमारः सनकः सनन्दश्च सनातनः ।
तृतीयावरणे पश्चादर्चयेच्च प्रजापतीन् ॥
अष्टौ पूर्वांश्च पूर्वादौ त्रीन् प्राक्पश्चादनुक्रमात् ।
दक्षो रुचिर्भृगुश्चैव मरीचिश्च तथाङ्गिराः ॥
पुलस्त्यः पुलहश्चैव क्रतुरत्रिश्च काश्यपः ।
वसिष्ठश्चेति विख्याताः प्रजानां पतयस्त्विमे ॥

तेषां भार्याश्च तैः सार्धं पूजनीया यथाक्रमम् ।
प्रसूतिश्च तथाकूतिः ख्यातिः संभूतिरेव च ॥

धृतिः स्मृतिः क्षमा चैव सन्नतिश्चानसूयका ।
देवमातारुन्धती च सर्वाः खलु पतिव्रताः ॥

शिवार्चनरता नित्यं श्रीमत्यः प्रियदर्शनाः ।
प्रथमावरणे वेदांश्चतुरोऽवा प्रपूजयेत् ॥

इतिहासपुराणानि द्वितीयावरणे पुनः ।
तृतीयावरणे पूज्या धर्मशास्त्रपुरस्सराः ॥

वैदिक्यो निखिला विद्याः पूज्या एव समन्ततः ।
(पूर्वादिपुरतो वेदास्तदन्ये तु यथारुचि ॥

अष्टधा वा चतुर्धा वा कृत्वा पूजां समन्ततः ।)
एवं ब्रह्माणमभ्यर्च्य त्रिभिरावरणैर्युतम् ॥

दक्षिणे पश्चिमे पश्चाद्रुद्रं सावरणं यजेत् ।
तस्य ब्रह्मषडङ्गानि प्रथमावरणं स्मृतम् ॥

द्वितीयावरणे चैव विद्येश्वरमयं तथा ।
तृतीयावरणे भेदो विद्यते स तु कथ्यते ॥

चतस्रो मूर्तयस्तस्य पूज्याः पूर्वादितः क्रमात् ।
त्रिगुणः सकलो देवः पुरस्ताच्छिवसंज्ञकः ॥

राजसो दक्षिणे ब्रह्मा सृष्टिकृत्पूज्यते भवः ।
तामसः पश्चिमे वाग्निः पूज्यः संहारको हरः ॥

सात्विकः सुखकृत्सौम्यो विष्णुर्विश्वपतिर्मृडः ।
एवं पश्चिमदिग्भागे [1] शंभुः षड्विंशकः शिवः ॥

[2](पूर्वादिपरितो वेशास्तदन्ये तु यथारुचि ।)
समभ्यर्च्योत्तरे भागे ततो वैकुण्ठमर्चयेत् ॥

वासुदेवं [3]पुरस्कृत्वा प्रथमावरणे यजेत् ।
अनिरुद्धं दक्षिणतः प्रद्युम्नं पश्चिमे ततः ॥

---

[1] रुद्रः पश्चिमदिग्भागे शंभोः षड्विंशकं शिवं—पा. [2] पुराणे नास्ति. [3] पुरस्तस्य.

सौम्ये सङ्कर्षणं पश्चा[1]द्व्यत्यस्तौ वा यजेदिमौ ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥

मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः ।
रामश्चान्यतमः कृष्णो भवानश्वमुखोऽपि च ॥

तृतीयावरणे चक्रं पूर्वभागे समर्चयेत् ।
नारायणाख्यं याम्येऽस्त्रं क्वचिदव्याहतं यजेत् ॥

पश्चिमे पाञ्चजन्यं च शार्ङ्गं धनुरथोत्तरे ।
एवं [2]त्र्यावरणैः साक्षाद्विष्णवाख्यं परमं हरिम् ॥

महाविष्णुं सदाविष्णुं मूर्तीकृत्य समर्चयेत् ।
[3]इत्थं विष्णोश्चतुर्व्यूहक्रमान्मूर्तिचतुष्टयम् ॥

पूजयित्वा [4]च तच्छक्तीश्चतस्रः पूजयेत्क्रमात् ।
प्रभामाग्नेयदिग्भागे नैरृते तु सरस्वतीम् ॥

गणाम्बिकां च वायव्ये लक्ष्मीं रौद्रे समर्चयेत् ।
एवं भान्वादिमूर्तीनां तच्छक्तीनामनन्तरम् ॥

पूजां विधाय लोकेशांस्तत्रैवावरणे यजेत् ।
इन्द्रमग्निं यमं चैव निरृतिं वरुणं तथा ॥

वायुं सोमं कुबेरं च पश्चादीशानमर्चयेत् ।
एवं चतुर्थावरणं पूजयित्वा विधानतः ॥

आयुधानि महेशस्य पञ्चबाह्ये समर्चयेत् ।
श्रीमन्त्रिशूलमैशाने वज्रं माहेन्द्रदिङ्मुखे ॥

परशुं वह्निदिग्भागे याम्ये सायकमर्चयेत् ।
नैरृते तु यजेत् खड्गं पाशं वरुणगोचरे ॥

अङ्कुशं मारुते भागे पिनाकं चोत्तरे यजेत् ।
पश्चिमाभिमुखं रौद्रे क्षेत्रपालं समर्चयेत् ।

पञ्चावरणमेवं तु संपूज्यानन्तरं बहिः ॥
सर्वावरणदेवानां बहिर्वा [5]पञ्चमेऽथ वा ॥

---

[1] द्वाव्यस्तोमौ. [2] त्र्यावरणं साक्षाद्. [3] इत्थं चतुश्चतुर्व्यूहं क्र. [4] ततः शक्तीः.
[5] पश्चिमे.

पञ्चगोमातृभिः सार्धं महोक्षं पुरतो यजेत्।
ततः समन्ततः पूज्याः सर्वा वै देवयोनयः॥

खेचरा ऋषयः सिद्धा दैत्या यक्षाश्च राक्षसाः।
अनन्ताद्याश्च नागेन्द्रा नागास्तत्तत्कुलोद्भवैः॥

शाकिनीभूतवेतालप्रेतभैरवनायकाः।
पातालवासिनश्चान्ये नानायोनिसमुद्भवाः॥

नद्यः समुद्रा गिरयः काननानि सरांसि च।
पशवः पक्षिणो वृक्षाः कीटाद्याः क्षुद्रयोनयः॥

नराश्च विविधाकारा मृगाश्च क्षुद्रयोनयः।
[1](भुवनान्यन्तरण्डस्य ततो ब्रह्माण्डकोटयः॥

बहिरण्डान्यसङ्ख्यानि भुवनानि सहाधिपैः।
ब्रह्माण्डाधारका रुद्रा दशदिक्षु व्यवस्थिताः॥)

[2]यद्बौडं यच्च मायेयं यद्वा शाक्तं ततः परम्॥
यत्किञ्चिदस्ति शब्दस्य वाच्यं चिदचिदात्मकम्।

तत्सर्वं शिवयोः पार्श्वे बुध्वा सामन्यतो यजेत्॥
कृताञ्जलिपुटाः सर्वे चिन्त्याः स्मितमुखास्तथा।

प्रीत्या संप्रेक्षमाणाश्च देवं देवीं च [3]सर्वदा॥
इत्थमावरणाभ्यर्चां कृत्वा [4]विक्षेपशान्तये।

पुनरभ्यर्च्य देवेशं पञ्चाक्षरसुदीरयेत्।
निवेदयेत्ततः पश्चाच्छिवयोरमृतोपमम्॥

[5]सुव्यञ्जनसमायुक्तं शुद्धं चारु महाचरुम्।
द्वात्रिंशदाढकैर्मुख्यमधमं त्वाढकावरम्॥

साधयित्वा यथासम्पच्छ्रद्धया विनिवेदयेत्।
ततो निवेद्य पानीयं ताम्बूलं चोपदंशकैः॥

नीराजनादिकं कृत्वा पूजाशेषं समापयेत्।
[6]भोगोपयोगद्रव्याणि विशिष्टान्येव साधयेत्॥

---

[1] पुराणपाठः. [2] यद्बौणं यच्च आग्नेयं. [3] सादरं. [4] तस्योपशान्तये.
[5] सरसव्यञ्जनं शुद्धं षट्प्रकारमयं चरुम्. [6] यागोप.

विचशाठ्यं न कुर्वीत [1]भक्तिमान् विभवे सति ।
शठस्योपेक्षकस्यापि व्यङ्गं चाप्यनुतिष्ठतः ॥

न फलन्त्येव कर्माणि काम्यानीति सतां कथा ।
तस्माच्छाठ्यमुपेक्षां च त्यक्त्वा सर्वाङ्गयोगतः ॥

कुर्यात्काम्यानि कर्माणि फलसिद्धं यदीच्छति ।
इत्थं पूजां समाप्याथ देवं देवीं प्रणम्य च ॥

भक्त्या मनः समाधाय [2]पश्चात्स्तोत्रमुदीरयेत् ।
[3]ततः स्तोत्रमुपास्यान्ते त्वष्टोत्तरशतावराम् ॥

जपेत्पञ्चाक्षरीं विद्यां सहस्रोत्तरमुत्सुकः ।
विद्यापूजां गुरोः पूजां कृत्वा पश्चाद्यथाक्रमम् ॥

यथोदयं यथाश्रद्धं सदस्यानपि पूजयेत् ।
तत उद्वास्य देवेशं सर्वैरावरणैः सह ॥

मण्डलं गुरवे दद्याद्यानोपकरणैः सह ।
शिवाश्रितेभ्यो वा दद्यात्सर्व[4]मेवानुरूपतः ॥

अथवा तच्छिवायैव शिवक्षेत्रे समर्पयेत् ।
शिवाग्नौ च यजेद्देवं होमद्रव्यैश्च सप्तभिः ॥

समभ्यर्च्यं यथान्यायं सर्वावरणदेवताः ।
एष योगेश्वरो नाम त्रिषु लोकेषु विश्रुतः ॥

न तस्मादधिकः कश्चिद्योगोऽस्ति जगति क्वचित् ।
न तदस्ति जगत्यस्मिन्नसाध्यं यदनेन तु ॥

ऐहिकं वा फलं किंचिदामुष्मिकमथापि वा ।
इदमस्य फलं नेदमिति नैव नियम्यते ॥

श्रेयोरूपस्य कृत्स्नस्य यदिदं श्रेष्ठसाधनम् ।
इदं न शक्यते वक्तुं पुरुषेण यदर्थ्यते ॥

चिन्तामणेरिवैतस्मात्तत्तेन प्राप्यते फलम् ।
तथापि क्षुद्रमुद्दिश्य फलं नैतत्प्रयोजयेत् ॥

---

[1] बुद्धिमान्. [2] चिन्तयेज्जगदीश्वरौ. [3] पश्चात्स्तोत्रजपस्यान्ते. [4] मेवानुपूर्वशः, मेव गुरूक्तितः.

लध्वर्थी महतो यस्मात्स्वयं लघुतरो भवेत्।
महद्वा फलमल्पं वा कृतं चेत्कर्म सिध्यति॥

महादेवं समुद्दिश्य कृतं कर्म प्रयुञ्जताम्।
तस्मादनन्यलभ्येषु शत्रुमृत्युजयादिषु॥

फलेषु दृष्टादृष्टेषु कुर्यादेतद्विचक्षणः।
महत्स्वपि च [1]पातेषु महारोगभयादिषु॥

दुर्भिक्षादिषु चात्यन्तं शान्तिं कुर्यादनेन तु।
बहुना किं प्रलापेन [2]महाव्यापन्निवारणम्॥

आत्मीयमस्त्रं शैवानामिदमाह महेश्वरः।
तस्मादितः परं नास्ति परित्राणमिहात्मनः॥

इति मत्वा प्रयुञ्जानः कर्मेदं भद्रमश्नुते।
स्तोत्रमात्रं शुचिर्भूत्वा यः पठेत्सुसमाहितः॥

सोऽप्यभीष्टतमादर्थादष्टांशं फलमाप्नुयात्।
अर्थं तस्यानुसन्धाय *(पठेद्यदि समाहितः॥

अर्धार्धफलमाप्नोति नात्र कार्या विचारणा।
अर्धार्धमनुसन्धाय) पर्वण्यनशनः पठेत्॥

अष्टम्यां च[3] चतुर्दश्यां फलमर्धं समाप्नुयात्।
[4]यस्त्वर्थमनुसन्धाय पर्वादिषु तथा व्रती॥

मासमेकं जपेत्स्तोत्रं स कृत्स्नं फलमाप्नुयात्।

इति पञ्चावरणपूजाप्रकरणम्।

---

## पञ्चावरणस्तोत्रम्

(उपमन्युः)—(वाय-उत्तर-३१)

स्तोत्रं वक्ष्यामि ते कृष्ण पञ्चावरणमार्गतः।
योगेश्वरमिदं पुण्यं कर्म येन समाप्यते॥

---

[1] पापेषु. [2] महापापनि. *पुराणे नास्ति. [3] चतुर्दश्यामर्धं स फलमाप्नुयात्।
[4] यः स्वार्थं.

जय जय जगदेकनाथ शम्भो
प्रकृतिमनोहर नित्य [1]चित्स्वभाव।
अतिगतकलुषप्रपञ्चवाचा-
मपि मनसां पदवीमतीततत्त्व॥

स्वभावनिर्मलाभोग जय सुन्दरचेष्टित।
स्वात्मतुल्यमहाशक्ते जय शुद्धगुणार्णव॥

अनन्तकान्तिसंपन्न जयासदृशविग्रह।
अतर्क्यमहिमाधार जयानाकुलमङ्गल॥

निरञ्जन निराधार जय निष्कारणोदय।
निरन्तपरमानन्द जय निर्वृतिकारण॥

[2] जयातिपरमैश्वर्य जयातिकरुणास्पद।
[3]जय स्वतन्त्र सर्वस्व जयासदृशवैभव॥

जयावृतमहाविश्व जयानावृत केनचित्।
जयोत्तर समस्तस्य जयात्यन्तनिरुत्तर॥

जयाद्भुत जयाक्षुद्र जयाक्षत जयाव्यय।
ज.ामेय जयामाय जयाभव जयामल॥

महाभुज महासार महागुण महाकथ।
महाबल महामाय महारस महारथ॥

नमः परमदेवाय नमः परमहेतवे।
नमः शिवाय शान्ताय नमः शिवतराय ते॥

त्वदधीनमिदं कृत्स्नं जगद्धि ससुरासुरम्।
अतस्त्वद्विहितामाज्ञां क्षमते कोऽतिवर्तितुम्॥

अयं पुनर्जनो नित्यं भवदेकसमाश्रयः।
भवानतोऽनुगृह्यास्मै प्रार्थितं संप्रयच्छतु॥

जयाम्बिके जगन्मातर्जय सर्वजगन्मयि।
जयानवधिकैश्वर्ये जयानुपमविग्रहे॥

---

[1] विश्वभाव-पा. [2] अपारपरमैश्वर्य. [3] अतिस्वातन्त्र्यसर्वस्व जयासदृशविग्रह.

जय वाङ्मनसातीते जयाचिध्द्वान्तभञ्जिके ।
जय जन्मजराहीने जय कालोत्तरोत्तरे ॥

जयानेकनिधानस्थे [1](जयानेकसुरात्मिके ।
जयानेकमहासत्त्वे जयानेक[2]गुणोर्जिते ॥

जय विश्वाधिकात्मस्थे) जय विश्वेश्वरप्रिये ।
जय विश्वसुराराध्ये जय विश्वविजृम्भिणि ॥

जय मङ्गलदिव्याङ्गि जय मङ्गलदीपिके ।
जय मङ्गलचारित्रे जय मङ्गलदायिनि ।
नमः परमकल्याणगुणसञ्चयमूर्तये ॥

नमः शिवायै विश्वस्मात्परस्यै शिवशक्तये ।
त्वत्तः खलु समुत्पन्नं जगत्त्वय्येव लीयते ॥

त्वां विनातः फलं दातुमीश्वरोऽपि न शक्नुयात् ।
जन्मप्रभृति देवेशि जनोऽयं त्वदुपाश्रयः ॥

[3]अतोऽस्य तव भक्तस्य निर्वर्तय मनोरथम् ।
पञ्चवक्त्रो दशभुजः शुद्धस्फटिकसन्निभः ॥

वर्णब्रह्म कलादेहो देवः सकलनिष्कलः ।
[4]शिवभक्तिसमारूढः शान्त्यतीतः सदाशिवः ॥

भक्त्या मयार्चितो मह्यं प्रार्थितं शं प्रयच्छतु ।
सदाशिवाङ्कमारूढा शक्तिरिच्छासमाह्वया ॥

जननी [5]सर्वलोकानां प्रयच्छतु मनोरथम् ।
शिवयोर्दयितौ पुत्रौ देवौ हेरम्बषण्मुखौ ॥

शिवानुभावौ सर्वज्ञौ शिवज्ञानामृताशनौ ।
दृप्तौ परस्परं स्निग्धौ शिवाभ्यां नित्यसत्कृतौ ॥

सत्कृतौ च सदा देवैर्ब्रह्माद्यैरखिलैरपि ।
सर्वलोकपरित्राणं कर्तुमभ्युदितौ सदा ॥

---

[1] पुराणे नास्ति. [2] गुणार्चिते-पा. [3] जातोऽस्त्यतोऽस्य भृत्यस्य. [4] शिवमूर्तिः स्वमारूढः. [5] सर्वभूतानां प्रार्थितं मे प्रयच्छतु.

[1]स्वेच्छावतारं कुर्वन्तौ स्वांशभेदैरनेकशः ।
ताविमौ शिवयोः पार्श्वे नित्यमित्थं मयार्चितौ ॥

तयोराज्ञां पुरस्कृत्य प्रार्थितं मे प्रयच्छताम् ।
शुद्धस्फटिकसङ्काशमीशानाख्यं सदाशिवम् ॥

मूर्धाभिमानिनी मूर्तिः शिवस्य परमात्मनः ।
शिवार्चनरतं शान्तं शान्त्यतीतं खमास्थितम् ॥

[2]पञ्चाक्षरान्तिमं बीजं कलाभिः पञ्चभिर्युतम् ।
प्रथमावरणे पूर्वं शक्त्या सह समर्चितम् ॥

पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु ।
बालसूर्यप्रतीकाशं पुरुषाख्यं पुरातनम् ॥

पूर्ववक्त्राभिमानं च शिवस्य परमेष्ठिनः ।
शान्त्यात्मकं मरुत्संस्थं शम्भोः पादार्चने रतम् ॥

[3]प्रथमं शिवबीजेषु कलासु च चतुष्कलम् ।
पूर्वभागे मया भक्त्या शक्त्या सह समर्चितम् ॥

[4] पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु ।
अञ्जनाद्रिप्रतीकाशमघोरं घोरविग्रहम् ॥

देवस्य दक्षिणं वक्त्रं देवदेवपदार्चकम् ।
विद्यापादं समारूढं वह्निमण्डलमध्यगम् ॥

[5]द्वितीयं शिवबीजेषु कलास्वष्टकलान्वितम् ।
शम्भोर्दक्षिणदिग्भागे शक्त्या सह समर्चितम् ॥

पवित्रं मध्यमं ब्रह्म प्रार्थितं मे प्रयच्छतु ।
कुङ्कुमक्षोदसङ्काशं वामाख्यं वरवेषधृक् ॥

वक्त्रमुत्तरमीशस्य प्रतिष्ठायां प्रतिष्ठितम् ।
वारिमण्डलमध्यस्थं महादेवार्चने रतम् ॥

[6]तृतीयं शिवबीजेषु त्रयोदशकलान्वितम् ।
देवस्योत्तरदिग्भागे शक्त्या सह समर्चितम् ॥

---

[1] स्वेच्छाविहारं. [2] पञ्चाक्षरं च सद्बीजः. [3] तुरीयं. [4] चतुर्थं. [5] तृतीयं.
[6] द्वितीयं.

पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु ।
शङ्खकुन्देन्दुधवलं [1]सन्ध्याख्यं सौम्यलक्षणम् ॥

शिवस्य पश्चिमं वक्त्रं शिवपादार्चने रतम् ।
निवृत्तिपदनिष्ठं च पृथिव्यां समवस्थितम् ॥

[2]तुरीयं शिवबीजेषु कलाभिश्चाष्टभिर्युतम् ।
देवस्य पश्चिमे भागे शक्त्या सह समर्चितम् ॥

पवित्रं प्रथमं ब्रह्म प्रार्थितं मे प्रयच्छतु ।
शिवस्य च शिवायाश्च हृन्मूर्ती शिवभाविते ॥

सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् ।
शिवस्य च शिवायाश्च शिखामूर्ती [3]शिवाश्रिते ॥

सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् ।
शिवस्य च शिवायाश्च वर्मणी शिवभाविते ॥

सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् ।
शिवस्य च शिवायाश्च नेत्रमूर्ती शिवाश्रिते ॥

सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् ।
अस्त्रमूर्ती च शिवयोर्नित्यमर्चनतत्परे ॥

तयोराज्ञां पुरस्कृत्य ते मे कामं प्रयच्छताम् ।
वामो ज्येष्ठस्तथा रुद्रः कालो विकरणस्तथा ॥

बलो विकरणश्चैव बलप्रमथनः परः ।
सर्वभूतस्य दमनस्तादृश्यश्चाष्टशक्तयः ॥

प्रार्थितं मे प्रयच्छन्तु शिवयोरेव शासनात् ।
अथानन्तश्च सूक्ष्मश्च शिवश्चाप्येकनेत्रकः ॥

एकरुद्राख्यमूर्तिश्च [4]श्रीकण्ठः शशिखण्डकः ।
तथाष्टौ शक्तयस्तेषां द्वितीयावरणेऽर्चिताः ॥

ते मे कामं प्रयच्छन्तु शिवयोरेव शासनात् ।
भवाद्या मूर्तयश्चाष्टौ तासामपि च शक्तयः ॥

---

[1] सादाख्यं, नादाख्यं–पा. [2] प्रथमं. [3] शिवार्चके–पा. [4] श्रीकण्ठश्च शिखण्डकः–पा.

महादेवादयश्चान्ये तथैकादशमूर्तयः ।
शक्तिभिः सहिताः सर्वे तृतीयावरणेऽर्चिताः ॥

सत्कृत्य शिवयोराज्ञां दिशन्तु फलमीप्सितम् ।
वृषराजो महातेजा महामेघसमस्वनः ॥

मेरुमन्दरकैलासहिमाद्रिशिखरोपमः ।
[1] श्वेताद्रिशिखराकारककुदा परिशोभितः ॥

महाभोगीन्द्रकल्पेन वालेन च विराजितः ।
रक्तास्यशृङ्गचरणो रक्तप्रायविलोचनः ॥

पीवरोन्नतसर्वाङ्गः सुचारुगमनोज्वलः ।
प्रशस्तलक्षणः श्रीमान् प्रज्वलन्मणिभूषणः ॥

शिवप्रियः शिवासक्तः शिवयोर्ध्वजवाहनः ।
तथा तच्चरणन्यासपावितापरविग्रहः ॥

गोराजपुरुषः श्रीमाञ्छ्रीमच्छूलवरायुधः ।
तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु ॥

नन्दीश्वरो महातेजा नगेन्द्रतनयात्मजः ।
सनारायणकैर्देवैर्नित्यमभ्यर्च्य वन्दितः ॥

शर्वस्यान्तःपुरद्वारि सार्धं परिजनैः स्थितः ।
सर्वेश्वरसमप्रख्यः सर्वासुरविमर्दनः ॥

सर्वेषां शिवधर्माणामध्यक्षत्वेऽभिषेचितः ।
शिवप्रियः शिवासक्तः श्रीमच्छूलवरायुधः ॥

शिवाश्रितेषु संसक्तस्त्वनुरक्तश्च तैरपि ।
सत्कृत्य शिवयोराज्ञां स मे कामं प्रयच्छतु ॥

महाकालो महाबाहु[2]र्महादेव इवापरः ।
महादेवाश्रितानां [3] तु नित्यमेवाभिरक्षिता ॥

शिवप्रियः शिवासक्तः शिवपादार्चकः सदा ।
सत्कृत्य शिवयोराज्ञां स मे दिशतु काङ्क्षितम् ॥

---

[1] सिताभ्रशिखरा. [2] महाकाल–पा. [3] कर्मणि षष्ठी, महादेवाश्रितानित्यर्थः.

सर्वशास्त्रार्थतत्त्वज्ञः शास्ता विष्णोः परा तनुः।
महामोह्याश्च तनयो मधुमांसासवप्रियः॥

शिवप्रियः शिवासक्तः शिवयोरर्चने रतः।
तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु॥

ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा।
वाराही चैव माहेन्द्री चामुण्डी चण्डविक्रमा॥

एता वै मातरः सप्त सर्वलोकस्य मातरः।
प्रार्थितं मे प्रयच्छन्तु परमेश्वरशासनात्॥

मत्तमातङ्गवदनो गङ्गोमाशङ्करात्मजः।
आकाशदेहो दिग्बाहुः सोमसूर्याग्निलोचनः॥

ऐरावतादिभिर्दिव्यैर्दिग्गजैर्नित्यमर्चितः।
शिवज्ञानमदोत्क्लिन्नस्त्रिदशानामविघ्नकृत्॥

विघ्नकृच्चासुरादीनां विघ्नेशः शिवभावितः।
सत्कृत्य शिवयोराज्ञां स मे दिशतु काङ्क्षितम्॥

षण्मुखः शिवसंभूतः शक्तिवज्रधरः प्रभुः।
अग्नेश्च तनयो देवो ह्यपर्णातनयः पुनः॥

गङ्गायाश्च गणाम्बायाः कृतिकानां तथैव च।
विशाखेन च शाखेन नैगमेयेन चावृतः॥

इन्द्रजिच्चेन्द्रसेनानीस्तारकासुरजित्ततः।
शैलानां मेरुमुख्यानां वेधकश्च स्वतेजसा॥

तप्तचामीकरप्रख्यः शतपत्रदलेक्षणः।
कुमारः सुकुमाराणां रूपोदाहरणं महत्॥

शिवप्रियः शिवासक्तः शिवपादार्चकः सदा।
सत्कृत्य शिवयोराज्ञां स मे कामं प्रयच्छतु॥

ज्येष्ठा वरिष्ठा वरदा शिवयोः पूजने रता।
तयोराज्ञां पुरस्कृत्य सा मे दिशतु वाञ्छितम्॥

त्रैलोक्यवन्दिता साक्षादुल्काकारा गणाम्बिका।
जगत्सृष्टिविवृद्ध्यर्थं ब्रह्मणाभ्यार्थिता शिवात्॥

शिवायाः प्रविभक्ताया भ्रुवोरन्तरनिस्सृता ।
दाक्षायणी सती गौरी तथा हैमवती ह्युमा ॥

कौशिक्याश्चैव जननी [1] भद्रकाल्यास्तथैव च ।
अपर्णायाश्च जननी पाटलायास्तथैव च ॥

शिवार्चनरता नित्यं रुद्राणी रुद्रवल्लभा ।
सत्कृत्य शिवयोराज्ञां सा मे दिशतु काङ्क्षितम् ॥

चण्डः सर्वगणेशानः शम्भोर्वदनसंभवः ।
सत्कृत्य शिवयोरज्ञां समे दिशतु काङ्क्षितम् ॥

([2]वृषभो नाम गणपो वृषवाह पदार्थक ।
सत्कृत्य शिवयोराज्ञां स मे दिशतु काङ्क्षितम् ॥)

पिङ्गलो गणपः श्रीमाञ्छिवासक्तः शिवप्रियः ।
आज्ञया शिवयोरेव स मे कामं प्रयच्छतु ॥

भृङ्गीशो नाम गणपः शिवाराधनतत्परः ।
प्रयच्छतु स मे कामं भर्तुराज्ञापुरस्सरम् ॥

वीरभद्रो महातेजा हिमकुन्देन्दुसन्निभः ।
भद्रकालीप्रियो नित्यं मातॄणां चाभिरक्षिता ॥

यज्ञस्य च शिरोहर्ता दक्षस्य च दुरात्मनः ।
उपेन्द्रेन्द्रयमादीतां देवानामङ्गरक्षकः ॥

शिवस्यानुचरः श्रीमाञ्छिवशासनपालकः ।
शिवयोः शासनादेव स मे दिशतु काङ्क्षितम् ॥

सरस्वती महेशस्य वाक्सरोजसमुद्भवा ।
शिवयोः पूजने सक्ता सा मे दिशा तु वाञ्छितम् ॥

विष्णोर्वक्षस्स्थिता लक्ष्मीः शिवयोः पूजने रता ।
शिवयोः शासनादेव सा मे कामं प्रयच्छतु ॥

महामोटी महादेव्याः पादपूजापरायणा ।
तस्या एव नियोगेन सा मे कामं प्रयच्छतु ॥

---

[1] भग्नकर्णा–पा. [2] पुराणे नास्ति.

कौशिकी सिंहमारूढा पार्वत्याः परमा सुता ।
विष्णोर्निद्रा महामाया महामहिषमर्दिनी ॥

निशुम्भशुम्भसंहर्त्री मधुमांसासवप्रिया ।
सत्कृत्य शासनं मातुः सा मे कामं प्रयच्छतु ॥

रुद्रा रुद्रसमप्रख्याः प्रमथाः प्रथितौजसः ।
भूताख्याश्च महावीर्या महादेवसमप्रभाः ॥

नित्यमुक्ता निरुपमा निर्द्वन्द्वा निरुपप्लवाः ।
सशक्तयः सानुचराः सर्वलोकनमस्कृताः ॥

सर्वेषामेव लोकानां सृष्टिसंहरणक्षमाः ।
परस्परानुरक्ताश्च परस्परमनुव्रताः ॥

परस्परमतिस्निग्धाः परस्परनमस्कृताः ।
शिवप्रियतमा नित्यं शिवलक्षणलक्षिताः ॥

सौम्या घोरास्तथा मिश्राश्चान्तरालद्वयात्मिकाः ।
विरूपाश्च सरूपाश्च नानारूपधरास्तथा ॥

सत्कृत्य शिवयोराज्ञां ते मे कामं दिशन्तु वै ।
देव्याः प्रियसखीवर्गो दिव्यलक्षणलक्षितः ॥

सहितो रुद्रकन्याभिः शक्तिभिश्चाप्यनेकशः ।
तृतीयावरणे शम्भोर्भक्तया नित्यं समर्चितः ॥

सत्कृत्य शिवयोराज्ञां स मे दिशतु मङ्गलम् ।
दिवाकरो महेशस्य मूर्तिर्दीप्तसुमण्डलः ॥

निर्गुणो गुणसङ्कीर्णस्तथैव गुणकेवलः ।
अविकारात्मकश्चाद्य एकः सामान्यविक्रियः ॥

असाधारणकर्मा च सृष्टिस्थितिलयक्रमात् ।
एवं त्रिधा चतुर्धा च विभक्तः पञ्चधा पुनः ॥

चतुर्थावरणे शंभोः पूजितश्चानुगैः सह ।
शिवप्रियः शिवासक्तः शिवपादार्चने रतः ॥

सत्कृत्य शिवयोराज्ञां स मे दिशतु मङ्गलम् ।
दिवाकरषडङ्गानि दीप्ताद्याश्चाष्टशक्तयः ॥

(आदित्यो भास्करो भानू रविश्चेत्यनुपूर्वशः ।)
अर्को ब्रह्मा तथा रुद्रो विष्णुश्चादित्यमूर्तयः ॥

विस्तारा च सुतारा च बोधिन्याप्यायनी पुनः ।
उषा प्रभा तथा प्राज्ञा सन्ध्या चेत्यपि शक्तयः ॥

सोमादिकेतुपर्यन्ता ग्रहाश्च शिवभाविताः ।
शिवयोराज्ञया नुन्ना मङ्गलं प्रदिशन्तु मे ॥

अथवा द्वादशादित्यास्तथा द्वादश राशयः ।
ऋषयो देवगन्धर्वाः पन्नगाप्सरसां गणाः ॥

ग्रामण्यश्च तथा यक्षा राक्षसाश्चासुरास्तथा ।
सप्तसप्तगणाश्चैते सप्त छन्दोमया हयाः ॥

वालखिल्यादयश्चैव सर्वे शिवपदार्चकाः ।
सत्कृत्य शिवयोराज्ञां मङ्गलं प्रदिशन्तु मे ॥

ब्रह्माथ देवदेवस्य मूर्तिर्भूमण्डलाधिपः ।
चतुष्षष्टिगुणैश्वर्यो बुद्धितत्त्वे प्रतिष्ठितः ॥

निर्गुणो गुणसङ्कीर्णस्तथैव गुणकेवलः ।
अविकारात्मको देवस्ततः साधारणः परः ॥

असाधारणकर्मा च सृष्टिस्थितिलयक्रमात् ।
एवं त्रिधा चतुर्धा च विभक्तः पञ्चधा पुनः ॥

चतुर्थावरणे शंभोः पूजितश्चानुगैः सह ।
शिवप्रियः शिवासक्तः शिवपादार्चने रतः ॥

सत्कृत्य शिवयोराज्ञां स मे दिशतु मङ्गलम् ।
हिरण्यगर्भो लोकेशो विराट् कालश्च पूरुषः ॥

सनत्कुमारः सनकः सनन्दश्च सनातनः ।
प्रजानां पतयश्चैव दक्षाद्या ब्रह्मसूनवः ॥

एकादश सपत्नीका धर्मः सङ्कल्प एव च ।
शिवार्चनरताश्चैते शिवभक्तिपरायणाः ॥

शिवाज्ञावशगाः सर्वे दिशन्तु मम मङ्गलम् ।
चत्वारश्च तथा वेदाः सेतिहासपुराणकाः ॥

धर्मशास्त्राणि विद्याभिर्वैदिकाभिः समन्विताः ।
परस्परविरुद्धार्थाः शिवैकप्रतिपादकाः ॥

सत्कृत्य शिवयोराज्ञां मङ्गलं प्रदिशन्तु मे ।
अथ रुद्रो महादेवः शंभोर्मूर्तिर्गरीयसी ॥

वाह्नेयमण्डलाधीशः पौरुषैश्वर्यवान् प्रभुः ।
शिवाभिमानसम्पन्नो निर्गुणस्त्रिगुणात्मकः ॥

केवलः सात्त्विकश्चापि राजसश्चापि तामसः ।
अविकाररतः पूर्वं ततस्तु समविक्रियः ॥

असाधारणकर्मा च सृष्ट्यादिकरणात्पृथक् ।
ब्रह्मणश्च शिरश्छेत्ता जनकस्तस्य तत्सुतः ॥

जनकस्तनयश्चापि विष्णोरपि नियामकः ।
बोधकश्च तयोर्नित्यमनुग्रहकरः प्रभुः ॥

अण्डस्यान्तर्बहिर्वर्ती रुद्रो लोकत्रयाधिपः ।
शिवप्रियः शिवासक्तः शिवपादार्चने रतः ॥

शिवस्याज्ञां पुरस्कृत्य स मे दिशतु मङ्गलम् ।
तस्य ब्रह्मषडङ्गानि विद्येशान्तं तथाष्टकम् ॥

चत्वारो मूर्तिभेदाश्च [1]शिवपूर्वाः शिवार्चकाः ।
शिवो भवो हरश्चैव मृडश्चैव तथापरः ॥

शिवस्याज्ञां पुरस्कृत्य मङ्गलं प्रदिशन्तु मे ।
अथ विष्णुर्महेशस्य शिवस्यैवापरा तनुः ॥

वारितत्त्वाधिपः साक्षादव्यक्तपदसंस्थितः ।
निर्गुणः सत्त्वबहुलस्तथैव गुणकेवलः ॥

अविकाराभिमानी च तथा साधारणक्रियः ।
असाधारणकर्मा च सृष्ट्यादिकरणात्पृथक् ॥

दक्षिणाङ्गभवेनापि स्पर्धमानः स्वयंभुवा ।
आद्येन ब्रह्मणा साक्षात्सृष्टः [2]स्रष्टा च तस्य तु ॥

---

[1] शिवपादार्चने रताः. [2] सृष्ट्यादिकस्य तु.

अण्डस्यान्तर्बहिर्वर्ती विष्णुर्लोकत्रयाधिपः ।
असुरान्तकरश्चक्री शक्रस्यापि तथानुजः ॥
प्रादुर्भूतश्च दशधा भृगुशापच्छलादिह ।
भूभारनिग्रहार्थाय स्वेच्छयावातरत्क्षितौ ॥
अप्रमेयबलो मायी [1]मायया मोहयन् जगत् ।
[2]मूर्तीकृत्य महाविष्णुः प्रभविष्णुरथापि वा ॥
वैष्णवैः पूजितो नित्यं मूर्तित्रयमयासने ।
शिवप्रियः शिवासक्तः शिवपादार्चने रतः ॥
शिवस्याज्ञां पुरस्कृत्य स मे दिशतु मङ्गलम् ।
वासुदेवोऽनिरुद्धश्च प्रद्युम्नश्च ततः परम् ॥
संकर्षणसमाख्यश्च चतस्रो मूर्तयो हरेः ।
मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः ॥
रामत्रयं तथा कृष्णो विष्णुस्तुरगवक्त्रकः ।
चक्रं नारायणस्यास्त्रं पाञ्चजन्यं च शार्ङ्गकम् ॥
सत्कृत्य शिवयोराज्ञां मङ्गलं प्रदिशन्तु मे ।
प्रभा सरस्वती गौरी लक्ष्मीश्च शिवभाविता ॥
शिवयोः शासनादेता मङ्गलं प्रदिशन्तु मे ।
इन्द्रो वह्निर्यमश्चैव निरृतिर्वरुणस्तथा ॥
वायुः कुबेरः सोमश्च तथेशानस्त्रिशूलधृत् ।
सर्वे शिवार्चनरताः शिवसद्भावभाविताः ॥
सत्कृत्य शिवयोराज्ञां मङ्गलं प्रदिशन्तु मे ।
त्रिशूलमथ वज्रं च तथा परशुसायकौ ॥
खड्गपाशाङ्कुशाश्चैव पिनाकश्चायुधोत्तमः ।
दिव्यायुधानि देवस्य देव्याश्चैतानि नित्यशः ॥
सत्कृत्य शिवयोराज्ञां रक्षां कुर्वन्तु मे सदा ।
वृषरूपधरो धर्मः सौरभेयो महाबलः ॥

---

[1] मायया मोहितं जगत्–पा. [2] मूर्तिं कृत्वा महान्विष्णुं सदाविष्णुमथापि वा–पा.

वडवाख्यानलस्पर्धी पञ्चगोमातृभिर्वृतः ।
वाहनत्वमनुप्राप्तस्तपसः परमेशयोः ॥

तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु ।
नन्दा तु भद्रा सुरभिः सुशीला सुमनास्तथा ॥

पञ्चगोमातरस्त्वेताः शिवलोके व्यवस्थिताः ।
शिवभक्तिपरा नित्यं शिवार्चनपरायणाः ॥

शिवयोः शासनादेव दिशन्तु मम वाञ्छितम् ।
क्षेत्रपालो महातेजा नीलजीमूतसन्निभः ॥

दंष्ट्राकरालवदनः स्फुरद्रक्ताधरोज्वलः ।
रक्तोर्ध्वमूर्धजः श्रीमान् भ्रुकुटीकुटिलेक्षणः ॥

रक्तवृत्तत्रिणयनः शशिपन्नगभूषणः ।
नग्नस्त्रिशूलपाशासिकपालोद्यतपाणिकः ॥

भैरवो भैरवैः सिद्धैर्योगिनीभिश्च संवृतः ।
क्षेत्रे क्षेत्रे समासीनः स्थितो यो रक्षकः सताम् ॥

शिवप्रमाणपरमः शिवसद्भावभावितः ।
शिवाश्रितान्विशेषेण रक्षन् पुत्रानिवौरसान् ॥

सत्कृत्य शिवयोराज्ञां स मे दिशतु मङ्गलम् ।
तालजङ्घादयस्तस्य प्रथमावरणेऽर्चिताः ॥

सत्कृत्य शिवयोराज्ञां चत्वारः समवन्तु माम् ।
भैरवाद्याश्च ये चान्ये समन्तात्तस्य वेष्टिताः ॥

तेऽपि मामनुगृह्णन्तु शिवशासनगौरवात् ।
नारदाद्याश्च मुनयो दिव्या देवैश्च पूजिताः ॥

साध्या नागाश्च ये देवा जनलोकनिवासिनः ।
विनिवृत्ताधिकाराश्च महर्लोकनिवासिनः ॥

सप्तर्षयस्तथा चान्ये वैमानिकगणैः सह ।
सर्वे शिवार्चनरताः शिवाज्ञावशवर्तिनः ॥

शिवयोराज्ञया मह्यं दिशन्तु फलमीप्सितम् ।
गन्धर्वाद्याः पिशाचान्ताश्चतस्रो देवयोनयः ॥

सिद्धा विद्याधराद्याश्च येऽपि चान्ये नभश्चराः।
असुरा राक्षसाश्चैव पातालतलवासिनः॥

अनन्ताद्याश्च नागेन्द्रा वैनतेयादयो द्विजाः।
कूष्माण्डप्रेतवेतालाः ग्रहाः भूतगणाः परे॥

डाकिन्यश्चापि योगिन्यः शाकिन्यश्चापि तादृशाः।
क्षेत्रारामगृहादीनि तीर्थान्यायतनानि च॥

द्वीपाः समुद्रा नद्यश्च नदाश्चान्ये सरांसि च।
गिरयश्च सुमेर्वाद्याः काननानि समन्ततः॥

पशवः पक्षिणो वृक्षाः क्रिमिकीटादयो मृगाः।
भुवनान्यपि सर्वाणि भुवनानामधीश्वराः॥

अण्डान्यावरणैः सार्धं नागाश्च दशदिग्गजाः।
वर्णाः पदानि मन्त्राश्च तत्त्वान्यपि सहाधिपैः॥

ब्रह्माण्डाधारका रुद्रा रुद्राश्चान्ये सशक्तिकाः।
यच्च किञ्चिज्जगत्यस्मिन्दृष्टं चानुमितं श्रुतम्॥

सर्वे कामं प्रयच्छन्तु शिवयोरेव शासनात्।
अथ विद्या परा शैवी पशुपाशविमोचिनी॥

[1] पञ्चार्णसंज्ञिता विद्या पशुविद्या बहिष्कृता।
शास्त्रं च शिवधर्माख्यं धर्माख्यं च तदुत्तरम्॥

शैवाख्यं शिवधर्माख्यं पुराणं श्रुतिसंमितम्।
शैवागमाश्च ये चान्ये कामिकाद्याश्चतुर्विधाः॥

शिवाभ्यामविशेषेण सत्कृत्येह समर्चिताः।
ताभ्यामेव समाज्ञाता ममाभिप्रेतसिद्धये॥

कर्मेदमनुमन्यन्तां सफलं साध्वनुष्ठितम्।
श्वेताद्या नकुलीशान्ताः सशिष्याश्चापि देशिकाः॥

तत्सन्ततीया गुरवो विशेषाद्गुरवो मम।
शैवा माहेश्वराश्चैव ज्ञानकर्मपरायणाः॥

---

[1] पञ्चार्थसं–पा.

कर्मेदमनुमन्यन्तां सफलं साध्वनुष्ठितम्।
लौकिका ब्राह्मणाः सर्वे क्षत्रियाश्च विशः क्रमात्॥

वेदवेदाङ्गतत्त्वज्ञाः सर्वशास्त्रविशारदाः।
साङ्ख्या वैशेषिकाश्चैव योगा नैयायिका नराः॥

सौरा ब्राह्मास्तथा रौद्राः वैष्णवाश्चापरे नराः।
शिष्टाः सर्वे विशिष्टाश्च शिवशासनयन्त्रिताः॥

कर्मेदमनुमन्यन्ता[1]मभिप्रेतार्थसाधकम्।
[2]शैवाः सिद्धान्तमार्गस्थाः शैवाः पाशुपतास्तथा॥

[3]शैवमन्त्रव्रतधराः शैवाः कापालिकाः परे।
शिवाज्ञापालकाः पूज्या ममापि शिवशासनात्॥

सर्वे मामनुगृह्णन्तु शंसन्तु सफलक्रियाः।
दक्षिणज्ञाननिष्ठाश्च दक्षिणोत्तरमार्गगाः॥

अविरोधेन [4]वर्तन्तां मन्त्रश्रेयोऽर्थिनो मम।
नास्तिकाश्च शठाश्चैव कृतघ्नाश्चैव तामसाः॥

पाषण्डाश्चातिपापाश्च वर्तन्तां दूरतो मम।
बहुभिः किं स्तुतैरत्र येऽपि केचिदिहास्तिकाः॥

सर्वे मामनुगृह्णन्तु सन्तः शंसन्तु मङ्गलम्।
नमः शिवाय साम्बाय ससुतायादिहेतवे॥

पञ्चावरणरूपेण प्रपञ्चेनावृताय ते।
इत्युक्त्वा दण्डवद्भूमौ प्रणिपत्य शिवं शिवाम्॥

जपेत्पञ्चाक्षरीं विद्यामष्टोत्तरशतावराम्।
तथैव शक्तिविद्यां च [5]जपित्वा तत्समर्पणम्॥

कृत्वा तं क्षमयित्वेशं पूजाशेषं समापयेत्।
एतत्पुण्यतमं स्तोत्रं शिवयोर्हृदयङ्गमम्॥

सर्वाभीष्टप्रदं साक्षाद्भुक्तिमुक्त्येकसाधकम्।
य इदं कीर्तयेन्नित्यं श‍ृणुयाद्वा समाहितः॥

---

[1] मनुप्रीताश्च साधकाः—पाः. [2] शैवसिद्धान्त. [3] शैवा महाव्रतधराः—पा.
[4] वर्तन्तामत्र श्रोय्योऽर्थिनो. [5] जपित्वात्मसमर्पणम्.

स विधूयाशु पापानि शिवसायुज्यमाप्नुयात् ।
गोघ्नश्चैव कृतघ्नश्च वीरहा भ्रूणहापि वा ॥

शरणागतघाती च मित्रविस्रम्भघातकः ।
दुष्टः पापसमाचारो मातृहा पितृहापि वा ॥

स्तवेनानेन जप्तेन तत्तत्पापात्प्रमुच्यते ।
दुस्स्वप्नादिमहानर्थसूचकेषु भयेषु च ॥

यदि संकीर्तये [1]देतन्न ततोऽनर्थभाग्भवेत् ।
आयुरारोग्यमैश्वर्यं यच्चान्यदपि वाञ्छितम् ॥

स्तोत्रस्यास्य जपे तिष्ठंस्तत्सर्वं लभते नरः ।
असंपूज्य शिवं स्तोत्रजपात्फलमुदाहृतम् ॥

संपूज्य तु जपे तस्य फलं वक्तुं न शक्यते ।
आस्तामियं फलावाप्तिरस्मिन् सङ्कीर्तिते सति ॥

सार्धमम्बिकया देवः श्रुत्वैतद्दिवि तिष्ठति ।
तस्मान्नभसि संपूज्य देवदेवं सहोमया ॥

कृताञ्जलिपुटस्तिष्ठन् स्तोत्रमेतदुदीरयेत् ।

वसद्भिरस्मिंश्चिरभूधरेय
आराधनीयो विधिना द्विजेन्द्रैः ।
केनाम्बया ब्रूहि मम प्रसन्नः
शिवार्चनापुण्यफलं यथावत् ॥

श्रुणु प्रिये वच्मि शिवार्चनायाः
फलं विधिं चाकरणेऽप्यपायम् ।
मन्वादिभिः स्मर्तृभिरीश्वरेण
प्रोक्तानि सङ्गृह्य न विस्तरेण ॥

वेदैश्च किं वाखिलशास्त्रजालैः
किं वा पुराणैः किमथ व्रतैश्च ।
पूज्यः शिवः साम्बशिवः प्रशस्तैः
सर्वोत्तमोऽसावुपदेश एषः ॥

---

[1] देकं न तत्स्थोऽर्थभाग्भवेत्—घ.

व्यापारमन्यं सकलं विहाय
लिङ्गे सदा साम्बशिवोऽनवद्ये ।
पुष्पोपहारैः परिपूजनीयः
फलेक्षुभिश्चारुमुमुक्षुभिर्वा ॥

ये साम्बरुद्रं न समर्चयन्ति
विमोहिताक्षा विषयैरनेकैः ।
शोचन्ति ते मृत्युवशेऽनवद्ये
लग्ना गजेन्द्रा इव कर्दमेषु ॥

सत्यं सदा वच्मि हितं हि वच्मि
सारं पुनर्वच्मि न चार्थवादम् ।
असारसंसार इदं हि सारं
शिवार्चनं लिङ्गवरेऽनवद्ये ॥

एवं सदोच्चैर्लपितं मदीयं
वचो न शृण्वन्ति हि ये विमूढाः ।
तदर्थमेते नरकाग्नयस्तु
सन्धुक्षिता दीप्तशिखा ज्वलन्ति ॥

नाभ्यर्च्य भुञ्जीत शिवं कदापि
प्रोद्वीय तं नैष्कृतिको यदि स्यात् ।
स्नात्वा द्विवारं शिवमर्चयिष्य-
न्नुपोष्य दद्यादपरेद्युरर्थम् ॥

वरं नराणां [1] भरणात्सहस्रा-
द्वरं शिरःकृन्तनमात्मनश्च ।
वरं नचेशार्चनवर्जनं हि
संसारचक्रे भ्रमतोऽनवद्ये ॥

आयुः प्रयाति त्वरितं प्रयाति
सुयौवनं व्याधिरुपैति नृणाम् ।
शीघ्रं जराभ्येति च तावदीशं
समर्चयेदुच्चतरं ब्रवीमि ॥

---

[1] अमरं स्वहस्ताद्–पा. मरणं स्वहस्तादिति स्यात्.

नायाति यावन्मरणं नराणां
नायाति यावच्च जरा हि शीघ्रम् ।
ताम्यन्ति यावन्न च थेन्द्रियाणि
तावच्छिवोऽर्च्यः सहसानवद्ये ॥

भुञ्जीत नेशार्चनमप्यकृत्वा
भुञ्जीत चेत्पापमयं स भुङ्क्ते ।
नराधमोऽसौ मुनिभिः स उक्तः
स नारकी विट्क्रिमिकीटभुक् सः ॥

ईशार्चनावर्जमभोज्यमन्नं
कीटं मलं तत् कुणपं वदन्ति ।
बहिष्कृतः सर्वजनैश्च पापी
घोरान् प्रयायान्नरकान् समस्तान् ॥

वह्निप्रवेशो वरमुग्रशस्त्रै-
र्वधो वरं साधु मलस्य भुक्तिः ।
नेशार्चनाया विरतिर्वरिष्ठा
संसारचक्रे भ्रमतोऽनवद्ये ॥

असारसंसारवनान्तराले
त्रितापधर्मे भ्रमतो जनस्य ।
शिवार्चनाकल्पलता पुरस्ता-
त्संसारसन्तापहरी न चान्या ॥

इष्टापूर्तिविमोहितो यदि शिवं साम्बं न चाभ्यर्चये-
द्योनीनां बहुकोटिमेति विविधाद्दुःखाद्बहिर्निस्सरेत् ।
निर्दारद्रविणो निरन्नजठरो निःक्षत्रदासीपशु-
भ्रान्तश्चित्तविपर्ययेण चरति क्ष्मामण्डलं काकवत् ॥

भक्त्या यः शिवमर्चयेदनुदिनं लिङ्गे मखानां फलं
दानानां तपसां त्रिविष्टपमहातीर्थाप्लुतीनां फलम् ।
पापान्याशु विनाश्य शंकरगणश्रेष्ठ्यं समेष्यत्यसौ
विज्ञानात्परिहृत्य मोहमखिलं ज्ञानी परं गच्छति ॥

परमित्यों सत्यम् ॥

## शिवपूजामाहात्म्यम्

[1]अतः परं प्रवक्ष्यामि पूजामाहात्म्यमीशितुः ।
यच्छ्रुत्वा मनुजः सद्यो मुक्तिपारं गमिष्यति ॥
पूर्वकल्पे महादेवः संहारान्ते जगत्पतिः ।
संहृत्य सकलं विश्वं स्वात्मनोऽव्यतिरेकि यत् ॥
शक्त्या तु परया विप्रा नृत्यत्येको निशां स्वकाम् ।
शर्वर्यन्ते यथापूर्वं सृजेयमिति शङ्कया ॥
प्रज्ञा तस्मादभूच्छंभोः पुराणी मुनिसत्तमाः ।
अध्वनः षड्यथापूर्वमण्डान्यपि च लीलया ॥
संकल्पमात्रेण तदा [2]त्वेककालं [3]तथा पुनः ।
तिस्रो मूर्तीः स्वात्मनैव सृष्टिस्थित्यन्तहेतवे ॥
अप्राकृतवपुः श्रीमान् रुद्रानपि गणानपि ।
देवांश्च ऋषिभिः सार्धं पितॄनपि नरानपि ॥
अन्यच्च जगतां नाथः स्थावरं जङ्गमं जगत् ।
रुद्रान् रुद्रगणांश्चैव प्रमथान् प्रमथाधिपान् ॥
भूतानि भूतपैरेव देवासुरमहोरगान् ।
ऋषीन् पितृगणान् देवो लीलया सकलं जगत् ॥
उच्चावचानि भूतानि तया शक्त्या जगत्पतिः ।
विष्णुदेवमहर्षीणां केषाञ्चिदधिकारिणाम् ॥
वेदागमपुराणानि शास्त्राणि विविधान्यपि ।
अध्यापयामास गुरुः स्थितान्यात्मनि लीलया ॥
शशास तान्पुनर्देवो विष्ण्वादीनमरप्रभुः ।
मां पूजयत वै देवा भक्त्या भावपुरस्परम् ॥
भावानुरूपफलदः प्रतिज्ञा या मया कृता ।
ततोऽधिकारान् युष्माकं कल्पयामि हरे विधे ॥
ततः साञ्जलिहस्तास्ते प्रणम्य शिवमूचिरे ।
परिपूर्णोऽसि भगवान् पुरुहूतः पुरुष्टुतः ॥

---

[1] शं—सं—उप—६१.  [2] ससर्ज सकलं शिवः  [3] शिवः पुनः—पा.

श्रुतो वेदागमेष्वीश कथं पूज्योऽसि नो वद।
केनाकारेण वै सर्वैः सर्वरूपी स्मृतः प्रभो॥

विश्वरूपाय वै देव वेदो वदति भो नमः।
वयं कं विग्रहं तेषु केन संपूज्य शङ्कर॥

भवाम ते प्रसादस्य पात्रभूता जगत्पते।

ईश्वरः—

यस्यां कस्यां च वै मूर्तौ पूजितोऽप्यहमादरात्॥

प्रसन्नो वाञ्छितं दद्यां यस्य कस्यापि वा सुराः।
किं तु लिङ्गार्चकानां तु शीघ्रमेवास्म्यभीष्टदः॥

लिङ्गमूर्तौ सदाकालं विना मन्त्रादिसन्क्रियाम्।
प्रसन्नो निवसाम्येव भक्तिभाजां विमुक्तये॥

देवाः—

किं लिङ्गं भवताऽऽख्यातं केन लिङ्गी त्वमव्यय।
कथं वा लिङ्गसंज्ञास्य वद विस्तरतो विभो॥

ईश्वरः—

अव्यक्तं लिङ्गमाख्यातमनन्तमजरं ध्रुवम्।
गुणत्रयं तदेवाहं सृजत्यवति हन्ति च॥

तदेव मम लिङ्गं तु तस्य लिङ्गं चतुर्विधम्।
परो बिन्दुः परो नादस्त्वपरौ बिन्दुनादकौ॥

उपर्यधोभागनिष्ठाश्चत्वारोऽपि मुनीश्वराः।
अपरो [1]बिन्दुरादौ स्यात्तदूर्ध्वमपरो ध्वनिः॥

तदूर्ध्वं परबिन्दुः स्यात्परनादस्तदूर्ध्वकः।
प्रणवो वेदिरस्यायं नादो लिङ्गाकृतिः सुराः॥

बिन्दुनादमये तस्मिन् लिङ्गे सन्निहितस्तथा।
तस्माल्लिङ्गार्चकानां तु सद्यः प्रीतोऽस्म्यभीष्टदः॥

---

[1] बिन्दुनादोऽस्य तदू, बिन्दुनादः स्यात्तदू.

तस्मिन् लिङ्गे त्वहं पूर्णकलया सर्वदा सुराः ।
जगच्च सकलं तस्मिन् तिले तैलमिव स्थितम् ॥

प्रलये लीनमत्रैव सृष्टौ सृष्टं च तेन तत् ।
तत्स्वरूपं पुनर्लोके [1]लिङ्गं वेद्यात्मकं विदुः ॥

तस्मा[2]त्सवेदिके लिङ्गे लिङ्गयहं संस्थितः सदा ।
सवेदिकमिदं लिङ्गं रत्नकाञ्चनराजतैः ॥

शिलाभिर्दारुभिर्मृद्भिर्गन्धपारदपूर्वकैः ।
सलक्षणं विधायैव पूजयध्वमतन्द्रिताः ॥

वेदागमोक्तविधिना सार्वकालमतन्द्रिताः ।
पूजां कुर्वन्ति ये नित्यं [3]मुक्तिभाजो भवन्ति ते ॥

दानानि वहवो यज्ञास्तपांसीन्द्रियनिग्रहः ।
सर्वं लिङ्गार्चनस्यैव कोट्यंशेनापि नो समाः ॥

तस्माल्लिङ्गार्चकानां तु नैव जन्म न संसृतिः ।
तस्यां तु लिमूर्तौ मां सदाशिववपुर्धरम् ॥

भावपूतेन मनसा पूजयन्तु जगत्त्रये ।
ब्रह्माण्डेषु च सर्वत्र तत्र तत्राप्यहं सुराः ॥

लिङ्गमूर्तिमधिष्ठाय पूज्यो वेदोक्तवर्त्मना ।

### लिङ्गस्थानानि

केदारे च तथा काश्यां श्रीगिरौ सर्वसिद्धिदे ॥

श्रीमद्दक्षिणकैलासे वटारण्ये महत्तरे ।
काञ्चीपुरेऽरुणाद्रौ च श्रीमद्वृद्धाचले तथा ॥

चिदम्बरे कुम्भकोणे मध्यार्जुनमहालये ।
ममात्यन्तमनोऽभीष्टवसतौ कमलालये ॥

हालास्ये च महास्थाने सेतौ रामेश्वराभिधे ।
स्थानेषु चैवमाद्येषु प्रत्यण्डं लिङ्गरूप्यहम् ॥

---

[1] लिङ्गवेद्या. [2] त्सर्वाधिके. [3] भुक्तिमुक्ती भजन्ति ते.

निवसामि सदाकालमुमया सह हे सुराः ।
तस्मान्मां लिङ्गमूर्तिस्थं पूजयत्वखिलं जगत् ॥

यूयं चेत्यभिधायैव तिरोभूज्जगतां पतिः ।
तत्र तत्राण्डदेशेषु पुरुहूतः पुरुष्टुतः ॥

पूज्यमानः सदा सर्वैः पञ्चकृत्यरतः सदा ।
चिक्रीड गणपैः साकं देवीस्कन्दविनायकैः ॥

कैलासे च तथा तत्र महाकैलासपर्वते ।
मन्दरे च महामेरौ चक्रवालगिरौ तथा ॥

शिवलोके च सान्निध्यं तत्र तत्राप्यनुग्रहम् ।
कुर्वन् सर्वात्मनामीशः स्थितः स्थाणुर्जगन्मयः ॥

ततो विष्णुमुखा देवा ऋषयश्च तपोधनाः ।
स्वस्वाभीष्टप्रसिध्यर्थं कृत्वा लिङ्गं सवेदिकम् ॥

स्थानेषु च नदीतीरे पर्वताग्रेषु सादरम् ।
उपचारैः समभ्यर्च्य षोडशैरुमया शिवम् ॥

पदं प्रापुर्यथार्हं ते प्रसन्नादीश्वरेश्वरात् ।

ऋषयः---(शं. सं उप-६२.)

येषु स्थानेषु देवेशमारराधुः सुरर्षयः ।
विविच्य वद विस्तारात्सूत नो निखिलं क्रमात् ॥

सूतः—

शृणुध्वमृषयः सर्वं क्रमशो वच्मि भूसुराः ।
तदा विष्णुरमेयात्मा शङ्करप्रियकिङ्करः ॥

काशीं प्राप्याविमुक्ताख्यां [1]नैकवर्षायुतं ततः ।
कुर्वंस्तपो महाघोरं लिङ्गमूर्तिं सदाशिवम् ॥

भक्त्या संपूज्य देवेशात् प्राप्तवान्वरमुत्तमम् ।
(प्रसन्नात्पार्वतीशानाद्वैष्णवं पदमुत्तमम् ॥)

---

[1] अनेकवपुषा युताम्.

सर्वरक्षाधिकारित्वे चाभिषिक्तो यथाविधि ।
शङ्खचक्रगदाखड्गशार्ङ्गाद्यान्यायुधान्यपि ॥

महालक्ष्मीपतित्वं च पीतमम्बरमद्भुतम् ।
रथं पत्ररथाधीशं ददौ सर्वं सदाशिवः ॥

जगद्रक्षेति चाज्ञप्तो देवदेवेन शूलिना ।
[1] तदादि च तथा विष्णुः शिवलोकादधःस्थिते ॥

लोके स्थितो ररक्षासौ जगत्त्रयमतन्द्रितः ।
छत्रं रत्नमयं तद्वच्चामरे मणिदण्डके ॥
( बिभ्रतीभिः सुरस्त्रीभिः सेव्यमानस्तु पार्श्वतः ।)

यत्रोवास (यमुवास) महाविष्णुर्विष्णुलोकः स्मृतस्तु सः ।
सेव्यमानस्तु तत्रैव ब्रह्माद्यैः सुरयोगिभिः ॥

दुष्टानां निग्रहं कुर्वञ्छिष्टानामपि रक्षणम् ।
महदैश्वर्यसंपन्नो न्यवसत्कमलापतिः ॥

काञ्चीस्थानमनुप्राप्य ब्रह्मा सम्पूज्य शूलिनम् ।
शैले लिङ्गेऽभिषिच्येशं वरं प्राप सुदुर्लभम् ॥

अधिकारं च वै सृष्टेरभिषेकपुरस्सरम् ।
सरस्वतीपतित्वं च लेभे हंसं च वाहनम् ॥

छत्रं चन्द्रसमं शुभ्रं चामरद्वयमेव च ।
विष्णुलोकादधोभागे देवर्षिगणपूजितः ॥

उवास लोकं यमयं महता वैभवेन वै ।
ब्रह्मलोकः स विख्यातो नाम्ना तस्यैव सुव्रताः ॥

इति लेभे वरं शंभोर्ब्रह्मा लिङ्गार्चनाबलात् ।
इन्द्रः श्रीपर्वतं प्राप्य पूजयामास भावतः ॥

भवं भवानीसहितं प्रसाद्याप वरान् बहून् ।
स्वर्गाधिपत्यं देवानामाधिपत्याभिषेकतः ॥

पुलोमजापतित्वं च गजमैरावताभिधम् ।
उच्चैःश्रवसमश्वेशं वज्रं चायुधमद्भुतम् ॥

---

[1] तथास्थित सदा विष्णुः—पा.

द्रुमांश्च कल्पकान् धेनूः कामदाश्च महायशाः ।
चिन्तामणिं तथा रत्नमूर्वश्याद्यप्सरस्स्त्रियः ॥

प्राचीदिशाधिपत्यं च प्रसन्नादाप शङ्करात् ।
तथैव स्वर्गलोकस्थो भुञ्जन् दिव्यसुखं मुहुः ॥

अमृतास्वादनं कुर्वन् तिष्ठत्यद्यापि वज्रभृत् ।
अरुणाद्रौ तथा वह्निरभिषिच्य सदाशिवम् ॥

अनेकविभवैः सार्धं संपूज्याप वरानयम् ।
अग्नीनामाधिपत्यं च दक्षिणाप्राच्यधीशताम् ॥

कृताभिषेको देवेन छागं वाहनमुत्तमम् ।
आयुधानि च शक्त्यादि स्वाहां च दयितां शुभाम् ॥

तथैवेशाज्ञया ह्येष दक्षिणाप्राग्दिगीश्वरः ।
अग्नीनामधिपो ह्येष तिष्ठत्येवाग्निरद्भुतः ॥

केदाराख्ये महाक्षेत्रे यमोऽपि यमिनां वरः ।
प्रसाद्य देवदेवेशं प्रापानेकानयं वरान् ॥

दक्षिणाशापतित्वं च महिषं वाहनोत्तमम् ।
कालदण्डाद्यायुधानि सर्वेषामात्मनां पुनः ॥

समवर्तितया नीत्वा पुण्यापुण्ये विचार्य च ।
पुण्येन स्वर्गतिं तेषां पापेन नरकस्थितिम् ॥

यातनाश्चापि नरके तत्तत्पापानुरूपतः ।
सभ्यानपि महाभागान्मध्यस्थान्महितौजसः ॥

चित्रगुप्तं च कायस्थं चकारास्य शिवः स्वयम् ।
तदादि धर्मराड् भोगी संयमिन्यां शिवाज्ञया ॥

अनुभूयामितां लक्ष्मीमास्तेऽद्यापि प्रतापवान् ।
गोकर्णे च शिवस्थाने निरृतिः परमेश्वरम् ॥

समभ्यर्च्य ततः प्राप प्रसन्नाज्जगतीपतेः ।
दक्षिणापरदिक्पालभावं च विधिपूर्वकम् ॥

यजतां फलदातृत्वं खड्गं चाप्यायुधोत्तमम् ।
अभिषिक्तश्चाधिपत्ये रक्षसामपि सर्वशः ॥

अद्याप्यनुभवन्नास्ते दत्तां देवेन सम्पदम् ।
जम्बवारण्ये समभ्यर्च्य प्रचेताः परमेश्वरम् ॥

प्रापार्णवाधिपत्यं च यादसामप्यपामपि ।
वाहनं चापि मकरमभिषेकपुरस्सरम् ॥

पश्चिमाशापतित्वं च पाशाद्यैरायुधैः समं ।
तथैव लब्धा तत्सर्वं महता प्राभवेन सः ॥

वर्ततेऽद्यापि सन्तुष्टो महातेजाः प्रतापवान् ।
वायुर्दक्षिणकैलासे कालहस्तिमहापुरे ॥

समभ्यर्च्य महादेवमुपचारैरनन्यधीः ।
वरमाप महेशानात्प्रसन्नादीश्वरेश्वरात् ॥

पश्चिमोत्तरदिक्स्वाम्ये चाभिषिक्तः प्रतापवान् ।
वायूनामाधिपत्यं च ध्वजाद्यायुधपूर्वकैः ॥

मृगं च वाहनं लेभे सोऽद्याप्यप्रतिमो भुवि ।
सिद्धेश्वराभिधे सिद्धवटे संपूज्य शङ्करम् ॥

कुबेरः परया भक्त्या वरानाप महेश्वरात् ।
उत्तराशापतित्वे च पट्टबद्धो बभूव च ॥

निधीनां च नवानां च पतित्वं चापि पुष्पकम् ।
विमानमपि देवेशाद्यक्षेशत्वं च [1]वाहनम् ॥

महाप्रतापसंयुक्तो वर्ततेऽद्यापि तत्सखा ।
ईशानोऽपि महादेवं कमलालयवासिनम् ॥

संपूज्य पत्रपुष्पाद्यैरुपचारैरनेकधा ।
प्रसन्नेन तदा पृष्टः कापेक्षेति पिनाकिना ॥

प्रणम्य वरयामास वरानग्रयाननन्यधीः ।
समानानि च नामानि समानवपुरायुधम् ॥

समानपपि तच्चिह्नं यद्यदस्ति शिवस्य तु ।
वृषं च वाहनं तद्वत्प्रागुदीच्या दिशः पतिः ॥

---

[1] शाश्वतम्.

एतत्सर्वमसौ लेभे संप्रार्थ्येशं स्वयं वशी।
अन्तेऽधिकारस्य पुनः सायुज्यं परमेश्वरः॥

दत्वान्तर्धानमापेशः सोऽप्यद्यापि प्रतापवान्।
काञ्च्यामेव पुरा सूर्यः कमलैरीश्वरेश्वरम्॥

अभ्यर्च्यानन्यया भक्त्या प्रसन्नादाप्तवान् वरम्।
ऋग्यजुस्सामवेदानां मण्डले वसतिं सदा॥

तदर्हं च रथं लेभे सप्ताश्वपरिमण्डितम्।
ग्रहाणामाधिपत्यं च ज्योतिश्चक्रं च सर्वतः॥

कृताभिषेको देवेन दिनानामधिपोऽभवत्।
कुम्भकोणमनुप्राप्य चन्द्रः शङ्करवल्लभः॥

भक्त्याभ्यर्च्य महादेवं तत्र मुक्तामयैः शुभैः।
वरमाप शिवात्प्रीतान्नक्षत्रेशत्वमद्भुतम्॥

हिमांशुत्वं द्विजेशत्वमोषधीशत्वमेव च।
विभूषणत्वमीशस्य सुदुर्लभमवाप सः॥

प्रत्यहं तावुभौ मेरोः प्रदक्षिणपरौ [1]मुदा।
शिवावासस्य सततं ग्रहैरन्यैः शिवप्रियैः॥

भौमो बुधो गुरुः शुक्रो शनिश्चैते च पञ्च च।
मध्यार्जुने च हालास्ये सेतौ [2]वटवने मुदा॥

वेदारण्ये च पञ्चैते पञ्चस्वपि पिनाकिनम्।
प्रसाद्य परया भक्त्या प्रसन्नादपरे वरान्॥

ऊर्ध्वं मण्डलतः सोमसूर्ययोरुपरि स्थितिम्॥
आधिपत्यं च सुमहल्लोकानां सुखदुःखयोः।

सर्वैरपि च पूज्यत्वं सर्वोपद्रवशान्तये॥
देवासुराणामाचार्यौ गुरुशुक्रौ कृतौ तदा॥

ईश्वरेणैव देवेन प्रसन्नेन मुनीश्वराः।
सप्तापि ऋषयः पूर्वं देवदेवं सभापतिम्॥

---

[1] सदा. [2] श्वेतवने.

चिदम्बरे समभ्यर्च्य मध्येदभ्रं सदः प्रभुम् ।
अवापुर्वरमीशानाद्ब्रह्माणामुपरि स्थितिम् ॥
पुनर्देहान्तरे मुक्तिं मुमुक्षुः प्राप्यते परम् ।
सर्वशास्त्रार्थविज्ञानकुशलाश्च तदाज्ञया ॥
वसिष्ठाद्या महात्मानस्ते[1]ऽद्यापि महितौजसः ।

सूतः—(शं. सं. उप–६३).

ध्रुव औत्तानपादिस्तु काश्यां विश्वेश्वरं शिवम् ॥
समभ्यर्च्य महेशानात्प्रसन्नादाप्तवान् वरम् ।
नक्षत्रमुनिमुख्यानां मण्डलोर्ध्वस्थितिं पराम् ॥
मेधीभूतो ग्रहाणां च भ्रामयन्नेव तान् मुदा ।
सर्वोपरि कृतावासस्तिष्ठत्यद्याप्यसंभ्रमन् ॥
कुम्भकोणे पुरा शेषः सर्वेषां भोगिनां वरः ।
प्रसाद्य देवदेवेशं भुवो भारं बभार वै ॥
महाप्रतापसंयुक्तो वहतेऽद्याप्ययं धराम् ।
एवं स्थानेषु सर्वेषु भूम्यां पर्वतमूर्धनि ॥
नदीनां चैव तीरेषु देवाश्च मुनयोऽसुराः ।
सिद्धाश्च गरुडा यक्षा विद्याधरमहोरगाः ॥
किन्नराश्च मुनिश्रेष्ठास्तथा किंपुरुषादयः ।
मनुष्याश्च महादेवं भक्त्याराध्य सदाशिवम् ॥
स्वं स्वं पदमनुप्राप्य सुखिनो मुदमापिरे ।
नागानां गरुडानां च गन्धर्वोरगरक्षसाम् ॥
किन्नराणां मनुष्याणां किंपुरुषाणां च सर्वशः ।
प्रापुरीश्वरात्ते ते स्वाधिपत्यमकुण्ठितम् ॥
मेघानामधिपाश्चान्ये दिग्गजा ये च केचन ।
अष्टौ च ये महानागाः सप्तापि च महीधराः ॥
ये येऽधिपाः स्थिता येषां ते ते देवप्रसादतः ।
लब्धाधिपत्या विज्ञेया नान्यथा मुनिसत्तमाः ॥

[1] स्ते बभूवुर्महौजसः.

तस्माच्छ्रेयोऽर्थिभिः सर्वैः स्वात्मनो मनुजोत्तमैः ।
शिवपूजा सदा कार्या भुक्तिमुक्तिफलप्रदा ॥

शिवपूजाप्रभावेन केचित्सिद्धा बभूविरे ।
नवापि सिद्धा विख्याता योगिनः कपिलादयः ॥

अनेके लोककर्तारो ह्यनेके नित्यतां गताः ।
शिवलोकं ययुः केचित्सालोक्यमपरे जनाः ॥

सामीप्यमपि सारूप्यं सायुज्यमपि सूरयः ।
देवासुरमनुष्येषु शिवपूजाप्रभावतः ॥

अधिकैश्वर्यसंपन्ना विख्याता भुवनत्रये ।
केचिदैश्वर्यलाभेन [1] मुक्ता मोहवशं गताः ।

भ्रष्टाः पुनश्च [2] संसाराच्छिवं पूर्ववदापिरे ।
जयार्थिनश्च बहवः समभ्यर्च्य जगत्पतिम् ॥

विजित्य शत्रून् सङ्ग्रामे शशासुः पृथिवीं पुनः ।
बलार्थिनोऽपि बहवो बलं सुबहु लेभिरे ॥

पुत्रान् पुत्रार्थिनोऽन्येऽपि दारानपि मनोहरान् ।
पशुकामाः पशूनश्वानश्वकामाश्च लेभिरे ॥

सौभाग्यं कान्तिमद्रूपं त्यागं सत्यं पराक्रमम् ।
प्रसिद्धिं च जगत्यस्मिन् सर्वमिष्टं च लेभिरे ॥

अर्थेष्वेतेष्वनेकेषु सेतिहासेषु काश्चन ।
सङ्ग्रहेण [3] महाभागा वर्ण्यन्ते श्रुणुताधुना ॥

सूतः—(शं.सं.उ.-64)

विष्णुः पुरा पुरारातिमाराध्य पुरुषं परम् ।
ऋषिशापसमुद्भूतविनिपातानने कशः ॥

निर्धूयाभीष्टपुत्रस्त्रीराज्यलाभमवाप्तवान् ।
तेषु कांश्चिदितीहासान् महापुण्यान् वदामि वः ॥

---

[1] मत्ता मदवशं. [2] संसारं यथापूर्वं तथापिरे. [3] कथाभागाः.

## (ज्वालालिङ्गोद्भवः) भैरवरक्तभिक्षा

सूतः—

एकदा कलहे वृत्ते ब्रह्मविष्ण्वोः परस्परम् ।
कर्ताहं जगतां न त्वमहं न त्वमिति क्रुधा ॥
तयोरहंकृतेः शान्तिं कुर्वन् सर्वेश्वरेश्वरेश्वरः ।
उत्पाद्य भैरवं तेन मण्डलस्थं स्वयं रवेः ॥
नखाग्रेण विधेस्तस्य पञ्चमं मूर्ध्वमूर्ध्वगम् ।
उर्वारुकफलं यद्वत्कोमलं लीलयेश्वरः ॥
संछिद्य तत्कपालेन भैरवेण धृतेन च ।
विष्णोरहंकृतेः शातिं रक्तभिक्षाच्छलेन वै ॥
विनोदयिष्यन् भिक्षार्थं प्रेरयामास भैरवम् ।
[1]विष्णुः सिरां ललाटाग्राच्छित्वा रक्तं निजं ददौ ।
रक्तस्य विरहान्मूर्छामवाप पुरुषोत्तमः ।
पुनश्च भैरवेन्द्रस्य करस्पर्शेन [2] निर्व्यथः ॥
मूर्छां विहाय सहसा लब्धसंज्ञः पुनर्हरिः ।
अहङ्कारः कृतोऽस्माभिः शासितास्तेन वै वयम् ॥
तत्पापविनिवृत्त्यर्थं शिवपूजां प्रकुर्महे ।
मध्यार्जुनं समासाद्य समभ्यर्च्य जगद्गुरुम् ॥
मेने कृतार्थमात्मानं पूतं सर्वेश्वरार्चनात् ।
कृपया देवदेवस्य प्रसन्नस्य पिनाकिनः ॥
विष्णुर्लोकं यथापूर्वं जगाम गरुडेन सः ।
पुनरप्येकादा विष्णुरहङ्कारमदोद्धतः ॥
ब्रह्मणा स्पर्धमानोऽसावीश्वरोऽहमिति क्रुधा ।
महालिङ्गाकृतेर्मूलमदृष्ट्वा पुनरुत्थितः ॥
[3] प्रणम्य स च देवानामशृण्वन् वचनं हितम् ।
तत्पापविनिवृत्त्यर्थमरुणाचलमाश्रितः ॥

---

[1]विष्णुश्छित्वा ललाटाग्रं स्थित्वा रक्तं. [2]निर्वृतः. [3]प्रणवस्य च वेदानामशृण्वन्. पुराणपाठः.

तत्रेश्वरं समाराध्य प्रसादेनास्य वै विभोः।
अपराधविमुक्तात्मा जगाम भवनं स्वकम् ॥

## भृगुशापविमोचनम्

[1]पुनश्चाप्यकारोद्विष्णुरेकदासुरनिग्रहम्।
पराजये तु देवानां देवासुरमहाहवे ॥

तदानीं तुमुले युद्धे विष्णुना सूदिता भृशम्।
भृग्वाश्रमं समासाद्य भृगुपत्नीं तपस्विनीम् ॥

[2]ख्यातिं च शरणं प्रापुरसुरा हरितर्जिताः।
तदाश्रममपि प्राप विष्णुश्चक्रधरः स्वयम् ॥

संहरन्नसुरांस्तत्र भृगुपत्न्या निवारितः।
नैवाश्रमः प्रवेष्टव्यस्त्वयाऽसन्निहिते मुनौ ॥

न हन्तव्या न हन्तव्या दितिजा मदुपासकाः।
मया दत्ताभयाः सर्वे मा मा हिंसीर्जनार्दन।

[3]दृष्ट्वैनां संभ्रमाविष्टो जगतामिति हि क्रुधा।
चक्रेण संहरन् दैत्यांश्चिच्छेद च शिरस्तदा ॥

तेषामभयदात्र्याश्च भृगुपत्न्यास्तथा जनार्दनः।
निर्गते च ततस्तस्मादाश्रमान्मधुसूदने ॥

ददर्श भृगुरभ्येत्य दैत्यैः सह निजां प्रियाम्।
निकृत्तशिरसं ज्ञानदृष्ट्या विज्ञाय माधवम् ॥

चुक्रोध हरयेऽत्यर्थं हन्त्रे दैत्यैः स्त्रिया अपि।
अशपद्विष्णुमवनौ जन्मान्यस्यास्तु कोटिशः ॥

तत्र तत्र स्त्रिया चापि वियोगोऽस्त्वतिदुःखदः।
जगत्यस्यैव ये भक्ताः सन्तु पाषण्डिनस्तु ते ॥

शप्त्वैवमात्मनः पत्नीं सन्धायोज्जीव्य विद्यया।
मृतसंजीविनीत्येव सिद्धया परमेश्वरात् ॥

---

[1] पुनश्च भगवान् विष्णुः. [2] ख्यातिं शरणमासेदुः. [3] दुष्टानामभयोऽनिष्टो.

ततो विष्णुः समाकर्ण्य भीतभीतोऽसुरार्दनः ।
तच्छापविनिवृत्त्यर्थं काञ्चीमभ्येत्य कामदाम् ॥

संपूज्य देवदेवेशं दृष्ट्वा देवं वृषोपरि ।
प्रणम्य प्रार्थयच्छापमोक्षं भीतेन चेतसा ॥

मद्भक्तैर्यत्कृतं विष्णो तैः कर्तव्यं तदन्यथा ।
अहं न पारयाम्येव प्रतिज्ञैषा मया कृता ॥

इति केशवमाभाष्य हरिकेशः स्मयन्निव ।
भृगुमाह महादेवः स्मृतिमात्रागतं मुनिम् ॥

विमोचय हरिं शापाद्भृगो बहुजनिप्रदात् ।
मदर्चनारतं विद्धि भक्तं च मुनिसत्तम ॥

दशास्तु जन्म तद्विष्णोरेकस्मिंस्तत्र जन्मनि ।
स्त्रिया वियुक्तोऽतिचिरं दुःखी भवतु नान्यतः ॥

मदाज्ञया कुरुष्वैवं मद्भक्तानां त्वमग्रणीः ।
तथास्त्विति मुनिः प्राह प्रणम्य परमेश्वरम् ॥

तदा पुनरुमाकान्तं रमाकान्तः प्रणम्य तम् ।
प्रार्थयामास भगवन् दशस्वपि च जन्मसु ॥

ममाज्ञाननिवृत्त्यर्थं निग्रहानुग्रहौ कुरु ।
त्वमेव देवदेवेश दयालो भक्तवत्सल ॥

तदुपश्रुत्य भगवानस्त्वित्यन्तर्धिमाययौ ।
नारायणोऽपि भगवान् स्वमेवाश्रममाश्रयत् ॥

### मत्स्यावतारनिग्रहः

पुनश्चाप्येकदा विष्णुर्वेदोद्धरणकर्मणे ।
शाफरीं योनिमासाद्य संहरिष्यन् स तस्करम् ॥

वेदानां सोमकं दैत्यं विनिगृह्य च लीलया ।
वेदांश्च वेधसे दत्वा यथापूर्वं जनार्दनः ॥

अहङ्कारेण तेनैव चार्णवानां च भेदनम् ।
कुर्वन् सर्वान् समाकृष्य भक्षयामास माधवः ॥

ततो भीता विरिञ्चाद्याः शङ्करं लोकशंकरम्।
कैलासवासिनं देवं प्रीणयित्वा व्यजिज्ञपन्॥

देवेनापि समादिष्टः शास्ता योगी तदाज्ञया।
कैवर्ततां समासाद्य माधवं मत्स्यरूपिणम्॥

विनिगृह्याक्षियुगलं कुरुविन्दमणिप्रभम्।
नखाग्रेण समादाय शिवाग्रे विनिवेदयन्॥

निधायैतन्नमस्कृत्य तस्थौ योगी कृताञ्जलिः।
तदा ब्रह्मादयो देवा महादेवं समर्चयन्॥

वयं मत्स्येन [1]घोरेण पीडिता भृशमीश्वर।
सोऽयं विनिगृहीतश्च जगतां हितकाम्यया॥

तस्यास्याक्षियुगं त्वेतत्तवास्त्वाभरणे मणिः।
इति संप्रार्थितो देवैस्तदक्षियुगलं मणिम्॥

दधार रुण्डमालायां दयानिधिरुमासखः।
गतमोहः पुनर्विष्णुर्ध्यात्वा देवं जनार्दनः॥

शिवपूजाप्रभावेन पूर्वं सोमकमर्दयन्।
मोहेनैव ततः पश्चाज्जगन्ति तमसावृतः॥

शासितोऽस्मि जगद्धात्रा कृतार्थोऽस्मि ततः कृतः।
एतदागोनिवृत्त्यर्थं पूजयिष्यामि शङ्करम्॥

इति काञ्चीपुरीं प्राप्य पूजयामास तत्र तम्।
मत्स्यरूपाय वै तस्मै प्रससाद पिनाकधृत्॥

वरेण च्छन्दयामास मत्स्यरूपं जगत्पतिः।
वृतो वरश्च तेनापि निग्रहोऽयमनुग्रहः॥

ममास्तु देव कृपया मत्स्यरूपं तु मां द्विजाः।
ये यजन्ति जगत्यस्मिन् तेषामिष्टप्रदो भव॥

कृपया तव देवेश वरदोऽस्मि महेश्वर।

---

[1] देवेश पीडिता.

मयाचरितमागस्त्वं तितिक्षुर्जगदीश्वर।
इतीशोऽभ्यर्थितः पूर्वं विष्णुना मत्स्यरूपिणा॥

दत्वान्तर्धानमगमल्लोकानां हितकाम्यया।
विष्णुश्च वैष्णवं [1]लोकमासाद्यापालयत्स्वकम्।

## कूर्मावतारनिग्रहः

पुनश्च विष्णुरन्यस्मिन् युगे कूर्मत्वमेत्य वै।
[2]मन्थानं मन्दरं कृत्वा योक्त्रं कृत्वाथ वासुकिम्॥

देवासुरगणैः साकं ममन्थ क्षीरसागरम्।
अमृतं च समासाद्य तेन गर्वेण मोहितः॥

सुरान् संक्षोभयामास सागरैः सह कच्छपः।
ततो देवासुराः सर्वे [3]देवं गत्वा व्यजिज्ञपन्॥

तदानीं देवदेवोऽसौ विघ्नराजमरिन्दमम्।
तन्निग्रहार्थमाचष्ट देवानां हितकाम्यया॥

शुण्डाग्रेण तदा कूर्ममादाय गणनायकः।
सम्यगुत्तानितं कृत्वा संपीड्या[4]स्यैव कर्परम्॥

देवेष्वपि च पश्यत्सु शिवाग्रे स न्यवेशयत्।
तदानीमीश्वरो देवान् समालोक्येदमब्रवीत्॥

अनेन कच्छपास्थ्ना मे किं भावि वदताधुना।
ततोऽब्रुवन् प्रणम्येशं ब्रह्मादिविबुधेश्वराः॥

अरक्षस्त्वमनेनास्मान्विक्रमेण यदीश्वर।
तदस्यैव ज्ञापकत्वेन तवाङ्गेऽस्तु विभूषणम्॥

कूर्मास्थि मुण्डमालायां नायकत्वमुपैत्विदम्।
विष्णोरपीदं दृष्ट्वा तु नाहङ्कारो भवेत्पुनः॥

विज्ञापितः सुरैरेवं [5]विश्वेशोऽधात्तदास्थि तत्।

---

[1] रूपमा. [2] वैशाखं. [3] देवायेदं. [4] ड्याश्चेव कर्दमम्. [5] दधारैव तदास्थि तत्.

विष्णुश्च गतसंमोहो विश्वेशार्चाविधेर्बलात् ।
अनागाः संबभूवाथ स नाकपतिवन्दितः ॥

## वराहावतारनिग्रहः

एकदा पीडिता देवा हिरण्याक्षेण वैरिणा ।
विष्णुं शरणमभ्येत्य समाचख्युस्ततो भयम् ॥
दत्वा तु तेषामभयमसुरारिः सुराग्रणीः ।
वाराहं रूपमासाद्य ब्रह्मनासापुटाग्रतः ॥
हिरण्याक्षमसौ हत्वा मग्नामभ्युज्जहार गाम् ।
तेन गर्वेण स हरिरर्णवानां च भेदनम् ॥
सप्तानां भूधराणां च चकार सुमहद्वपुः ।
दृष्ट्वा तत्तादृशं विष्णुं देवाः सब्रह्मकास्तदा ॥
व्यजिज्ञपन्महेशाय वराहाद्भयमागतम् ।
ततो देवादिदेवोऽपि वराहस्यास्य निग्रहे ॥
सन्दिदेशात्मनः पुत्रं सुब्रह्मण्यं शिशुं प्रभुः ।
तदाज्ञया कुमारोऽपि वराहं पर्वताकृतिम् ॥
जग्राह शृङ्गे हस्ताभ्यां परिभ्राम्य च लीलया ।
संहृत्य शृङ्गमस्यैकं निदधे सन्निधौ विभोः ॥
कपर्दगतचन्द्रांशं द्वितीयमिति शङ्करः ।
दधावाभरणत्वेन देवानामपि पश्यताम् ॥
अङ्कमारोप्य तं पुत्रं लालयामास हृष्टधीः ।
ब्रह्मादयोऽथ विबुधा नमस्कृत्वा यथायथम् ॥
जग्मुर्देवं तथा विष्णुर्वीतमोहः स उत्थितः ।
पुनश्च पूर्ववद्देवं समाराध्याप निर्वृतिम् ॥

## नृसिंहनिग्रहः

एकदा तु पुनर्विष्णुर्हिरण्यं दानवेश्वरम् ॥
संहरिष्यन् समभ्यर्च्य शिवं लब्धवरो बली ।

नृसिंहवपुरास्थाय वक्षो भित्वा नखैः पुनः ।
[1]पपौ क्रोधेन तद्रक्तं संहृत्यासुरसैनिकान् ॥

अहङ्कारेण तेनैव सर्वान् संहर्तुमुद्यतः ।
ततो देवा भयाविष्टाः शरणं प्रापुरीश्वरम् ॥

वीरभद्रं तदा देवः सन्दिदेशास्य निग्रहे ।
शारभं रूपमास्थाय वीरभद्रः प्रतापवान् ॥

गृहीत्वा नारसिंहं तं द्विधा कृत्वात्मलीलया ।
भित्वा त्वचमतिस्वच्छामुपायनमुपाहरत् ॥

तदाप्रभृति देवोऽयं नारसिंहाम्बरोऽभवत् ।
सोऽपि देवं समाराध्य विगतैना बभूव ह ॥

## वामननिग्रहः

एकदा पुनरेवैष बलिनिग्रहमाचरन् ।
बभूव काश्यपसुतो वामनो मधुसूधनः ॥

ईश्वराप्तवरोऽभ्येत्य यागशालामयाचत ।
पदत्रयमितां भूमिमात्मनः स्थितये पुनः ॥

प्रतिगृह्य ततो भूमिमेकेनैव पदा दिवम् ।
विक्रम्यान्य[2]पदालाभाद्बलिं कारागृहान्तरे ॥

निवेश्य राज्यं भूयोऽपि देवेन्द्राय त्रिविक्रमः ।
दत्वाण्डमेतद्भग्नं स्याद्यथा [3]संवर्धयत्पुनः ॥

ततो देवैर्महादेवो ज्ञात्वा वृत्तान्तमस्य तु ।
भैरवं सन्दिदेशास्य निग्रहे भैरवाकृतिम् ॥

सोऽपि तं त्वरयाभ्येत्य वृद्धमण्डान्तमच्युतम् ।
प्रहृत्योरसि हस्तेन निपात्योत्कृत्य च त्वचम् ॥

आत्मनः कञ्चुकत्वेन दधावानीलकोमलम् ।
तस्यास्थ्यपि महद्दीर्घं कङ्कालाख्यं दधौ करे ॥

---

[1] पश्चात्–पा. [2] पदाभावात्. [3] संवन्धयत्पुनः.

[1] ततो जग्मुर्निरातङ्कास्तदा सर्वे सुरा दिवम् ।
उपेन्द्रोपि महादेवं समाराध्य यथापुरम् ॥

शान्तापराधः समभूज्जगाम च यथागतम् ।
एवं पञ्चावतारेषु निगृहीतः पिनाकिना ॥

पञ्चस्वनुगृहीतश्च वक्ष्ये श्रुण्वन्तु तत्कथाम् ।

## परशुरामानुग्रहः

(सूतः)—(शं.सं.उप. ६५)

जामदग्न्योऽथ रामोऽभूद्भगवान् पुरुषोत्तमः ।
भृगुशापेन तेनैव रेणुकायां च तत्स्त्रियाम् ॥

तं चकार पिता रामं नाम्ना [2]रूपादरिन्दमम् ।
उपनीतश्च कालेन रामः पित्रा महर्षिणा ॥

शुश्रूषणपरो नित्यं श्रद्धया नान्यमानसः ।
केनापि कारणेनैव कदाचित्पितृचोदितः ॥

रामो मातुः शिरश्छेदं रेणुकायाश्चकार ह ।
ततः प्रीतेन मनसा रामः प्रोक्तो महर्षिणा ॥

पुत्र शुश्रूषया प्रीतं मां विद्धि [3]वरयाधुना ।
[4]वशान्यो यो वरोऽभीष्टस्तं तं सर्वं ददामि ते ॥

इति रामो वचः श्रुत्वा पितुर्वव्रे वरानिमान् ।
मातुः पूर्ववदुत्थानं वरं वव्रे स आदितः ॥

पितुः कोपपरित्यागं कोपनस्याधिकं मुनेः ।
स्वस्यापि शिवपूजायां श्रद्धावत्त्वमनारतम् ॥

वरत्रयं तदा रामो लब्ध्वात्मपितुरन्तिकात् ।
वनमाप तपः कर्तुं शिवपूजापरायणः ॥

तस्मिन् गतेऽर्जुनोऽयाचत्त्यक्तकोपं मुनीश्वरम् ।
कृतवीर्यसुतो धेनुं कामोपपदभूषिताम् ॥

---

[1] ततो देवा निरातङ्काः सर्वे जग्मुर्यथागतम्. [2] मुनिररिन्दमम्. [3] परया. [4] वृणु यो.

(प्रार्थयित्वा मदान्धोऽसौ बलादाहर्तुमुद्यतः ।)
प्रत्याख्यातो यदा राजा मुनिना कृतवीर्यजः ॥

कोपेनास्य शिरश्छेदं कृत्वा माहिष्मतीमगात् ।
जमदग्निप्रिया सापि रेणुकाऽग्निं विवेश ह ॥

महत्यैव तदा वृष्ट्या शशामाग्निश्चितागतः ।
सा पुनर्दग्धवसना रेणुका ऋषिमानिनी ॥

[1]दुःखेन महताक्रान्ता लज्जया च वराङ्गना ।
निम्बपत्रैः समाच्छाद्य नग्नावूरूनितम्बकौ ॥

चण्डालश्रेणिमासाद्य कंचित्कालमुवास ह ।
तत्र पोत्राभिधः कश्चिन्मातङ्गाख्या च [2]कामिनी ॥

रक्षतुस्तां च पिष्टाद्यैरग्नितप्तां भृशातुराम् ।
एतत्सर्वमशेषेण श्रुत्वा रामो वनं गतः ॥

ईशादाराधनात्तुष्टात् संप्राप्य च परश्वधम् ।
क्षत्रियाम्भोधिवडबाज्वलनः संबभूव ह ॥

कार्तवीर्यार्जुनं हत्वा क्षत्रियानपरानपि ।
असृजैव ततस्तेषां निवापाञ्जलिमातनोत् ।

नीतेन बिन्दुसरसि श्रद्धया पितुरात्मनः ।
मातरं च समासाद्य पक्कणस्थां प्रणम्य ताम् ॥

ग्रामाद्बहिस्तया सार्धं कंचित्कालं निनाय सः ।
शुश्रूषया च संतोष्य मातरं तादृशीं पुनः ॥

वीरहत्यानिवृत्त्यर्थं क्षयद्वीरमुपास्य सः ।
काश्यपाय महीं सर्वां दत्वा वीर्यार्जितामिमाम् ॥
वैकुण्ठभवनं प्राप केरलात्पुनरद्भुतम् ।

---

[1] सुदुःखेन (तदा) हता. [2] भामिनी.

## रामानुग्रहः

पुरा दशरथो राजा पुत्रकामो महेश्वरम् ।
अयजत्पुत्रकामेष्ट्या वसिष्ठाद्यैश्च तापसैः ॥

ततो महेश्वरस्याज्ञावशेन मधुसूधनः ।
रामो दाशरथिर्जज्ञे कौसल्यायां नृपस्त्रियाम् ॥

सीतया पितृवाक्येन लक्ष्मणेन वनं गतः ।
तत्र सीतां राक्षसेन्द्रो रावणो जनकात्मजाम् ॥

जहार वञ्चयित्वा तं रामं तत्र सलक्ष्मणम् ।
तद्वियोगाग्निसन्तप्तो रामो लक्ष्मणसंयुतः ॥

अगस्त्यमुनिमासाद्य रुरोद भृशदुःखितः ।
अगस्त्येनोपदिष्टोऽसौ रक्षसां निधनं प्रति ॥

शिवमभ्यर्च्य लब्धास्त्रो बध्वा सेतुं वलीमुखैः ।
रावणं सगणं सङ्ख्ये विजित्य हरियूथपैः ॥

सीतां वैश्वानरे शुद्धामयोध्यामनयत्प्रियाम् ।
तत्र पट्टाभिषिक्तोऽसौ चक्रे राज्यमकण्टकम् ॥

लोकापवादभीत्यैव पुनः सीतां वनेऽत्यजत् ।
तस्यां भूमौ विलीनायां शुशोच भृशमातुरः ॥

अश्वमेधेन देवेशं रामोऽभ्यर्च्य महेश्वरम् ।
सरय्वां तनुमुत्सृज्य भ्रातृभिः सह राघवः ॥

क्षीराब्धिमाससाद स्वं स्थानं पूर्ववदच्युतः ।
अवतारः स तु पुरा स्त्रीदुःखावह ईरितः ॥
तमसा च वृतो यस्मान्न वेदात्मानमात्मना ।

## बलरामानुग्रहः

द्वापरे च युगेऽन्यस्मिन् स एव पुरुषोत्तमः ॥

वसुदेवसुतो जज्ञे रोहिण्यां रामनामकः ।
तत्र रक्षोगणं हत्वा [1]कृत्वा कृत्यं महत्पुनः ॥

---

[1] कृतकृत्योऽभवत्पुनः,

आराध्य च महादेवमम्बिकासहितं प्रभुम् ।
योगमार्गरतो रामो वैकुण्ठं प्राप्तवान् बली ॥

पुनश्च वसुदेवस्य देवक्यां कृष्णरूपधृत् ।
जज्ञे विष्णुरमेयात्मा भृगुशापनियन्त्रितः ॥

तत्राभ्यर्च्य [1]सुराधीशं शिवं शत्रून् जयन् पुनः ।
उपमन्युं समासाद्य विधिना तेन दीक्षितः ॥

शैवमुख्यतमोऽत्यर्थं भक्त्याराध्य च शङ्करम् ।
भूभारमपनीयाथ विष्णुलोकं जगाम ह ॥

### कल्क्यवतारानुग्रहः

पुनश्चापि कलेरन्ते कलिजा दुष्प्रजाः स्वयम् ।
संहरिष्यन् हयग्रीवो जातो विष्णुरधोक्षजः ॥

तत्र संपूज्य देवेशं लिङ्गमूर्तौ सदाशिवम् ।
कृपया तस्य निर्जित्य [2]तिष्यजातानसज्जनान् ॥

विष्णुरूपं यथापूर्वं [3]लब्ध्वात्मपदमाप सः ।
एवं दशावतारेषु निगृहीतश्च पञ्चसु ॥

शिवेनानुगृहीतश्च शापान्मुक्तो [4]भृगोरिति ।
एतेऽवताराः कल्पेषु बहुधा वर्णिता द्विजैः ॥

वैष्णवेषु पुराणेषु निग्रहो नैव वर्णितः ।
देहत्यागेन तस्यैव सूचितोऽनुग्रहो द्विजाः ॥

निगृहीतः कुमारेण वीरभद्रादिभिर्गणैः ।
[5]सूचितः स तु मत्स्याक्षिकूर्मास्थिक्रोडशृङ्गकैः ॥

सिंहचर्मशिरोमुण्डत्रिविक्रममहास्थिभिः ।
शिवाङ्गाकल्प[6]मध्यस्थैः पुराणश्रुतिचोदितैः ॥

---

[1] महादेवं. [2] म्लेच्छजातान्. [3] लब्ध्वा पदमवाप्तवान्. [4] भवेदिति.
[5] सूदितः. [6] मुख्यैस्तैः.

ततो देवा हरिब्रह्मप्रमुखाः परमेश्वरम् ।
दृष्ट्वा भीतेन मनसा त्यक्त्वाहङ्कारमात्मनः ॥
कर्मसु स्वेषु वर्तन्त इति वेदविदो विदुः ।

## शिवमुनिकथा

एकदा विष्णुभवनं पुरोपेन्द्रः समाययौ ।
स्वमेव मूर्तिभेदं तं प्रद्युम्नादिवदच्युतः ॥
मिथः संभाषणं कृत्वा कंचित्कालमवस्थितः ।
एतस्मिन् समये कण्वः काश्यपस्य सुतो महान् ॥
वैकुण्ठभवनं प्राप विष्णुसंभाषणोत्सुकः ।
तं दृष्ट्वा तौ समायान्तं शिवभक्तं दृढव्रतम् ॥
न व्यलोकयतामक्ष्णा नासनं ददतुश्च तौ ।
न वाचं चाप्यवदतामासातां मौनमुद्रया
तौ तदा तादृशौ दृष्ट्वा चुकोप मुनिसत्तमः ।
शशापास्माच्छिवस्येष्टान् मत्वा तूष्णीं बभूविथ ॥
विष्णोऽतस्त्वमनेकानि जन्मानि भज मद्गिरा ।
मूकश्च तत्र सर्वत्र दत्तः शापो [1]मयात्र वै ॥
इयं च लक्ष्मीस्त्वत्पार्श्वे [2] स्थिता मृगवदत्र वै ।
मृगीभवतु मच्छापादुपेन्द्रोऽप्ययमीदृशः ॥
कैरातीं योनिमासाद्य कानने वसतां चिरम् ।
तव भक्ताश्च लोकेऽस्मिन् सन्तु ते शिवनिन्दकाः ॥
भस्मरुद्राक्षनिन्दां च कुर्वन्तु मतिमोहिताः ।
इति शप्त्वा गते तस्मिन् कण्वे निजमथाश्रमम् ॥
विष्णुः शापभयात्तस्य कमलालयमेत्य च ।
तत्राराध्य महादेवमप्रीणयदनन्यधीः ॥
ततः प्रीतो महादेवः कण्वमाहूय तापसम् ।
एकजन्मानुभोक्तारं चक्रे शापस्य माधवम् ॥

---

[1] मयाद्य ते. [2] मृदुदेहावहात्र वै.

महालक्ष्मीं मृगकारामेक[1]जन्मैव शङ्करः ।
उपेन्द्रस्यापि जन्मैकं कैरातमकरोच्छिवः ॥

तेन विष्णुः शिवमुनिः संजातः कण्वशापतः ।
लक्ष्मीश्चापि मृगी जता कानने मुनिशापतः ॥

उपेन्द्राद्याश्च कैरातीं योनिमापेदिरे तदा ।
मृगी सा तं मुनिं मूकं दृष्ट्वा गर्भवती ह्यभूत् ॥

सूत्वासौ कन्यकां हृद्यां मृगी त्यक्त्वा पलायिता ।
किरातोऽसौ वनात्कन्यामादायायाच्च पक्कणम् ॥

कुमाराय ददौ कन्यां शवरो वल्लिनामकाम् ।
ततः शापाद्विनिर्मुक्ताः सर्वे जग्मुर्यथागतम् ॥

## क्षुपदधीचिसंवादः

कदाचित्कलहे वृत्ते सङ्गात्क्षु(प)दधीचयोः ।
क्षुपस्यैव तु साहाय्यं कर्तुकामो जनार्दनः ॥

दधीचाश्रममासाद्य ब्राह्मणच्छद्मसंवृतः ।
ययाचे ब्राह्मणश्रेष्ठं क्षत्रियो मुनिसत्तमम् ॥

[2]वदेवमेकदा विद्वन् मद्वाक्येन मतस्तव ।
इति श्रुत्वा दधीचोऽपि [3]सान्त्वपूर्वं हरेर्वचः ॥

नाहं वक्तास्म्यसत्यस्य जाने त्वां च जनार्दन ।
न बिभेमि विशेषेण क्षत्रियादहमच्युत ॥

ततः क्रुद्धोऽम्बुजाताक्षस्तस्मिन्नस्त्राण्यवासृजत् ।
तत्सर्वं भक्षयामास त्रिशूलं दर्भसंभवम् ॥

ततः क्रुद्धो महाविष्णुर्विश्वरूपमदर्शयत् ।
तद्विश्वरूपं स मुनिः संस्तभ्यात्मन्यदर्शयत् ॥

ततश्चक्रं ससर्जास्मै विष्णुः कोपादमर्षितः ।
चक्रं तदस्थिसंस्पृष्टं कुण्ठितारं बभूव ह ॥

---

[1] जन्मनि. [2] वदेवं मा कदापि त्वं मद्वाक्येन नमस्तव. [3] सामपूर्वं.

देवानामपि सर्वेषां विष्णुसाहाय्यकारिणाम्।
आसन् विकुण्ठिताश्रीणि तस्मिन्नेव मुनीश्वरे॥

एतस्मिन्नन्तरे ब्रह्मा विष्णुं देवांश्च सायुधान्।
न्यवारयदतो युद्धादसाम्प्रतमिति ब्रुवन्॥

तस्मिन्नुपरते युद्धे शशाप मुनिरच्युतम्।
देवांश्च सर्वे एवैते यूयं वीरेण मर्दिताः॥

रुद्रकोपसमुत्थेन विष्णुना सह मा चिरम्।
विष्णुभक्ताश्च ये भूम्यां सन्तु पाषण्डमाश्रिताः॥

शिवनिन्दापरा नित्यं यतयश्च नराधमाः।
(सूतः)—(शं. सं. उप.–६६)
ततो विष्णुर्भयाविष्टः स्वात्मानं निन्दयन् हृदा॥

कथं किमर्थमेतेन कलहः समपद्यत।
फलं वात्र मयाप्तं किं शापस्त्वाप्तोऽनिवारितः॥

तद्दोषपरिहाराय शरणं यामि शङ्करम्।
इति संचिन्त्य मनसा चिदम्बरमथासदत्॥

तत्राराध्य महादेवं श्रीमद्दभ्रसभाङ्कणे।
तत्प्रसादेन निर्मुक्तपापः सद्योऽभ्यवर्तत॥

गन्धमादनमासाद्य कदाचिद्विष्णुरव्ययम्।
समाराध्य महादेवं वरद्वयमयाचत॥

मामङ्गीकुरु देवेश वाहनत्वशरत्वयोः।
अस्त्वित्युक्त्वाथ तं चक्रे दाहे तु तिसृणां पुराम्॥

वाहनत्वे शरत्वे च कल्पयामास माधवम्।
वृषेन्द्रो भगवान् विष्णुस्तस्मादारभ्य हेतिराट्॥

## नरकासुरसंहारः

मैनाके च पुरा शैले विष्णुराराध्य शङ्करम्।
प्रसन्नं प्रार्थयामास वरं वरसहस्रदम्॥

कृताञ्जलिपुटो भूत्वा प्रणम्य विनयान्वितः।
उवाच देवदेवेशं नरकाख्यो महासुरः॥

तपसाराध्य [1]लोकेशं वरं वव्रेऽसुराग्रणीः।
यच्छिवाख्यं वस्तु परमवाङ्मनसगोचरम्॥

मायामयेन तेनैव सहैकीभूय संयुगे।
मया युद्धं परं चेत्स्यादस्तु तत्र वधो मम॥

जित्वा देवानहं [2]सर्वलोकाध्यक्षं जगत्पते।
भूयासमिति लब्ध्वैवं नरको भूमिसंभवः॥

त्रैलोक्यमनुभुङ्क्तेऽद्य देवान् सर्वान्विजित्य सः।
अहं तेन विभो युद्धे नरकेन पराजितः॥

शंभो बलेन महता वाराणामेकविंशतिम्।
मेध्येऽर्णवं द्वारकायां वसतिः क्रियते मया॥

तद्भीत्या पुत्रमित्राद्यैस्त्यक्त्वा तु मधुरां पुरीम्।
स मामन्वेष्यति सदा पर्वतानां गुहासु च॥

त्वं देवदेव सर्वेषामवाङ्मनसगोचरः।
मयि स्थित्वैक्यभावेन माहेयं संहरासुरम्॥

इति प्रणम्य देवेशं साञ्जलिः पुरतः स्थितः।
प्रार्थितस्त्वेवमीशानः प्राह भूयो जनार्दनम्॥

अहं ते दक्षिणे पार्श्वे स्थास्यामि मधुसूदन।
देवानामुपकाराय वीर्यं दास्यामि तेऽनघ॥

इति लब्ध्वा वरं शम्भोर्विष्णुः कृष्णवपुर्धरः।
बलेन महता युक्तो युद्धाय नरकासुरम्॥

आजुहाव महाबाहु[3]राश्विनेयमरिन्दमः।
[4]तदा युद्धमभूत्तत्र सेनयोरुभयोरपि॥

ततः सर्वेश्वरो विष्णुमाविवेशासुरान्तकृत्।
दक्षिणं चापि तत्पार्श्वमास्थितः परमेश्वरः॥

चक्रेणैव ततो [5]विष्णुश्चिच्छेदास्य शिरस्तदा।
सोऽपि देवेन महता विष्णुनिष्ठेन संहृतः॥

---

[1] देवेशं—पा. [2] सर्वान् लोकाध्यक्षो—पा. [3] रावनेय—पा. [4] ततोऽभूद्युद्ध-मतुलं—पा. [5] विष्णुस्तस्यैव शिर आच्छिनत्—पा.

तस्मादवाप वै मुक्तिं तद्देहे च लयं गतः।
गाणापत्यमसौ लेभे स्वान्ते दृष्ट्वा सदाशिवम्॥

सर्वेऽपि विस्मिता भूत्वा तस्थुर्युद्धदिदृक्षवः।
ईश्वरोऽपि च कैलासं विष्णुं त्यक्त्वाप भूधरम्॥

कृष्णोऽपि तं प्रणम्येशं द्वारकामाप हृष्टधीः।
देवाश्च निर्भया भूत्वा देवलोकमगुर्मुदा॥

## शास्त्रुत्पत्तिः

पुनः कदाचिच्छ्रीकान्तो न्यग्रोधवन ईश्वरम्।
आराध्यास्माद्वरं वव्रे प्रसन्नात्पार्वतीपतेः॥

त्वया रन्तुमपेक्षेशाधुना भूत्वा रमण्यहम्।
देयो वरो ममाधीश प्रसन्नो यदि शङ्कर॥

दत्त्वैवमीश्वरस्तस्मै वरमन्तर्धिमाययौ।
ततस्तु कारणादेवममृतं क्षीरसागरात्॥

गृहीतमसुरैर्विष्णुर्मोहिन्याकारमास्थितः।
तेनासुरान्मोहयित्वा पाययित्वामृतं सुरान्॥

ऊर्ध्वरेतसमीशानमपि मोहमुपानयत्।
रममाणो महेशेन मोहिन्याकारमस्थितः॥

लेभे च पुत्रं शास्तारं कामारातेरपीश्वरात्।

## ब्रह्मोत्पत्तिः

कल्पान्तरे पुनस्तस्मिन् ब्रह्मण्युपरते हरिः।
परान्तकाले स्त्रीभूत्वा विष्णुरीशं वशं नयत्।

अरमच्च ततो ब्रह्मा विष्णावुदभवत्पुरा॥
तद्विष्णुः शिवपूजाया माहात्म्यात्किल शूलिनः।

दयितेति श्रुतो लोके पूजा सर्वस्य कामधुक्॥

दूर्वासश्शापनिवृत्तिः

केदारमेकदाभ्येत्य दूर्वासा मुनिसत्तमः ।
शिवपूजापरो भूत्वा तत्रोवास महातपाः ॥

तदानीमीश्वरं द्रष्टुं केदारस्थाननायकम् ।
संप्रापारुह्य गरुडं वैकुण्ठाद्विष्टरश्रवाः ॥

तत्राराध्य महादेवं पीत्वा तत्रोदकं हरिः ।
इयासुः स्वं पुनर्लोकमारुह्य विनतासुतम् ॥

तत्र पूजापरं दृष्ट्वा दूरे दूर्वाससं मुनिम् ।
समीपं तस्य संप्राप समालोक्य तु पूजनम् ॥

जगाम च पुनर्लोकं नमस्कृत्य च तं तदा ।
अर्च्यमानं च देवेशमनमन्प्रययौ हरिः ॥

स्वं लोकं च समासाद्य स्थिते तस्मिन् मधुद्विषि ।
समाप्य पूजां दुर्वासाः समीपं प्राप चक्रिणः ॥

अशपच्च महाविष्णुमतिमन्युर्मुनीश्वरः ।
यन्मयार्चितमीशानं लिङ्गं मां च जनार्दन ॥

अप्रणम्य गतोऽसि त्वं केदारे स्मयदूषितः ।
ततस्तस्यास्य पापस्य गरुडो वाहनं तव ॥

गतजीवो भवत्वद्य श्रीश्च तेऽस्तु समुद्रगा ।
तवाङ्गजं च रुधिरं भैरवेण हृतं भवेत् ॥

शूलाग्रेण विनिर्भिन्ने ललाटे मधुसूधन ।
भक्ताश्च ते शिवद्रोहपरा भूयासुरन्वहम् ॥

इति शप्त्वा गते तस्मिन्दूर्वाससि मुनीश्वराः ।
श्रीकालहस्तिमासाद्य शिवमानर्च केशवः ॥

तस्मै प्रसन्नो भगवानम्बया सह शङ्करः ।
तच्छापस्य प्रतीकारं प्राह देवः पिनाकधृत् ॥

[1]हरतात् भैरवो रक्तं त्वां पुनर्जीवयत्वयम् ।
लक्ष्मीश्च मथनेऽम्भोधेरुत्पत्स्यति तवानघ ॥

---

[1] हत्वा तु भैरवो.

गरुडोऽपि च संभूय पुनश्चामृतमाहरन्।
नियुध्य च चिरं युद्धे भूयाद्भयोऽपि वाहनम् ॥
तथैव भैरवो विष्णो रक्तमादाय शूलतः।
पुनरुज्जीवयामास भक्तं भक्तार्तिभञ्जनः।
लक्ष्मीश्चाम्भोधिसंभूता गरुडः काश्यपात्पुनः।
लक्ष्मीर्विष्णुं पुनः प्राप नियुध्य गरुडोऽपि तम् ॥
विष्णोः पूजाबलेनैव शापान्मुक्तिर्नचान्यथा।
तस्मात्पूजासमं भोगमोक्षदं नहि विद्यते ॥

## चक्रप्रदानम्

एकदा च सुराः सर्वे पूर्वदेवैरुपद्रुताः।
विष्णुं शरणमभ्येत्य भीतभीता व्यजिज्ञपन् ॥
भगवन्नसुराक्रान्तमाधिपत्यं च वैबुधम्।
त्वं चेश्वरेण चास्माकं रक्षणे विनियोजितः ॥
दुष्टानां शिक्षणे शिष्टरक्षणे च विशेषतः।
अतस्त्वं शासि देवानामवनायासुराधमान् ॥
इति श्रुत्वा वचस्तेषां हरिः प्राहावलोक्य तान्।
मया युद्धेन हन्तव्या असुरा आयुधं च नः ॥
चक्रं दधीचिवज्रास्थिकुण्ठितारं बभूव तत्।
तमूचुरमरा भूयश्चक्रमीशेन निर्मितम् ॥
जलन्धरवधार्थं [1] यत्तदर्थं भव यत्नवान्।
विष्णुस्तत्साधु मन्वानः काञ्चीमासाद्य वाञ्छितम् ॥
लब्धुकामोऽर्चयामास कमलैरन्वहं शिवम्।
सहस्रैस्तत्र चैकोने [2] कदाचिन्नेत्रमात्मनः ॥
पद्मप्रतिनिधिं चक्रे विष्णुस्तुष्टश्च शङ्करः।
चक्रं सुदर्शनं प्रादात्सहस्रादित्यसन्निभम् ॥

---

[1] तदभ्यर्थयतु तं भवान्. [2] तदानीं.

पुनश्च तं वरेणेशश्छन्दयामास तुष्टितः ।
सोऽपि वव्रे वरं पद्मसदृशं नेत्रमात्मनः ॥

पद्माक्ष इति विख्यातिः स्तुवातां च तथा च माम् ।
त्वमेव सकलानिष्टान् प्रयच्छ परमेश्वर ॥

इति सर्वेश्वरादिष्टानवाप्य पुरुषोत्तमः ।
संहृत्य दितिजान् सर्वान् चक्रेणारक्षदच्युतः ॥

दैत्यार्दितान्पुनर्देवानखिलं च जगत्त्रयम् ।
तदा प्रभृति पद्माक्षं विदुः सर्वमुनीश्वराः ॥

## मन्मथोत्पत्तिः

श्रीवाञ्छये च पुरा विष्णुः कदाचित्पुत्रवाञ्छया ।
समारराध भवने शंभुमेकमनन्यधीः ॥

दत्ते शिवेन पुत्रेऽस्मै कुपितानर्चिता शिवा ।
तव पुत्रो हरे रुद्रकोपाद्दग्धो भवेत्क्षणात् ॥

मां विनेशं यदभ्यर्च्य लब्धवानसि पुत्रकम् ।
शप्तो विष्णुर्महादेव्या पुनः शंभुं सहोमया ॥

स्कन्देन सहितं भक्त्या समाराध्याभ्यतोषयत् ।
उमा प्रसन्ना प्राहेदमीशेनाक्षिप्रचोदिता ॥

वरेण लब्धस्ते पुत्रो नष्टः शापेन वै मम ।
पुनश्चेशाज्ञया तेऽस्तु लब्धदेहान्तरोऽच्युत ॥

दत्वैवं वरमीशानो देवी चान्तर्धिमाययौ ।
तथैव विष्णुः संप्राप पुत्रं कामं रतिप्रियम् ॥

निर्दग्धश्च पुनः कामः शिवालीकाक्षिवह्निना ।
उत्पादितस्तु देवेन देवानां च प्रियेच्छया ॥

तस्मात्पूजा पुत्रलाभहेतुः शैवी समीरिता ।
सर्वाभीष्टप्रदा चैव सत्यमुक्तं न संशयः ॥

## कालनेमिसंहारः

(सूतः)—(शं. सं. उप.-६७)

पुनः कदाचित्पद्माक्षो मायापुर्यां महेश्वरम्।
संपूज्य निर्जितो दैत्यैरतिमायाविशारदैः॥

प्रसन्नमीश्वरं तत्र प्रोवाच मधुसूदनः।
कालनेमिमुखा देव दैत्या मायाविनो भृशम्॥

तानशक्तोऽस्मि समरे विजेतुमतिमायिनः।
तेषां माया ममेशान मायया निर्जिता भवेत्॥

प्रसीद तादृशं देहि वरं वरसहस्रद।
इति लब्ध्वा वरं विष्णुर्मायी [1]जातस्तदादितः॥

बलं चात्यन्तमसुरावलेपक्षममात्मनः।
संजहारासुरान् संख्ये मुरारिरमरारिहा॥

## विष्ण्वङ्गभूषणम्

एकदा च पुरा काश्यां कमलापतिरीश्वरम्।
प्रीतं चक्रोऽर्चयात्यर्थं वव्रे वरमनुत्तमम्॥

मदीयान्यङ्गका(जा)नीश धृतानि भवताङ्गके।
ममाहङ्कारशान्त्यर्थं ब्रह्मादीनामपीश्वर॥

तथापि चाधिकारोत्थमदेन मम मानसम्।
अहङ्कारस्तयाविष्टं कदाचिद्भवतीश्वर॥

इतः परं प्रसन्नोऽसि यस्य कस्यापि चेत्प्रभो।
ममाङ्गास्थीनि संभाव्य भूषणत्वेन सन्ततम्॥

प्रसन्नो भव सर्वेषां गर्वशान्त्यै जगद्गुरो।
नामानीमानि ते सन्तु विष्णुकन्धरपातनः।
मत्स्याक्षिभृच्च कूर्मास्थिसमलङ्कृतविग्रहः॥

---

[1] तदादि सः-पा.

क्रोडशृङ्गधरो नारसिंहचर्माम्बरोऽपि च ।
त्रिविक्रमास्थिदण्डी च भव भूतपतेऽधुना ॥

एमिर्नामभिरीश त्वां ये स्तुवन्ति नरोत्तमाः ।
तेषामिष्टप्रदो भूया भव मय्यनुकम्पया ॥

इति दत्वा वरं शंभुरुमयान्तर्हितोऽभवत् ।
तदादि च महादेवमेभिर्नामभिरीश्वरम् ॥

स्तुवन्तोऽभीष्टमासाद्य मुक्तिभाजो भवन्ति ते ।
विष्णोरपि प्रियास्ते तु देवानामपि वल्लभाः ॥

विष्णुश्च मुक्ताहङ्कारोऽभवद्भक्तेषु चास्य वै ।
भक्तियुक्तोऽधिकं लोके बभूवानन्दनिर्भरः ॥

हरीश्वरे हरं विष्णुः कदाप्याराध्य भूसुराः ।
वरं लब्ध्वा महेशानात्प्रसन्नान्नटनेऽस्य तु ॥

पटहं मर्दलं सम्यग्वादयित्वाप निर्वृतिम् ।
एकदा च पुरा विष्णुः श्वेतारण्येऽर्चयञ्छिवम् ॥

वरं वव्रे प्रभुं साम्बं प्रणम्य परया मुदा ।
त्वया देव विनोदार्थं सृज्यते निखिलं जगत् ॥

बहूनि मे व्यतीतानि जन्मानि परमेश्वर ।
इतः परं ममाधीश भूयान्मुक्तिः पुरा त्वयि ॥

ततः प्रोवोच तं विष्णुं प्रसन्नः परमेश्वरः ।
प्रवृत्ते सर्वसंहारे प्राणिनां मधुसूदन ॥

परान्तकाले संप्राप्ते त्वां च संहृत्य लीलया ।
तवास्थि भस्म चर्मादिभूषितो मुक्तिदोऽस्म्यहम् ॥

परानन्दं च नृत्तं च कृत्वा ते परया मुदा ।
सोढ्वा सर्वापराधांस्ते प्राप्ते सृष्ट्यन्तरे पुनः ॥

सारूप्यं ते प्रदास्यामि ततः सायुज्यमुत्तमम् ।
दत्वेति वरमीशोऽस्मै प्रसन्नोऽन्तरधीयत ॥

तथैवास्यास्थिभस्माद्यैरलङ्कृततनुः शिवः ।
सर्वांश्चैवानुगृह्णाति सायुज्यमपि विष्णवे ॥

तस्माल्लोके महेशस्य पूजया पुरुषोत्तमः।
राक्षिताभूत्समृद्धात्मा मायावी पुत्रवान् हरिः॥

बली च सर्वदेवेभ्यः सर्वस्मादधिकोऽपि सः।
शापमुक्तिश्च तस्यैवं पूजया परमेशितुः॥

एवं विष्णुकृतास्वीशपूजासु कतिचित्कचित्।
प्रोक्ता मयात्र सर्वत्र क ईष्टे वर्णितुं भुवि॥

शृण्वतामपि चैतासां सर्वाभीष्टाप्तिराशु वै।
ब्रह्मणा च कृतास्वीशपूजासु कतिचिद्ब्रुवे॥

शृण्वन्तु मुनयः सर्वे सावधानेन चेतसा।
इति सूतः समालोक्य महर्षीन् प्राह हृष्टधीः॥

(सूतः)—(शं. सं. उप.–६८.)

श्रीकाषानगरे पूर्वं ब्रह्मा देवं त्रियम्बकम्।
तोषयासास तपसा तीव्रेण परमेश्वरम्॥

पूजयास्य प्रसन्नः स शङ्करश्चन्द्रशेखरः।
वरं वरय भद्रं ते प्रयच्छामि तवेप्सितम्॥

इति शंभोर्वचः श्रुत्वा धाता प्रश्रयणान्वितः।
स्वामिन् मम शिरः पूर्वं भैरवेण महात्मना॥

अहङ्कारान्धचित्तस्य निकृत्तं करजेन वै।
महत्यद्यापि मां भीतिस्तत एव सदा प्रभो॥

नितरां चपलं चित्तं सर्वतः परिधावति।
न शक्यते मया स्रष्टुं जगत्सर्वं यथापुरम्॥

प्रयच्छ तां महादेव शक्तिं सृष्टौ जगत्प्रभो।
इति धातृवचः श्रुत्वा तथा दत्वा वरं प्रभुः॥

अन्तर्दधे महादेवस्तत्रैवाम्बिकया सह।
लब्ध्वा वरममुं धाता भयं त्यक्त्वातिदुस्तरम्॥

स्थैर्यं च प्राप्य मनसा महादेवमनुस्मरन्।
ससर्ज सकलं विश्वं यथापूर्वं निरन्तरम्॥

तुष्ट्या परमया युक्तस्तदाप्रभृति विश्वसृट् ।
एवंस्थिते विधिः पश्चात्ससर्जाप्सरसां गणान् ॥

तिलोत्तमां विशालाक्षीं सर्वावयवपेशलाम् ।
सृष्ट्वास्यां नितरां सक्तो बभूवाज्ञानमोहितः ॥

तत्संभोगरतिस्तां च प्रार्थयामास भूरिशः ।
तदैषा त्वं पिता ब्रह्मन् जगतो मे विशेषतः ॥

न युक्ता तद्रतिः स्वामिन्मया तव जगत्प्रभो ।
इत्युच्चैर्वचसा दूरं दुद्रावैषा भयान्विता ॥

दृष्ट्वैनं शंभुगणपा द्रावयन्तं विधिं तदा ।
स्वयं तं द्रावयामासुः पलायन्तं सुदूरतः ॥

तदा प्राप गिरिं वेधाः सुपार्श्वाख्यं मनोहरम् ।
तत्र गूढश्चकारायं शिवपूजां मनोरमाम् ॥

पूजया तस्य देवेशः प्रादुरासीन्महेश्वरः ।
तं दृष्ट्वा देवमीशानं प्रणनाम पुनः पुनः ॥

सोऽब्रवीदुच्यतां वेधः काङ्क्षितं मनसि स्थितम् ।
इति शंभोर्वचः श्रुत्वा पुनः प्राह विधिः शिवम् ॥

त्वन्मायामोहितः शंभो कामबाणेन पीडितः ।
तिलोत्तमामहं दृष्ट्वा तत्संभोगोत्सुको भृशम् ॥

अद्रवं दूरतो दृष्ट्वा शिवदूतान्महौजसः ।
(द्रुतगत्या गुहामस्य प्राप्तवानास्मि शङ्कर ।)
तदुत्था भीतिरधुना वर्तते नितरां मयि ॥

यदि प्रसन्नो भगवन्मह्यं भक्ताय भोः पितः ।
यदि देयो वरः सत्यं स्त्रीमायैषा जहात्वलम् ॥

विश्वाधिकोऽसि भगवन्नूर्ध्वरेता इति श्रुतः ।
ऊर्ध्वरेतं विरूपाक्षं भगवन्तमुमासखम् ॥

भजन्ति ये महात्मानः कामस्तान्नहि बाधते ।
तस्मादितः परं शंभो मायैषा मां जहात्वलम् ॥

सावित्री या च गायत्री या चान्यापि सरस्वती ।
तिस्र एव स्त्रियो नित्यं [1]ताभिरस्तु रतिर्मम ॥

तदन्यासु प्रभो मास्तु प्रीतिर्मे त्वत्कृपाबलात् ।
तिलोत्तमाभिद्रवणजन्यपापं विनश्यतु ॥

इति वेधोवचः श्रुत्वा [2]तथेत्याह महेश्वरः ।
अन्तर्दधे च देवेशस्तत्रैवाम्बिकया सह ॥

इति लब्ध्वा वरं शंभोर्ब्रह्मा प्राप निजं पदम् ।
तत्रावसज्जगत्सृष्ट्वा क्रीडयंस्ताभिरप्यलम् ॥

त्यक्तान्यनारीमायोऽसौ शिवमेव हृदि स्मरन् ।
मुक्ताखिलागसं घोरं शिवध्यानप्रभावतः ॥

स कदाचित्सरस्वत्या क्रीडयन् बहुकालतः ।
ससर्ज दैत्यान् पापिष्ठान् [3]जगद्द्रोहरतान् भृशम् ॥

जघान तान् स्वयं कोपादात्मजातानपि प्रभुः ।
तद्दोषस्य विनाशाय पूजयामास शङ्करम् ॥

श्रीकालहस्तिनगरे सर्वपापनिकृन्तने ।
त्यक्त्वा ततः स्वकं दोषं सरस्वत्या समन्वितः ॥

विशुद्धात्मा ययौ प्रीत्या ब्रह्मलोकं सनातनम् ।
[4]स कदाचित्पुनः शंभुं प्रणम्य रजताचले ॥

ब्रह्मलोकाभिगमने ययौ बद्धाञ्जलिर्विधिः ।
क्रीडन्तं पुरतः स्कन्दं कुमारं पुष्करस्रजम् ॥

जानन्नपि ययौ तूष्णीमजानन्निव गर्वतः ।
तं दृष्ट्वा तादृशं स्कन्दः समाहूय विधिं तदा ॥

पप्रच्छ प्रणवस्यार्थः को वेति निजलीलया ।
वदन्तमर्थं तं कोपादन्यथा स विधिं तदा ॥

---

[1] भार्यास्तत्र रतिर्मम. [2] तथेत्युक्त्वा. [3] जगत्तोद्धकृतो भृशम्-पा. [4] इत आरभ्य "विलेढुमस्तु मे शक्तिः" (४२१तमे पुटे) इत्यन्तो ग्रन्थभागः उत्तरत्र विद्यमानः पुराणमनुसृत्य कथासन्दर्भानुगुण्याय इह निवेशितः.

मुष्ट्या संताड्य शिरसि कारावेश्मन्यपातयत् ।
स्वयं ससर्ज निखिलं जगत्पूर्ववदेव सः ॥

विधातुस्त्वथ वृत्तान्तं श्रुत्वा शंभुः स्मयन्निव ।
मोचयामास तं स्कन्दं प्रीणयित्वा महेश्वरः ॥

ततः प्रणम्य स पुनः स्कन्दं साक्षाच्छिवप्रियम् ।
विमुक्तस्तेन परया प्रीत्या काञ्चीपुरीं शुभाम् ॥

संप्राप्य तत्र चैकाम्रनाथं साक्षात्कृपार्णवम् ।
संपूज्य तत्र लिङ्गं च स्वनाम्ना स्थाप्य भक्तिमान् ॥

मुक्तवान् स्वकृतं दोषं तत्प्रभावात्तदात्मभूः ।
चकार स्वाधिकारं च यथापूर्वं पदे स्थितः ॥

पुनर्विचिन्तयन् किंचित्पूजयामास शङ्करम् ।
नीलाद्रिं समनुप्राप्य भक्त्या परमया विधिः ॥

तत्राविरासीद्भगवांस्तस्मै प्रीततरः शिवः ।
वरं वरय भद्रं ते यत्ते मनसि वर्तते ॥

इति शंभोर्वचः श्रुत्वा धाता बद्धाञ्जलिः पुरः ।
भवन्नृत्तावलोकाय विष्णुनाराधितः पुरा ॥

प्रसन्नः प्रददौ तस्मै पटहत्वं निजान्तिके ।
भवांस्तदद्य भगवन् मां तु नृत्ताभिकाङ्क्षिणम् ॥

रक्ष नृत्तावलोकाय तालत्वं परिकल्पय ।
अन्यथा तावकं नृत्तं न शक्तोऽहं निरीक्षितुम् ॥

गणेभ्यो वेत्रहस्तेभ्यो भयं भवति मे महत् ।
इति धातृवचः श्रुत्वा तथेति जगदीश्वरः ॥

दत्वास्य तालं सुमहत्तत्रैवान्तर्दधे स्वयम् ।
तदाप्रभृति वेधाश्च वादयंस्तालवाद्यकम् ॥

दृष्ट्वा नृत्तं नटेशस्य तस्थे प्रीत्या समन्वितः ।
तथा ब्रह्मा ब्रह्मलोके पूजयामास शङ्करम् ॥

तस्मै प्रसन्नो भगवान् गिरमूचे स्मिताननः ।
तवेप्सितं प्रदास्यामि वद ब्रह्मन्निहाधुना ॥

रथाधिरूढं देवेशं भगवन्तमुमासखम्।
सेवितुं मम भो शम्भो वाञ्छाद्य हृदि वर्तते॥

न शक्यते च संबाधे सेवितुं त्वां महेश्वर।
ताडयन्ति च नन्दीशप्रमुखा वेत्रपाणयः॥

सारथ्यं तव देवेश रथस्य परिकल्पय।
इति ब्रह्मवचः श्रुत्वा वरं दत्वा महेश्वरः॥

अन्तर्दधे क्षणादेव तत्रैव परमेश्वरः।
तदा प्रभृति धातापि रथसारथ्यमाप्तवान्॥

चोदयामास वेदाश्वान् प्रस्थानसमये प्रभोः।
पुरा कैलासशिखरे पूजयित्वा महेश्वरम्॥

प्रसन्ने च महादेवे प्रार्थयामास वै विधिः।
विष्णुं लोकांश्च सकलांस्त्वत्प्रसादान्महेश्वर॥

विलेढुमस्ति मे शक्तिर्बिभर्तुमुदरेऽपि च।
पुनश्चापानमार्गेण तथा निस्सारणाय च॥

इति प्रार्थ्य महादेवं प्राप्य तद्वरमुत्तमम्।
विरोध्य विष्णुं लोकैस्तं लिलेहाशु पुरा विधिः॥

ततः संप्रार्थितो लोकैर्मुमोचापानमार्गतः।
विष्णुं लोकान्यथापूर्वं ससर्जेश्वरशासनात्॥

ऊर्ध्वभागं महेशस्य महालिङ्गस्वरूपिणः।
दृष्टवानहमस्मीति यत्प्रोक्तं विष्णुना पुरा॥

तद्दोषपरिहाराय विधिर्विश्वेश्वरं शिवम्।
पुण्येऽरुणाचले पूर्वं पूजयामास भक्तितः॥

पूतात्मा पूजया शंभोस्तस्मात्पापाद्भयानकात्।
जगत्ससर्ज निखिलं यथापूर्वमतन्द्रितः॥

श्रीपर्वते पुरा धाता शिवपूजां चकार हि।
तदा प्रसन्नं देवेशं शिवं परमकारणम्॥

प्रार्थयामास स विधिः प्रणम्य भुवि दण्डवत्।
स्वामिन् महासनं पद्मं वाहनं हंसमेव च॥

([1]दक्षयागे पुरा दग्ध्वा वह्नौ महति तावकाः ।
गणास्तार्क्ष्येण बभुजुर्दग्धेनाग्नौ महेश्वर ॥)

तन्मह्यमासनं पद्मं हंसवाहनमीश्वर ।
परिकल्पय विश्वेश प्रणतोऽस्मि तवाधुना ॥

तथेति तद्वरं शंभुस्तस्मै दत्वा स्वयम्भुवे ।
अन्तर्हितोऽभवत्क्षिप्रं विधिरप्यवसत्सुखी ॥

ब्रह्मलोकमनुप्राप्य देवैः सह पितामहः ।
पुनश्च विधिराराध्य देवमध्यापकेश्वरम् ॥

[2]श्रुतिपुर्यां ततो लब्ध्वा वेदान् साङ्गान्महेश्वरात् ।
तदुक्तं कर्म संभाव्य ससर्ज च चराचरम् ॥

पुरा कदाचित्स पुनर्ब्रह्मलोकात्पितामहः ।
हेमकूटमनुप्राप्य तत्र लिङ्गे महेश्वरम् ॥

अर्चयामास विधिवदम्बिकापतिमव्ययम् ।
ब्रह्मा प्रसन्नमालोक्य पितरं ब्रह्मणस्पतिम् ॥

वव्रे वरमिमं ब्रह्मा जन्ममृत्युभयार्दितः ।
परान्तकाले भगवान् जगदेतच्चराचरम् ॥

संहृत्य विष्णुना सार्धं [3] विष्णुं दग्ध्वा दयाधिक ।
तद्देहजास्थिभस्मानि कपालानि [4] च कानिचित् ॥

धृत्वा विभूषणत्वेन करोषि किल ताण्डवम् ।
तद्वदस्मि[5]न्महादेव परान्ते समुपास्थिते ॥

चरमं देहमेनं त्वं संहृत्य पुरुलीलया ।
मद्देहजास्थिभस्मानि कपालानि कचानपि ॥

धृत्वैव भूषणं शंभो नृत्यं कुरु दयानिधे ।
तेनैव च कृतार्थोऽस्मि न पुनर्जन्म मे ततः ॥

महाश्मशानमभ्येत्य भवल्लोचनवह्निजम् ।
कस्य भूयोऽस्ति जन्मेश त्वदङ्गाकल्पभस्मनः ॥

---

[1] पुराणपाठः. [2] श्रुतिवाकान्, श्रुतिवर्यान्. [3] विष्णौ दृष्ट्वा दयाधिका.
[4] कचानपि. [5] ममापीश.

त्वज्जटास्पर्शलब्धायां गङ्गायामस्थि भस्म च ।
यस्य तस्यापि वा मुक्तिः किम्वस्ति तव देहगम् ॥

विज्ञप्तिमयमस्यैवं तथास्त्विति तिरोदधे ।
संतुष्टमानसो ब्रह्मा स्थितः कालं प्रतीक्ष्य च ॥

तथैव तस्य वै शंभुः परान्ते समुपस्थिते ।
विधिं संहृत्य हरिणा तदस्थिस्रग्विभूषितः ॥

ननर्त परमं भावं स्वातन्त्र्यं चात्मनः स्मरन् ।
अनुगृह्यैवमीशानो ब्रह्माणं तं त्वमोचयत् ॥

एवं ब्रह्मा समाराध्य [1]यान्यानाप वराञ्छिवात् ।
सङ्ख्यामेषां च को वेत्ति मया यत्किञ्चिदीरितम् ॥

## महेन्द्रशिवपूजा

सूतः—(शं. सं. उप–६९.)

अतः परं [2] महेन्द्रेण शिवपूजा यदा यदा ।
[3] कृता स्वाभीष्टमुद्दिश्य [4] वर्ण्यन्ते तासु काश्चन ॥

बलं निहन्तु [5]कामस्तु पुरा शक्रः प्रतापवान् ।
कालहस्तीशमाराध्य संप्राप्य वरमुत्तमम् ॥

संहृत्य च बलं दैत्यं युद्धे तद्दोषशान्तये ।
[6] तमाराध्य पुनस्तत्र कृतार्थोऽभूच्छचीपतिः ॥

पुनः कदाचिच्छापेन दुर्वासस्यैव वज्रिणः ।
ऐरावते हयश्रेष्ठे चिन्तितार्थप्रदे मणौ ॥

कल्पवृक्षेषु सर्वेषु सुरभ्यां च च्युतेषु च ।
स्वर्गादम्भोधिमध्ये तु भीतभीतः शचीपतिः ॥

दारिद्र्यदुःखसन्तप्तः श्रीमद्वृद्धाचलेश्वरम् ।
समाराध्य ततः प्रार्थ्य कृपया तस्य पूर्ववत् ॥

पुनश्चैरावतं चाश्वमुच्चैःश्रवसमम्बुधेः ॥

---

[1] वरानाप च वांछितान्. [2] महेन्द्रस्य. [3] स्वाभीष्टफलमुद्दिश्य. [4] तासु काश्चन वर्ण्यये. [5] कामोऽत्र. [6] समाराध्य.

कल्पकानपि वृक्षांश्च कामधेनुं च सर्वदा ।
चिन्तामणिं तथा देव श्रियं पूर्ववदाप सः ॥

पुनः कदाचिदिन्द्रस्य गौतमस्यैव शापतः ।
सहस्रयोन्यां जातायां सर्वाङ्गेष्वेपि लज्जया ॥

काश्यां विश्वेशमाराध्य सहस्राक्षो बभूव सः ।
एकदा तु महेन्द्रस्य पादस्पर्शे मुनीश्वराः ॥

अशपन् केचनामुं ते देहोस्यान्यो भवत्विति ।
तेन शापेन सोऽप्यन्यदेहीभूत्वातिदुःखितः ॥

नीत्वानेकं ततः कालं केदारे परमेश्वरम् ।
समाराध्य ततः [1]प्राप्य पौर्विकं देहमात्मनः ॥

स्वर्गाधिपत्यमपि तच्चयुतं शंभोरनुग्रहात् ।
पुत्रार्थं च पुरा शंभुं काञ्चयामाराध्य वृत्रहा ॥

जयन्तं प्राप्य तनयं पुत्री हृष्टमना ह्यभूत् ।
कमलालयमभ्येत्य कदाचिन्मघवा पुनः ॥

समाराध्याप देवेशं मेघं वाहनमात्मनः ।
उच्चैश्श्रवसमश्वं च कृपया परमेशितुः ॥

पुण्डरीकपुरे पुण्ये पूजयित्वा महेश्वरम् ।
पुरा शतक्रतुः प्राप गाणापत्यमनुत्तमम् ॥

श्रीमत्कैलासमन्तेऽपि प्राप्तवाञ्छंकरप्रियः ।
तथा मरुत्वानपरः पूजयित्वा पुरद्रुहम् ॥

पुण्येऽरुणाचलक्षेत्रे शचीं प्राप प्रियां वराम् ।
रम्भादिदेवगणिकाक्रीडामाप मनोरमाम् ॥

एवं संपूज्य देवेशं फलं बहु शतक्रतुः ।
प्राप्तवांस्तत्र कतिचिदीरिता न मयाखिलम् ॥

एवं सुरैः कृताः पूजा वक्ष्येऽन्यैरपि शूलिनः ।

---

[1] पाप पूर्वकं.

## अर्कादिशिवपूजा

पुरार्कः कश्चिदीशानं शिवक्षेत्रेषु पूजयन् ।
जर्झरं स्वशरीरस्य वक्त्रं कुत्सितमप्यलम् ॥

त्यक्त्वावाप परं रूपं दिव्यमीश्वरवल्लभः ।
प्रापान्यो भानुमान्नेत्रे भद्रेणोत्पटिते पुरा ॥

दक्षाध्वरे महादेवं पूजयित्वा पुरुष्टुतम् ।
तथात्र यागे भग्नांश्च दन्तान्[1] प्राप परो रविः ॥
[2](तत्याज दोषमपरः सविता पूजयञ्छिवम् ।
रतिजं त्वृषिपत्न्याश्च जारभावेन वै पुरा ॥
छायासंभोगजाद्दोषान्मोक्षमाप परो रविः) ।
आदित्या एवमपरे स्वस्वदोषान्व्यपोह्य च ॥

प्रापिरे च निजं कामं रूपं च वपुषस्तथा ।
चन्द्रोऽपि साम्बमीशानं समाराध्य पुरातनम् ॥

दक्षस्य शापान्मोक्षं च संप्राप्य तदनन्तरम् ।
वीरभद्रपराघातशरीरस्य रुजं जहौ ॥

एवं बहूनि चन्द्रोऽपि दुरितानि जहौ [3]मुदा ।
[4]संप्राप स सुखं सर्वं पूजया शङ्करस्य वै ॥

दिशामधीशाः सर्वेऽपि पूजया परमेशितुः ।
संप्राप्य पुत्रानैश्वर्यं वाञ्छितं सकलं तथा ॥

संप्रापुस्त्यक्तदुरिताः सर्वेश्वरकृपाबलात् ।
तथाष्टौ वसवः पूजां देवदेवस्य शूलिनः ॥

कृत्वा स्वं स्वमवापुस्ते वाञ्छितं त्यक्तकिल्बिषाः ।
तथैव चाश्विनौ देवौ पूजयन्तौ महेश्वरम् ॥
[5](विशुद्धौ सर्वपापेभ्यः प्रापतुर्निजमीप्सितम् ।
रुद्राश्चैकादश तथा महात्मानो महेश्वरम् ॥

पूजयन्तोऽखिलं प्रापुर्वाञ्छितं ध्वस्तकिल्बिषाः ।
ऋषयः सप्तसङ्ख्याकाः समभ्यर्च्य महेश्वरम् ॥

---

[1] प्रापपरो हरिः. [2] पुराणपाठः. [3] पुरा. [4] संप्राप्य स्वप्सितं सर्वं. [5] पुराणपाठः.

सम्प्रापुः सकलं कामं विशुद्धा वीतकिल्बिषाः ।
प्रापतुः सकलन् कामान्विशुद्धान्वीतकिल्बिषौ ॥

सूतः—(शं. सं. उप. ७०)

( उत्तानपादसंभूतो ध्रुवो नाम नृपात्मजः)
ग्रहाश्च नव सूर्याद्याः सप्तविंशतितारकाः ।
मेषाद्या राशयो योगा विष्कम्भाद्याश्च भूसुराः ॥

करणानि च सप्तापि शकुनानि स्थिराण्यपि ।
विद्याधराश्च गन्धर्वा गरुडोरगराक्षसाः ॥

यक्षाः सिद्धा गुह्यकाश्च तथा किंपुरुषादयः ।
किन्नराश्च पिशाचाश्च दैत्याः प्रह्लादपूर्वकाः ॥

मनुष्याः पशवश्चैव पक्षिणो वृक्षपूर्वकाः ।
स्थावरा जङ्गमाश्चान्ये ये चान्ये जीवजन्तवः ॥

पर्वताश्च समुद्राश्च गङ्गाद्यास्सरितस्तथा ।
ब्रह्मर्षयो वसिष्ठाद्या नारदाद्याः सुरर्षयः ॥

ब्रह्माण्डानि च सर्वाणि सर्वैरावरणैः सह ।
अभ्यर्च्य देवदेवेशं लिङ्गमूर्तिं सनातनम् ॥

स्वं स्वं पदं च संप्राप्य तत्र स्वाभीष्टमेव च ।
दुरितानि च निर्धूय परां निर्वृतिमापिरे ॥

प्रत्येकं देवमाराध्य प्राप्ताभीष्टा मयोदिताः ॥
अतः परं प्रवक्ष्यामि संभूयाभ्यर्च्य शंकरम् ।

येऽनिष्टानि च निर्धूय स्वाभीष्टानि च लेभिरे ॥
तानहं संप्रवक्ष्यामि श्रूयतामवधानतः ।

### त्रिपुरवधः

पुरा पुराणि त्रीण्यासन्नयोरजतकाञ्चनैः ॥
तानि भूमौ नभोमध्ये निवसन्ति त्रिविष्टपे ।
तेषु तारकसंभूतास्त्रयः श्रेष्ठा महासुराः ॥

विद्युन्माली तारकाक्षः कमलाक्षश्च वीर्यवान् ।
षट्षष्टिकोटिसङ्ख्याकैरसुरै[1]र्निवसन्ति ते ॥

बाधयन्तश्च लोकांस्त्रीन् सुरान्निर्जित्य लीलया ।
तपश्चक्रुश्च ते पूर्वमुद्दिश्य चतुराननम् ॥

आस्थाय नियमं घोरमात्मनित्यत्वकाङ्क्षया ।
तपसैषां च निर्दग्धं त्रैलोक्यं सचराचरम् ॥

ततः प्रादुरभूद्ब्रह्मा तेषामग्रे सनातनः ।
हंसारूढोऽमरेन्द्राद्यैः परिवारितसन्निधिः ॥

अर्चयित्वा तु तं देवमसुरा वव्रिरे वरम् ।
अस्माकममराधीश देहि नित्यत्वमञ्जसा ॥

कृपया देवदेव त्वं चतुर्मुख नमस्तव ।
तानुवाच ततो ब्रह्मा यदि नित्यत्वमस्ति नः ॥

ततो दातुं वयं शक्ता [2]भवामो ह्यसुरोत्तमाः ।
नाविद्यमानं शक्तोऽस्मि दातुं दातापि दानवाः ॥

अहं च नैव नित्योऽस्मि विष्णुश्चान्येऽपि सत्तमाः ।
अनित्या एव ये केचिद्विबुधाश्च विना शिवम् ॥

नित्य एको जगत्यस्मिन्मृत्युञ्जय उदाहृतः ।
तस्मादन्यवरं यूयं [3]वृणुध्वं मत्सुरेतराः ॥

इति वाक्यं विधेः श्रुत्वा संमन्त्र्य तु परस्परम् ।
वव्रिरे प्रणिपत्यैनं नित्यत्वसदृशं वरम् ॥

अस्माकं त्रीणि देवेश भ्रातॄणां नगराणि वै ।
भूम्यन्तरिक्षस्वर्गेषु [4]स्वर्णदुर्वर्णलोहकैः ॥

तान्येवाब्दसहस्रान्ते संयोगं प्राप्नुवन्त्वज ।
क्षणमात्रं तदानीं यो न द्वितीय इति श्रुतः ॥

तेनैकेन [5]शरेणैव संहृतं चेत्पुरत्रयम् ।
ततो मृत्युरजास्माकं वरमस्त्वद्य देहि नः ॥

---

[1] निविशन्ति—पा. [2] असुरेन्द्र सुरोत्तमाः. [3] वृणुध्वमसुरेश्वराः. [4] स्वर्णायो-रौप्यवर्णकैः. [5] सुरेणैव.

ऐश्वर्यं चापि सुमहद्वीर्यं चासदृशं पुनः ।
असुराणां च सर्वेषां वासाः सन्तु पुनः पुरः ॥

स्वेच्छानुरूपसंचाराः पुराणां सन्तु नः प्रभो ।
इति दत्वा तु तत्सर्वं ब्रह्मलोकं गते विधौ ॥

यत्र यत्रासुरा लीना देवभीत्या ततः क्षणात् ।
सर्वे ते श्रुतवृत्तान्ता[1]स्तारकेयाः समेधिरे ॥

ददुस्तेभ्यश्च कन्याः स्वा नानोपायनपाणयः ।
स्वदुःखं च निवेद्यैभ्यः सुखमापुः सुरेतराः ॥

ततस्तु मायानिपुणो मयस्तैस्तु स्मृतः क्षणात् ।
संभूय तैश्च संमन्त्र्य संतोषेण महीयसा ॥

निर्ममे नगरीस्तेषामयोरजतकाञ्चनैः ।
गृहांश्च नवरत्नाढ्यान् गोपुराणि महान्ति च ॥

वीथीश्च विविधास्तत्र मणितोरणमण्डिताः ।
ते समालोक्य नगरीस्तिस्रो दैवेतरैः सह ॥

शशंसुश्च मयं भूयः सन्तोषमतुलं गताः ।
पप्रच्छुरात्मनां चापि तमेवैते हिताहितम् ॥

स तानुवाच हृष्टात्मा विद्युन्मालिमुखानयम् ।
युष्माभिश्च वरो लब्धो नित्यत्वसदृशोऽसुराः ॥

एक एव सुरश्रेष्ठो बाणेनैकेन मृत्युदः ।
सहस्रवत्सरस्यान्त इतीदं बुद्धिकौशलम् ॥

अस्मिन्नर्थेऽत्र श्रृण्वन्तु [2]मयोक्तं तु सुरेतराः ।
देवश्रेष्ठः स्मृतो लोके वेदे च परमेश्वरः ।

क्षिप्रेषुः स्थिरधन्वेति स्वधामा च जगत्पतिः ॥
आषाढः सहमानश्च भक्तो भक्तजनेषु सः ।?

तिग्मायुधश्च वेदेषु सर्वत्र परिपठ्यते ।
तस्य पूजा सदा कार्या नियमेनाखिलात्मभिः ॥

---

[1] तारकेयान् समीडिरे. [2] प्रोच्यमानं मया वचः.

उपसर्गाः क्षयं यान्ति शत्रवो व्याधयो ग्रहाः।
मनः प्रसन्नतां याति पूज्यमाने महेश्वरे॥
युष्माभिरर्चनीयोऽसौ रुद्रो बन्धुजनैः सह।
लिङ्ग[1]मूर्तिः सदाकालं त्र्यम्बकः पुष्टिवर्धनः॥
तस्मिन्संपूज्यमाने तु शङ्करे लोकशंकरे।
युष्माकं हिंसका ये तु हिंसिताः स्युश्च तेन ते॥
स शिवः सर्वजन्तूनां भुक्तिमुक्तिफलप्रदः।
तस्माद्यूयं तमेवेशमर्चयित्वा दिने दिने॥
लिङ्गमूर्तौ जगन्नाथं भक्तिभावेन [2]सुव्रताः।
ऐश्वर्यमसुरा नित्यं संप्राप्नुत सपर्यया॥
विजयश्च सदाकालं युष्मत्करतले स्थितः।
[3]तथैव ते प्रतिश्रुत्य वचनं तस्य चोमिति॥
[4]ययाचिरे च लिङ्गानि मयमैशानि तेऽसुराः।
प्रत्येकं स च लिङ्गानि कल्पयामास वै क्षणात्॥
गृहे गृहेऽर्चयन्तीशमसुरा भस्मभूषिताः।
रुद्राक्षाभरणैर्युक्ताः शान्ता दान्ता जितक्रुधः॥
इति तस्य वचः श्रुत्वा चक्रुर्दैत्या गृहे गृहे।
विद्युन्माली तारकाक्षः कमलाक्षश्च ते त्रयः॥
लिङ्गानि प्रतिगृह्यास्मात्स्वोचितानि मुदान्विताः।
प्रत्येकमर्चयामासुर्महाविभवविस्तरम्॥
सर्वे स्वाध्यायनिरतास्तपसा दग्धकिल्बिषाः।
भस्मरुद्राक्षसंपन्नतनवो विजितेन्द्रियाः।
एवमर्चयतां तेषामासन्नैश्वैर्यवृद्धयः॥
लोके वेदे प्रसिद्धाश्च शिवपूजारतात्मनाम्।
तरवः कल्पवृक्षाश्च गृहारामभवाश्च ते॥
तस्य गोष्ठे स्थिता गावो नन्दिन्यः कामधेनवः।
चिन्तामणिशिलास्तेषां प्राङ्गणेषु प्रतिष्ठिताः॥

---

[1] मूर्तौ. [2] सर्वदा. [3] तथा चैते. [4] वितेनिरे च लिङ्गानि मयेनैशानि तेऽसुराः।

[1]एतत्प्रत्यर्थिनामेवमेतेषामर्चतां शिवम् ।
निधयश्चैव शङ्खाद्याः सन्निधिं तत्र चक्रिरे ॥

गायन्तश्च हसन्तश्च नृत्यन्तश्चासुरोत्तमाः ।
नित्योत्सव अभूत्तेषां नित्यश्रीर्नित्यमङ्गलम् ॥

रथनागतुरङ्गादौ खेलन्ति स्माऽसुरोत्तमाः ।
आरामेषु [2]विचित्रेषु वापीषु च सरस्स्वपि ॥

नदीनदेषु सर्वत्र क्रीडन्तो निन्यिरे समाः ।
अमृतान्धोभिरनिशमादृतात्मक्रिया भृशम् ॥

रमन्ते स्म सपत्नीकाः सुरवन्दिभिरादृताः ।
तैः पुरैः सह यत्रेच्छा तत्र तत्र च रेमिरे ॥

मण्डले च सहस्रांशोः शीतांशो ऋक्षमध्यमे ।
ब्रह्मलोके विष्णुलोके भूलोके चान्तरिक्षके ॥

सुरेन्द्रलोके दिक्पाललोके सर्वत्र रेमिरे ।
य एतेषामधोभागे स्युर्जनाश्चरतां पुनः ॥

प्रतिमार्गं च ते सर्वे विनेशुर्भयपीडिताः ।
त्यक्त्वा लोकांस्तदा ब्रह्मविष्ण्वाद्या देवसत्तमाः ॥

महामेरुगिरिं प्राप्य मन्त्रयित्वा परस्परम् ।
कथमेतेऽत्र वध्याः स्युरस्माभिर्वरगर्विताः ॥

तानुवाच ततो विष्णुरर्चयन्त्यसुराः शिवम् ।
लिङ्गार्चनपरा लोके न शक्या जेतुमात्मभिः ॥

पतिव्रताश्च वै तेषां स्त्रियश्च पतिदेवताः ।
तस्मादजेयतां प्राप्ता असुरा बलवत्तराः ॥

तमूचुरमराः सर्वे भक्तिहीनाः सुरद्विषः ।
मयस्य वचनात्तक्ष्णः कुर्वन्त्येते शिवार्चनम् ॥

भक्तिहीनार्चनं शंभोरतिप्रीतिकरं न वै ।
वयं देवं समाराध्य सर्वे चापि सदाशिवम् ॥

तत्रेश्वराज्ञासंभूतैर्जेष्याम इति ताः पुनः ।

---

[1] पत्य प्रत्यक्षतामेकदैतेषा. [2] तटाकेषु.

तानुवाच हरिस्तेषां न जानीध्वे वरान् सुराः।
एकेनैवेषुणा नाशो नान्यथा यागसंभवैः॥
[1]उपसर्जनभूतैश्च जल्पध्वे किं वृथा सुराः।
तमाहुस्ते तु चैवं तद्भूतैर्यागोद्भवैर्वयम्॥
निरुध्य पीडयिष्यामः पुरेषु यदि शात्रवान्।
स्वेषु स्वेषु च लोकेषु वयं स्थातुं क्षमास्ततः॥
इति संमन्त्र्य ते सर्वे देवा विष्णुपुरोगमाः।
[2]देवान् सर्वान् समाहूय देवैः सार्धं जनार्दनः॥
उपसद्भिस्तदास्तौषीत् ध्यायन्नीशं जयप्रदम्।
तदा भूतानि चोत्थस्थुर्महान्ति बलवन्ति च॥
तानि चाज्ञापयामासुः संभक्षयत ताः पुरः।
असुरैः सह भूतानि गच्छतेति तदा मुदा॥
तानि संप्रेत्य भूतानि पुरेषु पुरवासिनः।
भूतिरुद्राक्षदीप्ताङ्गाञ्छिवपूजापरायणान्॥
असुरानखिलान् दृष्ट्वा नासन् जेतुं क्षमाण्यहो।
केवलं पुनरुद्यानमभ्येत्य कपिसङ्घवत्॥
फलानि भक्षयामासुः पनसाम्रमुखानि ते।
असुरास्तानि दृष्ट्वा ते जघ्नुर्लोष्टैश्च दण्डकैः॥
ततश्चान्योन्यमभवद्युद्धं भूतसुरद्विषाम्।
विनेशुस्तानि भूतानि महान्त्यपि शिवाज्ञया॥
असुरास्ते पुनर्ज्ञात्वा देवचेष्टामितीदृशीम्।
संप्राप्य देवलोकेषु लुण्ठनं चक्रिरे भृशम्॥
तत्र तत्र स्थितान् देवान्समाजघ्नुर्बलाधिकाः।
ततस्ते तत्र ये देवाः प्रहृता असुरैर्भृशम्॥
शीघ्रं मेरुं समासाद्य चाचख्युर्देवसन्निधौ।
ततश्च भृशदुःखार्ता विबुधा मेरुगह्वरे॥
तस्थुरन्ये सुराः प्रीत्या पुरेषु न्यवसंस्तथा।

---

[1] उपसद्भूतभूतैश्च. [2] वेदान्.

पुनश्च देववृत्तान्तं ब्रह्मविष्णुपुरोगमाः।
विज्ञापनं महेशाय कर्तुं कैलासमाययुः॥

प्रणम्य द्वारि देवस्य द्वारपालान् जनार्दनः।
अपृच्छद्विबुधैः सार्धं देवावसरमादरात्॥

नायं वोऽवसरो देवा गच्छतेति च ते गणाः।
तदुपश्रुत्य विबुधा नास्माकं गतिरन्यथा॥

स्थास्यामोऽवसरं यावत्तावदत्रैव सन्निधौ।
मन्त्रयित्वेति चान्योन्यमुच्चैर्हरहर प्रभो॥

शङ्करेश महेशान शिवेति परमेश्वरम्।
चुक्रुशुस्ते ततोद्यम्य बाहू दीनस्वराक्षरम्॥

क्रोशतस्तान् हरिब्रह्मप्रमुखान् गणपुङ्गवाः।
अताडयन् भृशं दण्डैर्वसन्तो द्वारस्थसंमिताः॥

ते ताड्यमानास्त्रिदशा विलीनाः सर्वतो भृशम्।
शनैः सरः समासेदुर्मानसं महदद्भुतम्॥

तत्र देवा हरिं प्रोचुः कथं कार्यं भविष्यति।
कथं विज्ञापनं कर्तुं शक्ताः स्मो देवसन्निधौ॥

स्थातुं नो न सहन्तेऽत्र द्वारपाला महौजसः।
तानुवाच हरिर्ब्रह्मप्रमुखानाकुलान् भृशम्॥

अस्मानत्र समासीनान् तूष्णीं न प्रहरन्ति ते।
आक्रोशतोऽस्मानालोक्य प्रहरन्त्येव तादृशाः॥

आक्रोशतः प्रभोर्द्वारि द्वारस्था नैव सहिष्णवः।
एतद्वचस्तु ते देवाः [1]समाकर्ण्याऽथ शार्ङ्गिणः॥

भर्त्सयन्तस्तदान्योन्यं पप्रच्छुश्च पुनर्हरिम्।
अतः परं कथं वा स्याद्धरेऽस्माकं मतिं वद॥

तानुवाच हरिर्यूयमेव सर्वे विचक्षणाः।
ब्रूत बुद्धिर्नचेदानीं मम किंचिन्न रोचते॥

---

[1] सत्यं संभाव्य वैष्णवम्—पा.

ततश्चिरं ते प्रत्येकं स्वं स्वं सम्प्रोचिरे मतम् ।
निश्चित्य च पुनः प्रोचुः सदस्यच्युतमाशु ते ॥
असुराः शिवपूजायां निरता भूतिभूषणाः ।
रुद्राक्षमालाभरणा लिङ्गार्चनपरायणाः ॥
सर्वे स्वाध्यायनिरता वैतानाग्निसमिन्धकाः ।
पतिव्रताः स्त्रियस्तेषां विशेषेण जनार्दन ॥
नैव शक्या निहन्तुं ते येषां भार्याः पतिव्रताः ।
शिवभक्ताश्च ये लोके भूतिरुद्राक्षभूषणाः ॥
किं तु विष्णो त्वया शक्या मायया दितिसंभवाः ।
त्यक्तलिङ्गार्चनाश्चेत्स्युः शिवस्तान् संहरिष्यति ॥
नो चेन्मेरुगुहास्माकं वासाय भवति ध्रुवम् ।
इति ब्रुवत्सु देवेषु तानुवाच पुनर्हरिः ॥
अहं यतिष्ये त्रिदशाः साधु युक्तमिदं मम ।
यूयं च मद्गिरा देवं यजध्वं तपसा शिवम् ॥
संहरिष्यति तान् देवः सर्वथा परमेश्वरः ।
इति नारदमाहूय मायी त्रिपुरमाप सः ॥
तत्र बुद्धः स्वयं जज्ञे विष्णुः शिष्योऽस्य नारदः ।
मोहयामासतुश्चोभावसुराणां कुलं क्षणात् ॥
मायामयेन शास्त्रेण वाचा मधुरया च तौ ।
वेषेण च विचित्रेण भोजनाद्यैश्च तादृशैः ॥
पतिव्रतानां स्त्रीणां च नानामायाविचक्षणौ ।
दर्शयित्वा च रत्नानि दिव्यान्याभरणानि च ॥
पातिव्रत्यं च तासां तौ नाशयामासतुर्गिरा ।

(सूतः)—(शं. सं. उप. ७१)—

तौ दृष्ट्वा तादृशौ पूर्वदेवा मायाविमोहिताः ॥
तयोरत्यन्तसंप्रीता बभूवुर्गतचेतनाः ।
अन्तेवासिनमस्यैते नारदं सुरशत्रवः ॥

रहः पप्रच्छुराहूय कोऽसौ कस्मादिहागतः ।
अस्मद्भाग्यवशादद्य किमागमनकारणम् ॥

स तानुवाच दृष्टोऽयं लोकालोकोऽस्य वासभूः ।
भुवनालोकनप्रीत्या संचरत्येकदा इति ॥

यत्र स्वचित्तं रमते तत्र तिष्ठत्ययं वशी ।
तत्र स्थित्वात्मविद्याया माहात्म्यं दर्शयत्यसौ ॥

उपदिष्टास्तु येऽनेन ते सर्वेऽभीष्टमाप्नुयुः ।
श्रुत्वा केचन तत्पार्श्वे परिवार्योपतस्थिरे ॥

तेषामभीष्टजातं च मायी दत्वा व्यमोहयत् ।
विचित्रवस्त्राभरणधनधान्यवराङ्गनाः ॥

तन्माहात्म्यसमुद्भूतवसून्यादाय गच्छतः ।
दृष्ट्वा दृष्ट्वा जनाश्चान्ये स्वयं चावृत्य तस्थिरे ॥

तेषामपि मनोभीष्टं वुद्धाचार्यो ददौ मुदा ।
पुनश्च नारदं दैत्या रहस्याहूय सादरम् ॥

एतस्य शिष्यभूतानामेवं किं सिद्धयोऽद्भुताः ।
भवन्ति वाथवा नैवमिति पृच्छत्सु तेष्वसौ ॥

नारदः प्रत्युवाचैनानहं शिष्येषु मूढधीः ।
ममापि सिद्धयः सन्ति यास्ताः पश्यत तत्क्षणम् ॥

कमण्डलोर्गृहीत्वाम्भः संस्मरन्मनसा वशी ।
तत्र ब्रह्मा च विष्णुश्च सर्वे चैत्र स्थिताः सुराः ॥

संबभूवुस्तदाचार्यं प्रणेमुस्ते च सादरम् ।
ब्रह्मादीन् क्षणमात्रेण कृत्वा चान्तर्हितान् सुरान् ॥

असुरेभ्योऽमृतं भूरि ददौ स्वमहिमागतम् ।
[1] पुनश्च यन्मनोभीष्टं ददौ शिष्योऽस्य नारदः ॥

पुनश्च बुद्धिं दैत्यानां मोहयामास मायया ।
अप्रार्थयंस्तदा चास्य शिष्यभावं दितेः सुताः ॥

---

[1] पुनस्तत्तन्मनो.

नारदः स तु तत्सर्वं विज्ञाप्य गुरवे मुदा ।
शिष्यांस्तान् कारयामास बहुशः प्रार्थयन्गुरुम् ॥
[1] शिक्षयामास तानेतान् सद्यस्त्यक्तशिवार्चनान् ।
तेषां चोपदिदेशासौ मामेव भजतासुराः ॥
अहं बुद्धोऽस्मि वै नाम्ना मन्नाम्नोऽस्तु जपस्तु वः ।
[2] मदर्चयैव युष्माकमभीष्टफल[3]सिद्धयः ॥
इह लोके तु यद्दृष्टं तदेवामुत्र यन्मृषा ।
शिवपूजा न वै कार्या न धार्यास्तु विभूतयः ॥
न च रुद्राक्षबीजानि मिथ्या वेदगिरोऽखिलाः ।
एतत्सर्वं परित्यक्तं यैस्ते शिष्या न चेतरे ॥
तेषां नैव च सिध्यन्ति सिद्धयः सर्वथैहिकाः ।
इति तस्य गिरा सर्वे परित्यक्तशिवार्चनाः ॥
तथा संत्यक्तरुद्राक्षविभूतिशिवशासनाः ।
पतिव्रताः स्त्रियस्ताश्च नारदेन विमोहिताः ॥
बभूवुः सततं मोहाज्जारासक्ता यथासुखम् ।
तस्य मायासमुद्भूतवस्त्राभरण[4]काङ्क्षया ॥
ताश्च त्यक्तशिवाचारा गृहकुड्याद्युपासकाः ।
संमार्जन्यर्चनानिष्ठाः पुंश्चल्योऽथ दिवानिशम् ॥
तदानीं नारदं बुद्धरूपो विष्णुरपृच्छत ।
असुराणां कुलं कृत्स्नमस्मन्मायावशं नु किम् ॥
नार्यश्च जारासक्ता नु मायया मोहितान्तराः ।
इति पृष्टस्तदा प्राह नारदः प्रणिपत्य तम् ॥
मायया मोहिताः स्वामिन्नत्यर्थमसुराधमाः ।
पुरत्रयेषु चैकैकं विनाद्य मधुसूदन ॥
एकः परमयोग्यन्यस्त्वेकः शीलपरः स्मृतः ।
विरक्ताख्यश्च योग्यन्यस्त्रयः पाशुपतोत्तमाः ॥

---

[1] दीक्षयामास. [2] मदर्चनैव. [3] सिद्धिदा. [4] भूषणाः.

उपमन्योर्भृगोश्चापि दधीचादपि तेऽधिकाः ।
अगस्त्यादपि च श्रेष्ठाः शिवभक्तिपरायणाः ॥

त्रयश्चैते महात्मानः शिवानुग्रहभागिनः ।
अस्मन्माया न बध्नाति बिसतन्तुरिव द्विपान् ॥

नारदोक्तं वचः [1] श्रुण्वन्ननुस्मृत्य हरिर्हृदा ।
तेभ्यस्तानपरान् प्राह न संभाष्यास्त्रयोऽप्यमी ॥

युष्माभिर्मद्गिरा शिष्यैर्मत्प्रियैर्भूतिकाङ्क्षिभिः ।
तैः साकं कलहो मास्तु शिवपूजापरैस्त्रिभिः ॥

इति सर्वान्महाविष्णुर्मोहयित्वा स्वमायया ।
स्वांशमन्यं प्रतिष्ठाप्य बुद्धं बुद्धिविमोहकम् ॥

नारदं च समाहूय निर्जगाम पुरत्रयात् ।
ततः कैलासमचलमारुरुक्षुः समीपगः ॥

न शशाक सदेवर्षिर्दुष्प्रापमकृतात्मभिः ।
आरोढुं तं गिरिश्रेष्ठमागस्वी गरुडध्वजः ॥

अस्माभिः सुरकार्यार्थं [2] मसुरा नास्तिकाः कृताः ।
(विहीना भस्मरुद्राक्षशिवार्चाभिः कृता इमे)

तेन दोषस्तु सुमहान् सञ्जातोऽत्र न संशयः ।
सदोषैर्नैव शक्यः श्रीकैलासः स्मर्तुमात्मभिः ॥

इति तद्दोषशान्त्यर्थमीशमुद्दिश्य केशवः ।
नारदेनातपत्तीव्रं तपो ध्यायन्हृदेश्वरम् ॥

ततः प्रसन्नो भगवाञ्छङ्करो लोकशंकरः ।
विष्णुं सनारदं प्राह मेघगम्भीरया गिरा ॥

अहो धिग्धिग्युवां [3] मूढौ सुरकार्यार्थमप्ययम् ।
[4] मद्भक्तैर्मोचितो मार्गो भवद्भ्यामविशङ्कया ॥

तस्मात्कैलासमारोढुं भवद्भ्यां नैव शक्यते ।
अतस्त्वं सर आसाद्य मानसं विबुधैः सह ॥

---

[1] श्रुण्वन्नमस्कृत्य. [2] मसुराः सुरसंमताः. [3] शार्ङ्गिन्. [4] मद्भक्ता मोचिता मार्गाद्भव.

कुरु कार्यं सुरेन्द्राणां ब्रुवन्नन्तर्हितः शिवः।
तथेति तौ समाराध्य विबुधैः सत्कृतौ भृशम् ॥

ऊचतुः सर्ववृत्तान्तमसुराणां पुरत्रये।
त्यक्तवन्तः शिवाचारमसुरा माययावयोः ॥

अस्माकमनुकूलेन विधिना मयभार्गवौ।
कृत्वा कलहमन्योन्यं कृतशापौ शिवाज्ञया ॥

[1] तच्छान्त्या ईशमुद्दिश्य कर्तुकामौ महत्तपः।
हिमवन्तं गिरिं प्राप्य कुरुतः सुरसत्तमाः ॥

तस्मान्मम महामायाजालबद्धाः सुरेतराः।
तदिदानीं वयं सर्वे संभूय श्रद्धयात्र वै ॥

प्रसादयामो देवेशं पार्वतीपतिमव्ययम्।
इति सर्वाननुज्ञाप्य ब्रह्मादीन् गरुडध्वजः ॥

निमग्नः सलिले तस्मिन् सरसो मानसस्य सः।
जजाप स महारौद्रान्मन्त्रानन्तर्जले स्थितः ॥

ब्रह्मादयोऽपि विबुधाः परिवार्य मधुद्विषम्।
तेपुस्तपो महत्तीव्रमूर्ध्वहस्ता जलान्तरे ॥

ततः प्रसन्नो भगवांश्चन्द्रखण्डशिरोमणिः।
प्रादुर्बभूव देवानामग्रे देव्या गणेश्वरैः ॥

तुष्टुवुश्च महादेवं सर्वे हृष्टतनूरुहाः।
तानालोक्य सुरश्रेष्ठानाह मुग्धेन्दुशेखरः ॥

यूयं मां तपसा प्रीतं चक्रद्धे संयताः सुराः।
इतः परं पाशुपतव्रतं चरथ मा चिरम् ॥

अचिराद्वै मनोभीष्टं भविष्यति न संशयः।
इति ब्रुवति देवेशे चन्द्रखण्डशिरोमणौ ॥

अकस्मादङ्कमासीनः शरजन्मा ननर्त ह।
तदानीं जगतां माता देवदेवं त्रियम्बकम् ॥

---

[1] तच्छान्तमीश.

नीलाम्बुजेन सन्ताड्य भुजे देवस्य विस्मिता ।
कुमारं नृत्यमानं त्वं पश्य पुत्रवतां वर ॥

इति देवीगिराऽऽरोप्य नृत्यमानमुरः स्वकम् ।
करतालरतः शंभुर्नृत्त बालेत्युवाच ह ॥

ततो लीलालयो बालो ननर्तोरसि शूलिनः ।
नृत्तेति सर्वाधिपतेर्गिरा सर्वं ननर्त तत् ॥

जगज्जगत्पतेराज्ञा केन लङ्घ्या जगत्त्रये ।
[1]देवाश्च विष्णुब्रह्माद्या नृत्यन्ति स्मावशान्तराः ॥

तोषितौ पितरौ पुत्रं समालिङ्ग्य परस्परम् ।
आघ्राय मूर्ध्नि हस्ताभ्यामादायात्मोरसा शिवः ॥

पुत्रमन्तःपुरं देवाः विवेश परया मुदा ।
ततः सब्रह्मका देवाः सनारायणकास्तदा ॥

खिन्नाः परस्परं प्रोचुरधुनाऽकृतिनो सुराः ।
दृष्ट्वापि सर्वलोकेशं न कार्यं नः समापितम् ॥

वयं व्रतं पाशुपतं देवप्रोक्तं च कुर्महे ।
इति चक्रुः समाराध्य शिवं पाशुपतं व्रतम् ॥

श्रद्धया परया देवा विरजाभस्मभूषिताः ।
ततश्चित्तेऽवधार्यैत[2]त्परात्मा व्रततोषितः ॥

नन्दिनं गणपश्रेष्ठमादिदेश जगद्गुरुः ।
तिस्रः पुरोऽद्य संहर्तुं साधनं नैव विद्यते ॥

देवेभ्यः कथयाशु त्वं रथं सशरकार्मुकम् ।
सङ्ग्रामसाधनं यद्यत्सर्वं संपादयन्त्विति ॥

तथेति निर्गतो नन्दी सर्वं शंभुवचोऽब्रवीत् ।
सुरानाह्लादयन्वाचा पुनः शुद्धान्तमासदत् ॥

शैलादौ निर्गते देवाः शंभोः सङ्ग्रामसाधनम् ।
रथं च सारथिं चाश्वान् सशरं च धनुर्महत् ॥

---

[1] देवा विष्णुमुखाद्याश्च. [2] परमात्मा स तोषितः—पा.

ध्यात्वा तु सुचिरं तत्र संमन्त्र्य च परस्परम् ।
ईश्वरार्हो महांश्चापो मेरुरेवात्र काञ्चनः ॥

सर्पराजोऽत्र मौर्वीत्वे वाय्वग्निशशिकेशवान् ।
पत्राणि च फलाग्राणि चक्रुर्देवान् महत्तमान् ॥

अधिष्ठानं च विन्ध्याद्रिमाश्रयं केसराचलम् ।
भूलोकमासनं तस्य रथस्य सुमहीयसः ॥

आकाशोऽस्यावकाशोऽभूच्चक्रे च शशिभास्करौ ।
रथ्या वेदा ऋग्यजुषसामाथर्वादयोऽमलाः ॥

वसिष्ठाद्या मुनिश्रेष्ठाः स्वस्तिवाचनतत्पराः ।
वन्दिनः किन्नरा यक्षाः सिद्धाः किंपुरुषाः परे ॥

गन्धर्वा गरुडाश्चान्ये चारणाद्याः कवीश्वराः ।
शैला अष्टौ महानागाः समुद्रा मेघपङ्क्तयः ॥

वितानानि च रत्नानि भूषणान्यस्य तेऽभवन् ।
मन्त्राः कला धेनवश्च निधयः संपदोऽस्य तु ॥

यज्ञाः कर्माणि धर्माश्च कालः कल्पाश्च कीलकाः ।
दिनानि मासर्त्वयनं योगाश्च करणानि च ॥

क्षणा मुहूर्ताः काष्ठाश्च रथकीला महत्तराः ।
निर्मितः स्यन्दनस्त्वेवं तस्याभूत्सारथिर्विधिः ॥

प्रणवोऽस्य कशा क्लृप्ता रथ्यवेदाश्वतोदकाः ।
क्षीराब्धिनिलयो विष्णुः [1] शरश्चैव सुतेजसः ॥

वैकुण्ठनिलयः शार्ङ्गी शिवस्यानुचरो महान् ।
मेरौ मनोवतौ ब्रह्मा सारथिः प्रणवः कशा ॥

सत्यलोकाधिपो ब्रह्मा शिवस्य परिचारकः ।
देवाश्च सैनिकाः सर्वे शक्राद्याः पृतनाधिपाः ॥

तपस्विनो योगिनश्च बभूवुः स्वस्तिवाचकाः ।
[2] तदा विष्णुरथासाद्य कैलासान्नन्दिनोऽन्तिकम् ॥

---

[1] शरश्चैव तु तेजनम्–पा. [2] ततः शार्ङ्गी समासाद्य–पा.

व्यजिज्ञपच्च वृत्तान्तमिममस्मै प्रणम्य च ।
नन्दी च समये देवं प्रणम्योवाच साञ्जलिः ॥

श्रुतविज्ञप्तिरीशोऽथ देव्या सह दयानिधिः ।
वृषमारुह्य सुश्वेतं रथान्तिकमुपासदत् ॥

दृष्ट्वास्तुवन् तदा साम्बं देवा विष्णुपुरोगमाः ।
तत्स्तोत्रमुदितो देवो वृषादुन्नीय सागजः ॥

आदाय सशरं चापं स्यन्दने निदधे पदम् ।
तस्मिन् कुर्वति देवेशे पदं [1] लोकमये रथः ॥

भारासहः पपाताधस्तदा पटपटध्वनिः ।
बिभ्युः सब्रह्मका देवाः सनारायणकास्तदा ॥

नारायणो महायोगी वृषो भूत्वा दधौ रथम् ।
सोऽतिभारभराक्रान्तश्छिन्ननेत्रः पपात ह ॥

वमन्रुधिरमास्येन शिवं भीतोऽस्तुवद्धरिः ।
ब्रह्मादयोऽपि देवेशमस्तुवन्नूर्ध्वबाहवः ॥

ततः कृपानिधिः शंभुर्वाताद्विष्णोर्बलं ददौ ।
क्षणेन ककुदा देवरथं दध्रे वृषो महान् ॥

यथापूर्वं रथस्त्वासीदाज्ञया परमेशितुः ।
तस्थौ देव्या महादेवः स्यन्दने विश्वशंभवे ।

तदा नारायणोऽस्तौषीदग्रे स्थित्वामरैः समम् ॥
[2]ततः प्रोवाच तं विष्णुं शिवः शीतांशुभूषणः ।
इष्टान् वृणु महाविष्णो [3]प्रसन्नोऽस्मि हृदि स्थितान् ॥

शीघ्रं च निर्विशङ्कोऽद्य ददाम्येव मदाज्ञया ।
[4]महान्यज्ञो महाविष्णो मदर्थेऽनुष्ठितस्त्वया ॥

ब्रुवन्तमेवमीशानं वरमप्रार्थयद्धरिः ।
शक्तौ तु विद्यमानायां मूलशक्तिरहं यथा ॥

---

[1] लोकमधो रथः–पा. [2] प्रीतः. [3] प्रसन्नात्महृदि, मत्प्रसन्नाध्दृदि स्थितान्–पा.
[4] मदाज्ञप्तो.

तथैव वृषभे देव वृषभः स्यां जगत्पते ।
अयमेव वरः श्लाघ्यो मम नान्यो जगद्गुरो ॥

भक्तिस्त्वयि सदाकालं भक्तवत्सल मेऽस्तु सा ।
ददौ तदा वृषत्वं च भक्तिं च हरये शिवः ॥

तदालोक्य सुराः सर्वे प्रहर्षमतुलं ययुः ।
अन्तरायोद्यतं देवास्तदानर्चुर्गजाननम् ॥

भक्ष्यैर्भोज्यैः फलैरन्यैरीश्वरोऽप्यात्मनन्दनम् ।
(ब्रह्माणं सारथिं देवश्चोदयाश्वानितीश्वरः ॥

प्रोवाचास्याज्ञया ब्रह्मा चोदयामास वाजिनः ।)
अताडयन् गणाध्यक्षा भेरीपटहडिण्डिमान् ॥

(गोमुखान् शङ्खश्रृङ्गाणि तिमिलान्पणवादिकान् ।
काहलानि मनोज्ञानि चिह्नानि विविधानि च ॥)

प्रास्थानिको महानादो वाद्यानां न्यकृतार्णवः ।
ककुभो बधिरीकुर्वन् जजृम्भे दिक्ष्वनर्गलः ॥

देवो देवान् गणेन्द्रांश्च प्रमथान् पादचारिणः ।
आज्ञापयन्मुदात्मीयवाहनारोहणाय तान् ॥

आज्ञया ते हरिब्रह्मप्रमुखा [1]वाहनं स्वकम् ।
गरुडं कैटभारातिरारुह्यानुचरैः सह ॥

सिषेवे हंसमारुह्य वेधा नागं शचीपतिः ।
सिषेविरे दिशामीशाः स्वस्ववाहनमाश्रिताः ॥

विघ्नेश्वरमहासेनौ विविधैर्गणपैः सह ।
मयूरमूषकारूढौ दक्षिणोत्तरपार्श्वयोः ॥

अग्रे नन्दीश्वरः श्रीमान्वेत्रमादाय काञ्चनम् ।
सर्वानुत्सारयामास सन्निधौ मार्गरोधिनः ॥

ययौ प्रीतमना देवः स्यन्दनेनाम्बया सह ।
पुराणि हन्तुं दैत्यानामुद्दिश्य त्रीणि शङ्करः ॥

---

[1] वाहनमाश्रयन्,

देवाश्च मुनयश्चान्ये सिद्धविद्याधरादयः ।
रथारूढं प्रभुं साम्बं रथमण्डनमण्डितम् ॥

दृष्ट्वापुर्जन्मसाफल्यं चक्षुष्मत्ताफलं महत् ।
वयमेते कृतार्थास्मो महीरथगतं शिवम् ॥

[1]द्रष्टुं देव्यार्जितं पुण्यं पुरा किंवेति चोचिरे ।
शृण्वन् कथयतामीशो वाचः श्रोत्रसुखा ययौ ॥

पुराणि त्रीण्यरातीनां हन्तुं नाकसदां प्रभुः ।

देवं तदा देवमुनीन्द्रयोगिनो
गणेश्वरास्तुम्बुरुनारदादयः ।
पत्न्यश्च तेषां परिकर्मलालसाः
स्वस्तिब्रुवाणाः प्रजगुश्च मङ्गलम् ॥

(शं-सं-उप-७२)

अथ दैत्या महाविष्णुमायया मोहिता भृशम् ।
त्यक्त्वा विभूतिरुद्राक्ष शिवपूजां श्रुतिं स्मृतिम् ॥

बुद्धाचाररता नित्यं दृष्टप्रत्यक्षकाङ्क्षिणः ।
स्त्रियो दृष्टफलार्थिन्यो वर्धक्यो नारदोक्तिभिः ॥

एवमेतेषु सर्वेषु सस्त्रीकेषु पुरत्रये ।
बभूवुर्दुर्निमित्तानि तेषां चैव गृहे गृहे ॥

नेशुः सुरभयश्चिन्तामणयः कल्पभूरुहाः ।
संयोगसमयश्चैषां सहस्राब्दान्तसंभवः ॥

समभूत्समयः शंभौ प्रीते किं वात्र दुष्करम् ।
तासां पुरां समायोगं दृष्ट्वा विष्णु[2]मुखाः सुराः ॥

सन्तुष्टमनसः शीघ्रं शरमोक्षं तदार्थयन् ।
आलोक्य तेषामाह्लादमाकुलत्वं च शूलभृत् ॥

स्मितमीषच्चकाराशु विलोक्य गिरिजामुखम् ।
आन्दोलयन्महाविष्णुप्रमुखामरसायकम् ॥

[3] तिष्ठन्मेरुधनुष्कोटौ सव्यपाणिरनादरात् ।

---

[1] दृष्ट्वादैवार्जितं. [2] मुखामराः–पा. [3] न्यस्तमेरुधनुष्कोटिसव्यं.

पुरत्रयं तदा नेत्रत्रयापाङ्गैर्व्यलोकयत् ।
तन्मन्दहाससंभूतकृशानुकणतेजसि ॥

पतङ्गास्तत्पुराण्यासन्नेत्राग्नेरिव मन्मथः ।
तदा देवकरान्दोललालिताः सुरपुङ्गवाः ॥

वाय्वग्निशशिगोविन्दा [1] मनसासुरयोधिनः ।
स्मितदग्धाः पुरो दृष्ट्वा प्रार्थयन् स्वात्ममोक्षणम् ॥

तथेति मेरुकोदण्डं सज्यं कृत्वा त्वनादरम् ।
नादयन् ज्यामहिमयीमङ्गुल्यग्रेण चामृशत् ॥

शरासने ज्यामारोप्य शरमास सुरात्मकम् ।
तच्छराग्निः स्मिताग्निश्चादहतां त्रिपुरं क्षणात् ॥

स्मिताग्निकणसन्दग्धवपुषस्त्रिदशारयः ।
[2] पूर्वं बुद्धगिरस्ते तु शिवपूजा परा यतः ॥

गाणापत्यमतो भूयः प्रापिरे सर्व एव ते ।
शंभोः पार्श्वे तदातिष्ठन् प्रमथैश्चापि नन्दिताः ॥

ये मोहं नैव संप्रापुस्त्रयस्तेऽसुरसत्तमाः ।
अपरित्यक्तरुद्राक्षविभूतिशिवपूजनाः ॥

पुरेषु दह्यमानेषु स्वगृहैरपि ते यथा ।
अग्निमध्येर्णवस्यान्तरूषुः शंसन्तमीश्वरम् ॥

वयं भाग्यवशान्नाद्य बुद्धमायाविमोहिताः ।
यदि स्यामो यथैवैते भविष्यामो न संशयः ॥

तं कालं निन्यिरे शंभो शिवेति परिकीर्त्य ते ।
[3] ततस्तु शिवमभ्येत्य त्रयः प्राञ्जलयोऽस्तुवन् ॥

[4] सर्वेश्वरं नमन्तश्च सर्वे हृष्टतनूरुहाः ।
रथस्थः शङ्करो भक्तांस्तानुवाच [5] जगत्प्रभुः ॥

अतीव यूयं मद्भक्ता आयुष्मन्तो यशस्विनः ।
असुराः किमु वोऽभीष्टं ब्रूत दातास्म्यहं च तत् ॥

---

[1] दम्रमुखा सुरः—ग. [2] पूर्वं बुद्धगिरस्तोतुः—पा ? पूर्वं बुद्धशिरा त्यक्ता इति स्यात्. [3] ततस्ते देवमभ्येत्य. [4] प्रणमन्तश्च बहुधा हृष्टसर्वतनूरुहाः. [5] स्मयन्प्रभुः.

वव्रिरे ब्रुवतीशे त एवं वरमनुत्तमम् ।
वयं कैलासशिखरे भवद्द्वारि दयानिधे ॥

द्वारपाला भविष्यामः शुद्धान्ते द्वारनायकाः ।
[1] प्रार्थितस्त्विवति तान्देवो द्वास्थानीशश्चकारह ॥

सुदुर्लभस्त्वीदृशो हि वरो लोकेऽखिलात्मनाम् ।
देवानामथ दत्वेष्टमीशे त्वन्तर्हिते पुनः ॥

ते च विष्णुमुखा देवाः समयं चक्रिरे तदा ।
अद्यप्रभृति लोकेऽस्मिन् सदेवासुरमानुषाः ॥

लिङ्गार्चनं न कुर्वन्ति ये देवा मुनयोऽपि च ।
मनुजाः सिद्धगन्धर्वा ये वा के वा नराधमाः ॥

भस्मरुद्राक्षरहिताः पाषण्डसरणिं गताः ।
असंभाष्याश्च तेऽस्माभिरपि धर्मरतैर्भृशम् ॥

संभाषणं च सम्बन्धं श्रौतस्मार्तादिकर्म वा ।
ये तैः साकं प्रकुर्वन्ति तेषां नैव तु निष्कृतिः ॥

सत्यमेव मृषा नैतदिति शप्त्वा तदा सुराः ।
तत्रैव सुचिरं कालं स्थित्वा लिङ्गार्चनं परम् ॥

कृत्वा पुनर्जपन्तस्ते सर्वे जग्मुर्यथागतम् ।
स्वं स्वं लोकं समासाद्य चार्चयामासुरीश्वरम् ॥

पूजयन्तोऽसराः पूर्वं शिवं चाबुद्धिपूर्वकम् ।
[2] अवध्याश्च चिरं कालं पश्चात्त्यक्तशिवार्चनाः ॥

शिवेनैव हताश्चान्ते गाणापत्यमवाप्नुवन् ।
अत्यक्तशिवमार्गा ये भूयस्ते द्वारपालकाः ॥

शङ्करस्यालये साक्षात्कैलासे तेऽभवन्द्विजाः ।
एवं संभूय विबुधैर्विजयाय सुरद्विषाम् ॥

अभ्यर्च्य विष्णुप्रमुखैररयो निर्जिता हि तैः ।
तस्मात्सर्वप्रयत्नेन पूजा कार्या शिवस्य तु ॥

---

[1] प्रार्थयत्स्त्विति. एवं प्रार्थयतस्तांस्तु द्वा—पु. पा. [2] अवध्यतां सुरैः प्राप्ताः.

इत्थं संभूय देवैः परमशिवपदाभ्यर्चनालब्धसौख्यै-
र्वीर्यं सौख्यं जयःश्रीर्विविधमपि परं भोगमोक्षौ च लब्धौ।
तस्मान्मर्त्यैरमर्त्यैरसुरमुनिगणैः सिद्धगन्धर्वमुख्यै-
र्भक्त्या लिङ्गे शिवार्चा विधिवदनुदिनं श्रद्दधानैर्विधेया॥

## ऐहिकफलदकर्म

[1] (उपमन्युः)—(वाय-सं-उत्तर-३२)

(एतत्ते कथितं कृष्ण कर्मेहामुत्र सिद्धिदम्।
क्रियातपोजपध्यानसमुच्चयमयं परम्॥)

अथ वक्ष्यामि शैवानामिहैव फलदं नृणाम्।
पूजाहोमजपध्यानतपोदानमयं महत्॥

तत्र संसाधयेत्पूर्वं मन्त्रं मन्त्रार्थवित्तमः।
दृष्टसिद्धिकरं कर्म नान्यथा फलदं यतः॥

सिद्धमन्त्रोऽप्यदृष्टेन प्रज्वलेन च केनचित्।
प्रतिबन्धफलं कर्म न कुर्यात्सहसा बुधः॥

तस्य तु प्रतिबन्धस्य कर्तुं शक्येह निष्कृतिः।
परीक्ष्य शकुनाद्यैस्तदादौ निष्कृतिमाचरेत्॥

योऽन्यथा कुरुते मोहात्कर्मैहिकफलं नरः।
न तेन फलभाक् स स्यात्प्राप्नुयाच्चापहास्यताम्॥

अविस्रब्धो न कुर्वीत कर्म दृष्टफलं क्वचित्।
न खल्वश्रद्दधानः स्यान्नाश्रद्धः फलमृच्छति॥

नापराधोऽस्ति देवस्य कर्मण्यपि तु निष्फले।
यथोक्तकारिणां पुंसामिहैव फलदर्शनात्॥

साधकः सिद्धमन्त्रश्च निरस्तप्रतिबन्धकः।
विश्वस्तः श्रद्दधानश्च [2] कुर्वन्नाप्नोति तत्फलम्॥

---

[1] चतुर्दशोपदेशमध्ये ऐहिकफलदकर्मनिरूपणस्यासङ्गतत्वेऽपि मुद्रितलिखितपुस्तकाननुसृत्य मुद्रापितम्. [2] कुर्वन्नैवास्ति निष्फलः.

[1]अथवा तत्फलावाप्त्यै ब्रह्मचर्यरतो भवेत्।
रात्रौ हविष्यमश्नीयात्पायसं वा फलानि वा॥

हिंसादि यन्निषिद्धं स्यान्न कुर्यान्मनसापि तत्।
सदा भस्मानुलिप्ताङ्गः सुवेषश्च शुचिर्भवेत्॥

इत्थमाचारवान्भूत्वा स्वानुकूले शुभेऽहनि।
पूर्वोक्तलक्षणे देशे पुष्पदामाद्यलङ्कृते॥

आलिप्य [2]शकृता भूमिं हस्तमानावरां यथा।
[3]विलिखेत्कमलं भद्रं दीप्यमानं स्वतेजसा॥

तप्तजाम्बूनदमयमष्टपत्रं सकेसरम्।
मध्ये कर्णिकया युक्तं सर्वरत्नैरलङ्कृतम्॥

स्वाकारसदृशेनैव नालेन च समन्वितम्।
तादृशे स्वर्णनिर्माणे कन्दे सम्यक् प्रतिष्ठितम्॥

तत्राणिमादिकं सर्वं संकल्प्य मनसा पुनः।
रत्नजं वाथ सौवर्णं स्फाटिकं वा सलक्षणम्॥

लिङ्गं सवेदिकं तत्र स्थापयित्वा विधानतः।
तत्रावाह्य यजेद्देवं साम्बं सगणमव्ययम्॥

तत्र माहेश्वरी कल्प्या मूर्तिर्मूर्तिमतः प्रभोः।
चतुर्भुजा चतुर्वक्त्रा सर्वाभरणभूषिता॥

शार्दूलचर्मवसना किंचिद्विहसितानना।
वरदाभयहस्ता च मृगटङ्कधरा यथा॥

अथवाष्टभुजा चिन्त्या चिन्तकस्य यथारुचि।
तथा त्रिशूलपरशुखड्गवज्राणि दक्षिणे॥

वामे पाशाङ्कुशौ तद्वत्खेटं नागं च बिभ्रती।
बालार्कसदृशप्रख्या प्रतिवक्त्रं त्रिलोचना।
तस्याः पूर्वमुखं सौम्यं स्वाकारसदृशप्रभम्॥

---

[1] अथ यावत्फलावाप्ति. [2] गोशकृतेत्यर्थः. [3] निक्षिपेत्सकलं भद्रं.

दक्षिणं नीलजीमूतसदृशं घोरदर्शनम्।
उत्तरं विद्रुमप्रख्यं नीलालकविभूषितम् ॥
पश्चिमं पूर्णचन्द्राभं सौम्यमिन्दुकलाधरम् ॥
तस्याङ्कमण्डलारूढा शक्तिर्माहेश्वरी परा।
महालक्ष्मीरिति ख्याता श्यामवर्णा मनोहरा ॥
मूर्तिं कृत्वैवमाकारां सकलीकृत्य च क्रमात्।
मूर्तिमन्तमथावाह्य यजेत्परमकारणम् ॥
स्नानार्थं कल्पयेत्तत्र पञ्चगव्यं तु कापिलम् ॥
पञ्चामृतं च पूर्णानि बीजानि च विशेषतः।
पुरस्तान्मण्डलं कृत्वा रत्नचूर्णाद्यलङ्कृतम् ॥
कर्णिकायां प्रविन्यस्येदीशानकलशं पुनः।
सद्यादिकलशान् पश्चात्परितस्तस्य कल्पयेत् ॥
ततो विद्येशकलशानष्टौ पूर्वादितः क्रमात्।
तीर्थाम्बुपूरितान् कृत्वा सूत्रेणावेष्ट्य पूर्ववत् ॥
पुण्यद्रव्याणि निक्षिप्य समन्त्रं सविधानकम्।
दुकूलाद्येन वस्त्रेण समाच्छाद्य समन्ततः ॥
सर्वत्र मन्त्रं विन्यस्य तत्तन्मन्त्रपुरस्सरम्।
स्नानकाले तु संप्राप्ते सर्वमङ्गलनिस्वनैः ॥
पञ्चगव्यादिभिश्चैव स्नापयेत्परमेश्वरम्।
ततः कुशोदकाद्यानि स्वर्णरत्नोदकान्यपि ॥
गन्धपुष्पादिसिद्धानि मन्त्रसिद्धानि च क्रमात्।
उद्धृत्योद्धृत्य मन्त्रेण तैस्तैः स्नाप्य महेश्वरम् ॥
गन्धपुष्पादि दीपान्तं पूजाकर्म समाचरेत्।
पलावरः स्यादालेप एकादशपलोत्तरः ॥
सुवर्णरत्नपुष्पाणि पुष्पाणि सुरभीणि च।
नीलोत्पलान्युत्पलानि बिल्वपत्राण्यनेकशः ॥
कमलानि च रक्तानि श्वेतान्यपि च संभवे।
कृष्णागरूद्भवो धूपः सकर्पूराज्यगुग्गुलः ॥

कपिलाघृतसंसिक्ता दीपाः कर्पूरवर्तिजाः ।
पञ्चब्रह्मषडङ्गानि पूज्यान्यावरणानि च ॥

निवेद्य पयसा सिद्धं सगुडाज्यं महाचरु ।
पाटलोपत्लपत्राद्यैः पानीयं च सुगन्धिकम् ॥

पञ्चसौगन्धिकोपेतं ताम्बूलं च सुसंस्कृतम् ।
सुवर्णरत्नसिद्धानि भूषणानि विशेषतः ॥

वासांसि सुविचित्राणि सूक्ष्माणि च नवानि च ।
दर्शनीयानि देयानि गानवाद्यादिभिः सह ॥

जपस्तु मूलमन्त्रस्य लक्षः परमसङ्ख्यया ।
[1]एकावरा त्र्युत्तरा च पूजा फलवशादिह ॥

दशसङ्ख्यावरो होमः प्रतिद्रव्यं शतोत्तरः ।
घोररूपः शिवश्चिन्त्यो मारणोच्चाटनादिषु ॥

शिवलिङ्गे शिवाग्नौ च (ह्यन्यासु प्रतिमासु च ।
चिन्त्यः सौम्यतनुः शम्भुः कार्ये) शान्तिकपौष्टिके ॥

आयसौ स्रुक्स्रुवौ कार्यौ मारणादिषु कर्मसु ।
तदन्यत्र तु सौवर्णौ शान्तिकार्येषु कृत्स्नशः ॥

दूर्वया घृतगोक्षीरमिश्रया मधुना तथा ।
चरुणा सघृतेनैव केवलं पयसापि वा ॥

जुहुयान्मृत्युविजये तिलै रोगोपशान्तये ।
घृतेन पयसा चैव कमलैर्वाथ केवलैः ॥

समृद्धिकामो जुहुयान्महादारिद्र्यशान्तये ।
जातीपुष्पेण वश्यार्थी जुहुयात्सघृतेन तु ॥

[2]घृतेन करवीरैश्च कुर्यादाकर्षणं द्विजः ।
तैलेनोच्चाटनं कुर्यात्स्तम्भनं मधुना पुनः ॥

स्तम्भनं सर्षपेणापि लशुनेनैव पातनम् ।

---

[1] एकवारं त्रिवारं च. [2] करवीरैस्तु जुहुयादाकर्षणपरो जनः ।

ताडनं रुधिरेण स्यात् खरस्योष्ट्रस्य चोभयोः ।
मरणोत्सादने कुर्याद्रोहिबीजैस्तिलान्वितैः ॥

विद्वेषणं च तैलेन कुर्याल्लाङ्गलकस्य तु ।
बन्धनं रोहिबीजेन सेनास्तम्भनमेव च ॥

रक्तसर्षपसंमिश्रैर्होमद्रव्यैरशेषतः ॥
हस्तयन्त्रोद्भवैस्तैलैर्जुहुयादाभिचारिके ।

कटुकीतुषसंयुक्तैः कार्पासास्थिभिरेव च ॥
सर्षपैस्तिलसंमिश्रैर्जुहुयादाभिचारिके ॥

ज्वरोपशान्तिदं क्षीरं सौभाग्यफलदं तथा ।
सर्वसिद्धिकरो होमः क्षौद्राज्यदधिभिर्युतैः ॥

क्षीरेण तण्डुलैश्चैव चरुणा केवलेन वा ।
शान्तिकं पौष्टिकं चैव सप्तभिः समिदादिभिः ॥

द्रव्यैर्विशेषतो होमवश्यमाकर्षणं तथा ।
वश्यमाकर्षणं चैव श्रीप्रदं च विशेषतः ॥

बिल्वपत्रैस्तु हवनं शत्रोर्विजयदं तथा ।
समिधः शान्तिकार्येषु पलाशखदिरादिकाः ॥

करवीरार्कजाः क्रौर्ये कण्टकिन्यश्च निग्रहे ।
प्रशान्तः शान्तिकं कुर्यात्पौष्टिकं च विशेषतः ॥

निर्घृणक्रुद्धचित्तस्तु प्रकुर्यादाभिचारिकम् ।
[1] अतीव दुरवस्थायां प्रतीकारान्तरं न चेत् ॥

आततायिनमुद्दिश्य प्रकुर्यादाभिचारिकम् ।
स्वराष्ट्रपतिमुद्दिश्य न कुर्यादाभिचारिकम् ॥

यद्यास्तिकः सुधर्मिष्ठो मान्यो वा योऽपि कोऽपि वा ।
तमुद्दिश्यापि नो कुर्यादाततायिनमच्युत ।
मनसा कर्मणा वाचा योऽपि कोऽपि शिवाश्रितः ॥

---

[1] अतीव दुरवस्थायाः प्रतीकारं तथा न चेत् ।
आततायिनमुद्दिश्य कुर्यात्कर्माभिचारिकम् ॥

स्वराष्ट्रपतिमुद्दिश्य शिवाश्रितमथापि वा ।
कृत्वाभिचारिकं कर्म सद्यो विनिपतेन्नरः ॥

स्वराष्ट्रपालकं तस्माच्छिवभक्तं च कंचन ।
न हिंस्यादाभिचाराद्यैर्यदीच्छेत्सुखमात्मनः ॥

[1] अन्यं कमपि चोद्दिश्य कृत्वा वै मारणादिकम् ।
पश्चात्तापेन संयुक्तः प्रायश्चित्तं समाचरेत् ॥

बाणलिङ्गेऽपि वा कुर्यान्निर्धनो धनवानपि ।
स्वयंभूतेऽथवा लिङ्गे आर्षके दैविकेऽपि वा ॥

अभावे हैमरत्नानामशक्तौ च तदर्चने ।
मनसैवाचरेदेतद्द्रव्यैर्वा प्रतिरूपकैः ॥

क्वचिदंशे च यः शक्तस्त्वशक्तः क्वचिदंशके ।
सोऽपि शक्त्यनुसारेण कुर्वंश्चेत्फलमृच्छति ॥

कर्मण्यनुष्ठितेऽप्यस्मिन् फलं यत्र न दृश्यते ।
द्विस्त्रिर्वावर्तयेत्तत्र सर्वथा दृश्यते फलम् ॥

पूजोपयुक्तं यद्द्रव्यं हेमरत्नाद्यनुत्तमम् ।
तत्सर्वं गुरवे दद्याद्दक्षिणां च ततः पृथक् ॥

स चेन्नेच्छति तत्सर्वं शिवाय विनिवेदयेत् ।
अथवा शिवभक्तेभ्यो नान्येभ्यः प्रतिपादयेत् ॥

यः स्वयं साधयेद्भक्त्या गुर्वादिनिरपेक्षया ।
सोऽप्येवमाचरेदत्र न गृह्णीयात्स्वयं पुनः ॥

स्वयं गृह्णाति चेल्लोभात्पूजाङ्गद्रव्यमुत्तमम् ।
काङ्क्षितं न लभेन्मूढो नात्र कार्या विचारणा ॥

अर्चितं यत्तु तल्लिङ्गं [2]यावज्जीवं प्रपूजयेत् ।
धारयेध्दृदि वा मूर्ध्नि यस्मात्प्राणमयं हि तत् ॥
यथोक्तमेव कर्मैतदाचरेद्योऽनपायतः ॥

---

[1] कन्यकामपि. [2] गृह्णीयाद्वा न वा स्वयम् । गृह्णीयाद्यदि तन्नित्यं स्वयं वान्योऽपि वार्चयेत् ॥ इति पुराणपाठः.

फलं व्यभिचरेन्नैवमित्यतः किं[1] प्ररोचकम् ।
अथाप्युद्देशतो वक्ष्ये कर्मणां सिद्धिमुत्तमाम् ॥
अपि शत्रुभिराक्रान्तो व्याधिभिर्वाप्यनेकशः ।
मृत्योरास्यगतो वापि मुच्यते निरपायतः ॥
राजायतेऽतिकृपणो रिक्तो वैश्रवणायते ।
कामायते विरूपोऽपि वृद्धोऽपि तरुणायते ॥
शत्रुर्मित्रायते सद्यो विरोधी किंकरायते ।
विषायते तदमृतं विषमप्यमृतायते ॥
स्थलायते समुद्रोऽपि स्थलमप्यर्णवायते ।
महीधरायते श्वभ्रं स च श्वभ्रायते गिरिः ॥
पद्माकरायते वह्निः सरो वैश्वानरायते ।
वनायते यदुद्यानं तदुद्यानायते वनम् ॥
सिंहायते क्षुद्रमृगः सिंहः क्रीडामृगायते ।
स्त्रियोऽभिसारिकायन्ते लक्ष्मीः सुचरितायते ॥
स्वैरप्रेष्यायते वाणी कीर्तिस्तु गणिकायते ।
स्वैराचारायते मेधा वज्रसूचीयते मनः ॥
महावातायते शक्तिर्बलं मत्तगजायते ।
स्तम्भायते समुद्योगैः शत्रुपक्षे स्थिता क्रिया ॥
शत्रुपक्षायतेऽरीणां सर्व एव सुहृज्जनः ।
शत्रवः कुणपायन्ते जीवन्तोऽपि सबान्धवाः ॥
आपन्नोऽपि गतारिष्टः स्वयं खल्वमरायते ।
रसायनायते नित्यमपथ्यमपि सेवितम् ॥
अनिशं क्रियमाणापि रतिस्त्वभिनवायते ।
अनागतादिकं सर्वं करस्थामलकायते ॥
यादृच्छिकफलायन्ते सिद्धयोऽप्यणिमादयः ।
बहुनात्र किमुक्तेन सर्वकामार्थसिद्धिषु ।
अस्मिन् कर्मणि निर्वृत्ते त्वनवाप्यं न विद्यते ॥

[1] प्रयोजनम्.

आमुष्मिकफलदकर्म

(उपमन्युः)—(वाय-उत्तर-३३)

अतः परं प्रवक्ष्यामि केवलामुष्मिकं विधिम् ।
नैतेन सदृशं किंचित्कर्मास्ति भुवनत्रये ॥

पुण्यातिशयसंयुक्तः सर्वदेवैरनुष्ठितः ।
(ब्रह्मणा विष्णुना चैव रुद्रेण च विशेषतः ॥

इन्द्रादिलोकपालैश्च सूर्यादिनवभिर्ग्रहैः ।
विश्वामित्रवसिष्ठाद्यैर्ब्रह्मविद्भिर्महर्षिभिः ॥)

श्वेतागस्त्यदधीचाद्यैरस्माभिश्च शिवाश्रितैः ।
नन्दीश्वरमहाकालचण्डेशाद्यैर्गणेश्वरैः ॥

पातालवासिभिर्दैत्यैः शेषाद्यैश्च महोरगैः ।
सिद्धैर्यक्षैश्च गन्धर्वैं रक्षोभूतपिशाचकैः ॥

स्वं स्वं पदमनुप्राप्तं सर्वैरयमनुष्ठितः ।
अनेन विधिना सर्वे देवा देवत्वमागताः ॥

ब्रह्मा ब्रह्मत्वमापन्नो विष्णुर्विष्णुत्वमागतः ।
रुद्रो रुद्रत्वमापन्न इन्द्रश्चेन्द्रत्वमागतः ॥

गणेशश्च गणेशत्वमनेन विधिना गतः ।
सितचन्दनतोयेन लिङ्गे स्नाप्य शिवं शिवाम् ॥

श्वेतैर्विकसितैः पद्मैः संपूज्य प्रणिपत्य च ।
तत्र पद्मासनं रम्यं कृत्वा लक्षणसंयुतम् ॥

विभवे सति होमाद्यैः पिष्टाद्यैर्वा स्वशक्तितः ।
मध्ये केसरजालस्य स्थाप्य लिङ्गं कनीयसम् ॥

अङ्गुष्ठप्रतिमं रम्यं सर्वगन्धमयं शुभम् ।
दक्षिणे स्थापयित्वा तु बिल्वपत्रैः समर्चयेत् ॥

[1](अगुरुं दक्षिणे पार्श्वे पश्चिमे तु मनश्शिलाम् ।
उत्तरे चन्दनं दद्याद्धरितालं तु पूर्वतः ॥

---

[1] पुराणपाठः.

सुगन्धैः कुसुमै रम्यैर्विचित्रैश्चापि पूजयेत्।)
धूपं कृष्णागरुं दद्याद्धृतं चैव सगुग्गुलम्॥

वासांसि चातिसूक्ष्माणि विकोशानि निवेदयेत्।
पायसं घृतसंमिश्रं घृतदीपांश्च दापयेत्॥

सर्वं निवेद्य मन्त्रेण ततो गच्छेत्प्रदक्षिणम्।
प्रणम्य भक्त्या देवेशं स्तुत्वा चान्ते क्षमापयेत्॥

सर्वोपहारसंमिश्रं ततो लिङ्गं निवेदयेत्।
शिवाय शिवमन्त्रेण दक्षिणामूर्तिमाश्रितः॥

एवं योऽर्चयते [1] नित्यं पञ्चगन्धमयं शुभम्।
सर्वपापविनिर्मुक्तः शिवलोके महीयते॥

एतद्व्रतोत्तमं गुह्यं शिवलिङ्गमहाव्रतम्।
भक्तस्य ते [2] समाख्यातं न देयं यस्य कस्यचित्॥

देयं च शिवभक्तेभ्यः शिवेन कथितं पुरा।

## नित्यादिकर्मत्रयविधिः

(उपमन्युः)—(वाय-उत्तर-३४)

नित्यान्नैमित्तिकात्काम्याद्या सिद्धिरिति कीर्तिता।
सा सर्वा लभ्यते सद्यो लिङ्गबेरप्रतिष्ठया॥

(सर्वो लिङ्गमयो लोकः सर्वं लिङ्गे प्रतिष्ठितम्।)
तस्मात्प्रतिष्ठिते लिङ्गे भवेत्सर्वं प्रतिष्ठितम्॥

ब्रह्मणा विष्णुना वापि रुद्रेणान्येन केन वा।
लिङ्गप्रतिष्ठामुत्सृज्य क्रियते स्वपदे स्थितिः॥

किमन्यदिह [3]वक्तव्यं प्रतिष्ठां प्रति कारणम्।
प्रतिष्ठितं शिवेनापि लिङ्गं वैश्वेश्वरं यतः॥

तस्मात्सर्वप्रयत्नेन परत्रेह च शर्मणे।
स्थापयेत्परमेशस्य लिङ्गं बेरमथापि वा॥

---

[1] लिङ्गं—पा. [2] मयाख्यातं—पा. [3] कर्तव्यं.

कृष्णः --

किमिदं लिङ्गमाख्यातं कथं लिङ्गी महेश्वरः।
कथं च लिङ्गभावोऽस्य कस्मादस्मिञ्छिवोऽर्च्यते ॥

उपमन्युः—

अव्यक्तं लिङ्गमाख्यातं त्रिगुणप्रभवाप्ययम् ।
अनाद्यनन्तं विश्वस्य यदुपादानकारणम् ॥

तदेव मूलप्रकृतिर्माया च गगनात्मिका ।
तत एव समुत्पन्नं जगदेतच्चराचरम् ॥

अशुद्धं चैष शुद्धं यच्छुद्धाशुद्धं च तत्त्रिधा ।
ततः शिवो महेशश्च रुद्रो विष्णुः पितामहः ॥

भूतानि चेन्द्रियैर्जाता लीयन्तेऽत्र शिवाज्ञया ।
अत एव शिवो लिङ्गी लिङ्गमाज्ञापयेद्यतः ॥

यतो न तदनाज्ञातं कार्याय प्रभवेत्स्वतः ।
ततो जातस्य विश्वस्य तत्रैव विलयो यतः ॥

अनेन लिङ्गिता तस्य भवेन्नान्येन केनचित् ।
लिङ्गं च शिवयोर्देहस्ताभ्यां यस्मादधिष्ठितम् ॥

अतस्तत्र शिवः साम्बो नित्यमेव समर्च्यते ।
लिङ्गवेदी महादेवी लिङ्गं साक्षान्महेश्वरः ॥

तयोः संपूजनादेव [1]स च सा च समर्चितौ ।
न तयोर्लिङ्गदेहत्वं विद्यते परमार्थतः ॥

यतः स्वतो विशुद्धौ तौ देहस्तदुपचारतः ।
तदेव परमा शक्तिः शिवस्य परमात्मनः ॥

[2]शक्तिराज्ञां यदादत्ते प्रसूते तच्चराचरम् ।
न तस्य महिमा शक्यो वक्तुं वर्षशतैरपि ॥
येनादौ मोहितौ स्यातां ब्रह्मनारायणावपि ।

---

[1] सचराचरमर्चितम् . [2] शक्तिराज्ञा यदाज्ञातं प्रसूते यच्चराचरम् .

पुरा त्रिभुवनस्यास्य प्रलये समुपस्थिते ।
वारिशय्यागतो विष्णुः सुष्वापानाकुलः सुखम् ॥

यदृच्छया गतस्तत्र ब्रह्मा लोकपितामहः ।
ददर्श पुण्डरीकाक्षं स्वपन्तं तमनाकुलम् ॥

मायया मोहितः शम्भोर्विष्णुमाह पितामहः ।
कस्त्वं वदेत्यमर्षेण प्रहृत्योत्थाप्य माधवम् ॥

स तु हस्तप्रहारेण तीव्रेणाभिहतः क्षणात् ।
प्रबुध्योत्थाय शयनाद्ददर्श परमेष्ठिनम् ॥

तमाह चान्तः स क्रुद्धः स्वयमक्रुद्धवद्धरिः ।
कुतः समागतो वत्स कस्मात्त्वं व्याकुलो वद ॥

इति विष्णुवचः श्रुत्वा प्रभुत्वगुणसूचकम् ।
रजसा बद्धवैरस्तं ब्रह्मा पुनरभाषत ॥

वत्सेति मां कुतो ब्रूषे गुरुः शिष्यमिवात्मनः ।
मां न जानासि किं [1]नाथं प्रपञ्चो यस्य मे कृतिः ॥

त्रिधात्मानं विभज्येदं सृष्ट्वाथ परिपाल्यते ।
संहरामि न मे कश्चित्स्रष्टा जगति विद्यते ॥

इत्युक्ते सति सोऽप्याह ब्रह्माणं विष्णुरव्ययः ।
अहमेवादिकर्तास्य हर्ता च परिपालकः ॥

भवानपि ममैवाङ्गादवतीर्णः पुराव्ययात् ।
मन्नियोगात्त्वमात्मानं त्रिधा कृत्वा जगत्त्रयम् ॥

सृजस्यवसि चान्ते तु त्वं [2] पुनर्विसृजस्यपि ।
विस्मृतोऽसि जगन्नाथं नारायणमनामयम् ॥

तवापि जनकं साक्षा[3]न्मामेवमवमन्यसे ।
तवापराधो नास्त्यत्र भ्रान्तोऽसि मम मायया ॥

मत्प्रसादादियं भ्रान्तिरपैष्यति तवाचिरात् ।
शृणु सत्यं चतुर्वक्त्र सर्वदेवेश्वरोऽह्यहम् ॥

---

[1] नाथ प्रपञ्चो यस्य वै कृतिः—पा. [2] पुनः प्रतिसृजस्यपि—पा. [3] न्मामनाथ-मनन्यजम्.

कर्ता हर्ता च भर्ता च न मयास्ति समो विभुः ।
एवमेव विवादोऽभूद्ब्रह्मविष्ण्वोः परस्परम् ॥

अभवच्च महद्युद्धं भैरवं रोमहर्षणम् ।
मुष्टिभिर्निघ्नतोस्तीव्रं रजसा बद्धवैरयोः ॥

तयोर्दर्पापहाराय प्रबोधाय च देवयोः ।
मध्ये समाविरभवल्लिङ्गमैश्वरमद्भुतम् ॥

ज्वालामालासहस्राढ्यमप्रमेयमनूपमम् ।
क्षयवृद्धिविनिर्मुक्तमादिमध्यान्तवर्जितम् ॥

तस्य ज्वालासहस्रेण ब्रह्मविष्णू विमोहितौ ।
विसृज्य युद्धं किंत्वेतदित्यचिन्तयतां तदा ॥

न तयोस्तस्य याथात्म्यं प्रबुद्धमभवद्यदा ।
तदा समुद्यतौ स्यातां तस्याद्यन्तं परीक्षितुम् ॥

तत्र हंसाकृतिर्ब्रह्मा विश्वतः पक्षसंयुतः ।
मनोऽनिलजवो भूत्वा गतस्तूर्ध्वं प्रयत्नतः ॥

नारायणोऽपि विश्वात्मा नीलाञ्जनचयोपमम् ।
वाराहममितं रूपमास्थाय गतवानधः ॥

एवं वर्षसहस्रं तु त्वरन्विष्णुरधोगतः ।
नापश्यदल्पमप्यस्य मूलं लिङ्गस्य सूकरः ॥

तावत्कालं गतश्चोर्ध्वं तस्यान्तं ज्ञातुमिच्छया ।
श्रान्तोऽत्यन्तमदृष्ट्वान्तं पपाताधः पितामहः ॥

तथैव भगवान्विष्णुः श्रान्तः संविग्नलोचनः ।
क्लेशेन महता तूर्णमधस्तादुत्थितोऽभवत् ॥

समागतावथान्योन्यं विस्मयस्मेरवीक्षणौ ।
मायया मोहितौ शंभोः कृत्याकृत्यं न जग्मतुः ।

पृष्ठतः पार्श्वतस्तस्य चाग्रतश्च स्थितावुभौ ।
प्रणिपत्य किमात्मेदमित्यचिन्तयतां तदा ॥

(उपमन्युः)—(वाय-उत्तर-३५)

अथाविरभवत्तत्र सनादं शब्दलक्षणम् ।
ओमित्येकाक्षरं ब्रह्म ब्रह्मणः प्रतिपादकम् ॥

तदप्यविदितं तावद्ब्रह्मणा विष्णुना तदा ।
रजसा तपसा चित्तं [1] तयोरसीत्तिरस्कृतम् ॥

तदा विभक्तमभवच्चतुर्धैकं तदक्षरम् ।
अउमेति त्रिमात्राभिः परस्ताच्चार्धमात्रया ॥

तत्राकारः श्रितो भागे [2] ज्वलल्लिङ्गस्य दक्षिणे ।
उकारश्चोत्तरे तद्वन्मकारस्तस्य मध्यतः ॥

अर्धमात्रात्मको नादः श्रूयते लिङ्गमूर्धनि ।
विभक्तेऽपि तदा तस्मिन् प्रणवेन पराक्षरे ॥

विभागार्थं च तौ देवौ न किंचिदवजग्मतुः ।
वेदात्मना तथाव्यक्तः प्रणवो विकृतिं गतः ॥

तत्राकारो ऋगभवदुकारो यजुरव्ययः ।
मकारः साम संजातो नादस्त्वाथर्वणी श्रुतिः ॥

ऋगुपस्थापयामास समासात्त्वर्थमात्मनः ।
रजोगुणेषु ब्रह्माणं मूर्तिष्वाद्यं क्रियास्वपि ॥

सृष्टिं लेकेषु पृथिवीं तत्त्वेष्वात्मानमव्ययम् ।
कलाध्वनि निवृत्तिं च सद्यं ब्रह्मसु पञ्चसु ॥

लिङ्गभागेष्वधोभागं बीजाख्यं कारणत्रये ।
चतुष्षष्टिगुणैश्वर्यं बोध्यं यदणिमादिषु ॥

तदित्थमर्थैर्दशभिर्व्याप्तं [3] विश्वमृचा जगत् ।
अयोपस्थापयामास [4] स्वार्थं दशविधं यजुः ॥

सत्त्वं गुणेषु विष्णुं च मूर्तिष्वाद्यं क्रियास्वपि ।
स्थितिं लोकेष्वन्तरिक्षं [5] विद्यां तत्त्वेषु च त्रिषु ॥

---

[1] तयोर्यस्मात्तिरस्कृतम्. [2] ज्वालालिङ्गस्य. [3] विश्वसृजा. [4] स्वार्थं.
[5] विद्यातत्त्वेषु—एते पाठाः मातृकायां दृश्यन्ते.

कलाध्वनि प्रतिष्ठां च वामं ब्रह्मसु पञ्चसु ।
मध्यं तु लिङ्गभागेषु योनिं च त्रिषु हेतुषु ॥

प्राकृतं च यथैश्वर्यं तस्माद्विश्वं यजुर्मयम् ।
अथोपस्थापयामास सामार्थं दशधात्मनः ॥

तमो गुणेष्वघो रुद्रं मूर्तिष्वाद्यं क्रियास्वपि ।
संहर्तिं त्रिषु लोकेषु तत्त्वेषु शिवमुत्तमम् ॥

विद्याकलास्वघोरं च तथा ब्रह्मसु पञ्चसु ।
लिङ्गभागेषु पीठोर्ध्वे बीजिनं कारणत्रये ॥

पौरुषं च तथैश्वर्यमित्थं साम्ना ततं जगत् ।
अथाऽथर्वा हि नैर्गुण्यमर्थं प्रथममात्मनः ॥

ततो महेश्वरं साक्षान्मूर्तिष्वथ सदाशिवम् ।
क्रियासु निष्क्रियस्यापि शिवस्य परमात्मनः ॥

भूतानुग्रहणं चैव मुच्यन्ते येन जन्तवः ।
लोकेष्वपि यतो वाचो निवृत्ता मनसा सह ॥

तदूर्ध्वमुन्मनालोकात्सोमलोकमलौकिकम् ।
सोमः सहोमया तत्र नित्यं निवसतीश्वरः ॥

तदूर्ध्वमुन्मनालोकाद्यं प्राप्तो न निवर्तते ।
शान्तिं च शान्त्यतीतां च व्यापिकां वै कलास्वपि ॥

तत्पूरुषं तथेशानं ब्रह्म ब्रह्मसु पञ्चसु ।
मूर्धानमपि लिङ्गस्य [1] नादभागेष्वनुत्तरम् ॥

यत्रावाह्य समाराध्यः केवलो निष्कलः शिवः ।
तत्त्वेष्वपि तथा बिन्दोर्नादाच्छक्तेस्ततः परात् ॥

तत्त्वादपि परं तत्त्वमतत्त्वं परमार्थतः ॥
कारणेषु त्रयातीतान्मायाविक्षोभकारणात् ।

अनन्ताच्छुद्धविद्यायाः परस्ताच्च महेश्वरात् ॥
सर्वविद्येश्वराधीशा[2]त्तत्पराच्च सदाशिवात् ।

सर्वमन्त्रतनोर्देवाच्छक्तित्रयसमन्वितात् ॥

---

[1] भागं भागेष्वनु.  [2] त्तपराच्च–पा.

पञ्चवक्त्राद्दशभुजात्साक्षात्सकलनिष्कलात्।
तस्मादपि पराद्बिन्दोरर्धेन्दोश्च ततः परात्॥

ततः परा[1]न्निरोधीशान्नादाख्याच्च ततः परात्।
ततः परात्सुषुम्नेशाद्ब्रह्मरन्ध्रेश्वरादपि॥

ततः परस्याः शक्तेश्च परस्ताच्छिवतत्त्वतः।
परमं कारणं साक्षात्स्वयं निष्कारणं शिवम्॥

कारणानां च धातारं ध्यातारं ध्येयमव्ययम्।
परमाकाशमध्यस्थं परमात्मोपरि स्थितम्॥

सर्वैश्वर्येण संपन्नं सर्वेश्वरमनीश्वरम्।
ऐश्वर्याच्चापि मायेयादशुद्धान्मानुषादिकात्॥

अपराच्च [2]परात्त्याज्यादधिशुद्धाध्वगोचरात्।
तत्पराच्छुद्धविद्याद्यादुन्मनान्तात्परात्परात्॥

परमं परमैश्वर्य[3]मुन्मनाद्यमनादि च।
अपारमपराधीनं निरस्तातिशयं स्थिरम्॥

इत्थमर्थैर्दशविधैरियमाथर्वणी श्रुतिः।
यस्माद्गरीयसी तस्माद्विश्वं व्याप्तमथर्वणात्॥

ऋग्वेदः पुनराहेदं जाग्रद्रूपं मयोच्यते।
येनाहमात्मतत्त्वस्य नित्यमस्म्यभिधायकः॥

यजुर्वेदोऽवदत्तद्वत्स्वप्नावस्था मयोच्यते।
भोग्यात्मना परिणता विद्या वेद्या यतो मयि॥

साम चाह सुषुप्त्याख्यमेवं सर्वं मयोच्यते।
ममार्थेन शिवेनेदं [4]तामसेनाभिभूयते॥

अथर्वाह तुरीयाख्यं तुरीयातीतमेव च।
मया[5]भिधीयते तस्मादध्वातीतः परोऽस्म्यहम्॥

अध्वात्मकं तु त्रितयं शिवविद्यात्मसंज्ञितम्।
तत्त्रैगुण्यं त्रयीसाध्यं [6]संशोध्यं च पदैषिणा॥

---

[1] न्निशाधीशा. [2] पराच्चाद्यादविद्यावागगो. [3] मुन्मनोर्ध्वमनादि. [4] नाम येना. [5] भिहूयते—चा. [6] शोध्यं पतिपदैषिणा.

अध्वातीतं तुरीयाख्यं निर्वाणं परमं पदम्।
तदतीतं च नैर्गुण्यादध्वनोऽस्य विशोधकम् ॥

द्वयोः प्रमापको नादो नादान्तश्च [1]मदात्मकः।
तस्मान्ममार्थस्वातन्त्र्यात्प्रधानः परमेश्वरः ॥

यदस्ति वस्तु तत्सर्वं गुणप्राधान्ययोगतः।
समस्तंव्यस्तमपि च प्रणवार्थं प्रचक्षते ॥

सर्वार्थवाचकस्तस्मादेकं ब्रह्मैतदक्षरम्।
तेनोमिति जगत्कृत्स्नं कुरुते प्रथमं शिवः ॥

शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः।
वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते यतः ॥

चिन्तया रहितो रुद्रो वाचोयं मनसा सह।
अप्राप्य तं निवर्तन्ते वाच्यस्त्वेकाक्षरेण सः ॥

एकाक्षरादकाराख्या[2]दात्मा ब्रह्माभिधीयते।
एकाक्षरादुकाराख्याद्विधा विष्णुरुदीर्यते ॥

एकाक्षरान्मकाराख्याच्छिवो रुद्र उदाहृतः।
दक्षिणाङ्गान्महेशस्य जातो ब्रह्मात्मसंज्ञिकः ॥

वामाङ्गादभवद्विष्णुस्ततो विद्येति संज्ञितः।
[3]हृदयान्नीलरुद्रोऽभूच्छिवस्य शिवसंज्ञितः ॥

सृष्टेः प्रवर्तको ब्रह्मा स्थितेर्विष्णु[4]र्विमोहकः।
संहारस्य तथा रुद्रस्तयोर्नित्यं नियामकः ॥

तस्मात्त्रयस्ते कथ्यन्ते जगतः [5]कारणानि च।
कारणत्रयहेतुश्च शिवः परमकारणम् ॥

अर्थमेनमविज्ञाय रजसा बद्धवैरयोः।
युवयोः प्रतिबोधाय मध्ये लिङ्गं समुत्थितम् ॥

एवमोमिति मां प्राहुर्यदि ह्योक्तमथर्वणा।
ऋचो यजूंषि सामानि शाखाश्चान्याः सहस्रशः ॥

---

[1] ममात्मकः—पा. [2] दाज्ञा. [3] हृदयादधि रुद्रो. [4] प्रवर्तकः. [5] कारणत्रयम्.

वेदेष्वेवं स्वयं वक्तृैर्व्यक्तमित्थं वदत्स्वपि ।
स्वप्नानुभूतमिव[1] तत्ताभ्यां नाध्यवसीयते ॥

[2]तयोस्तत्र प्रबोधाय तमोऽपनयनाय च ।
लिङ्गेऽपि मुद्रितं सर्वं यथा वेदैरुदाहृतम् ॥

तद्दृष्ट्वा मुद्रितं लिङ्गे प्रसादाल्लिङ्गिनस्तदा ।
प्रशान्तमनसौ देवौ प्रबुद्धौ संबभूवतुः ॥

(ततो लिङ्गस्य लिङ्गत्वं लिङ्गिनोऽपि च लिङ्गिता ।
लिङ्गे विश्वस्य जगतो विशेषात्स्वात्मनोरपि ॥)

उत्पत्तिं विलयं चैव याथात्म्यं च षडध्वनाम् ।
ततः परतरं धाम धामवन्तं च पूरुषम् ॥

निरुत्तरतरं ब्रह्म निष्कलं शिवमीश्वरम् ।
पशुपाशमयस्यास्य प्रपञ्चस्य सदा पतिम् ॥

अकुतोभयमत्यन्तमवृद्धिक्षयमव्ययम् ।
बाह्यमाभ्यन्तरं व्याप्तं बाह्याभ्यन्तरवर्जितम् ॥

निरस्तातिशयं शश्वद्विश्वलोकविलक्षणम् ।
अलक्षणमनिर्देश्यमवाङ्मनसगोचरम् ॥

प्रकाशैकरसं शान्तं प्रसन्नं सततोदितम् ।
सर्वकल्याणनिलयं शक्त्या तादृशयान्वितम् ॥

ज्ञात्वा देवं विरूपाक्षं ब्रह्मनारायणौ तदा ।
रचयित्वाञ्जलिं मूर्ध्नि भीतौ द्वौ वाचमूचतुः ॥

ब्रह्मा—

अज्ञो वाहमभिज्ञो वा त्वयादौ देवनिर्मितः ।
ईदृशीं भ्रान्तिमापन्न इति कोऽत्रापराध्यति ॥

आस्तां ममेदमज्ञानं त्वयि सन्निहिते प्रभो ।
निर्भयः कोऽभिभाषेत कृत्यं स्वस्य परस्य वा ॥

आवयोर्देवदेवेश विवादोऽपि हि शोभनः ।
पादप्रणामफलदो नाथस्य भवतो यतः ॥

---

[1] तत्ताभ्यामित्यव, यत्ताभ्यामध्यव: [2] तत्त्वप्रबोधाय तयोस्तमस. शमनाय च

विष्णुः—

स्तोतुं देव न वागस्ति महिम्नः सदृशी तव ।
प्रभोरग्रे विधेयानां तूष्णींभावो व्यतिक्रमः ॥

किमत्र संकटे कृत्यमित्येवावसरोचितम् ।
अजानन्नपि यत्किंचित्प्रलप्य त्वां नतोऽस्म्यहम् ॥

कारणत्वं त्वया दत्तं विस्मृत्य तव मायया ।
मोहितोऽहङ्कृतश्चाहं पुनरेवास्मि शासितः ॥

विज्ञापितैः किं बहुभिर्भीतोऽस्मि भृशमीश्वर ।
यतोऽहमपरिच्छेद्यं त्वां परिच्छेत्तुमुद्यतः ॥

त्वामुशन्ति महादेवं भीतानामार्तिनाशनम् ।
अतो व्यतिक्रमं मेऽद्य क्षन्तुमर्हसि शङ्कर ॥

इति विज्ञापितस्ताभ्यामीश्वराभ्यां महेश्वरः ।
प्रीतोऽनुगृह्य देवौ तौ स्मितपूर्वमभाषत ॥

ईश्वरः—

वत्स वत्स विधे विष्णो मायया मम मोहितौ ।
युवां प्रभुत्वेऽहङ्कृत्य बद्धवैरौ परस्परम् ॥

विवादं युद्धपर्यन्तं कृत्वा नोपरतौ किल ।
तेनोच्छिन्ना प्रजासृष्टिर्जगत्कारणभूतयोः ॥

अज्ञानमानप्रभवाद्वैमत्याद्युवयोरपि ।
तन्निवर्तयितुं युष्मद्गर्वमोहौ मयैव तु ॥

एवं निवारितावद्य लिङ्गाविर्भावलीलया ।
तस्माद्भूयो विवादं च व्रीडां चोत्सृज्य कृत्स्नशः ॥

यथास्वं कर्म कुर्यातां भवन्तौ वीतमत्सरौ ।
पुरा ममाज्ञया सार्धं समस्तज्ञानसंहिता ॥

युवाभ्यां हि मया दत्ता कारणत्वप्रसिद्धये ।
मन्त्ररत्नं हि सूत्राख्यं पञ्चाक्षरमयं परम् ॥

मयोपदिष्टं सर्वं तद्युवयोरद्य विस्मृतम् ।

ददामि च पुनः सर्वं यथापूर्वं ममाज्ञया ।
यया विना युवामेव न क्षमौ [1]सृष्टिरक्षणे ॥

एवमुक्त्वा महादेवो नारायणपितामहौ ।
मन्त्ररत्नं ददौ ताभ्यां ज्ञानसंहितया सह ॥

तौ लब्ध्वा महतीं [2]दिव्यामाज्ञां माहेश्वरीं पराम् ।
[3] महार्धं मन्त्ररत्नं च तथैव सकलाः क्रियाः ॥

दण्डवत्प्रणतिं कृत्वा देवदेवस्य पादयोः ।
अतिष्ठातां वीतभयावानन्दस्तिमितौ तदा ॥

एतस्मिन्नन्तरे चित्रमिन्द्रजालवदैश्वरम् ।
लिङ्गं क्वापि तिरोभूतं न ताभ्यामुपलभ्यते ॥

ततो विलप्य हाहेति सद्यः प्रणयभङ्गतः ।
किमसत्यमिदं वृत्तमिति चोक्त्वा परस्परम् ॥

अचिन्त्य वैभवं शंभोर्विचिन्त्य च गतव्यथौ ।
अभ्युपेत्य परां मैत्रीमालिङ्ग्य च परस्परम् ॥

जगद्व्यापारमुद्दिश्य जग्मतुर्देवपुङ्गवौ ।
ततः प्रभृति शक्राद्याः सर्व एव सुरासुराः ॥

ऋषयश्च नरा नागा नार्यश्चापि विधानतः ।
लिङ्गप्रतिष्ठां कुर्वन्ति लिङ्गे तं पूजयन्ति च ॥

[4] (सूतः)– (शं-सं-उप-७२)

पुनश्चाहं प्रवक्ष्यामि संभूयाभ्यर्च्य शूलिनम् ।
देवैरभीष्टं संप्राप्तं यद्यत्तत्कथयामि वः ॥

[5] (संपूज्य सर्वं स्वाभीष्टं लभन्ते सर्वदेहिनः ।
अस्मिन्नर्थे कथामेकां प्रवक्ष्यामि समासतः ॥)

पुराभूदन्धको नाम दैतेयो लोककण्टकः ।
तपसा महता प्राप्तबलवीर्यपराक्रमः ॥

---

[1] विश्वधारणे. [2] दिव्याम्. [3] महार्थं. [4] पुराणपाठः [5] पुराणे न दृश्यते

त्रिजगत्पीडितं तेन देवाश्च विजिता युधि ।
निर्जिता विबुधा ब्रह्मविष्ण्वाद्या रणमूर्धनि ॥

स्त्रीवेषधारिणस्तेऽथ न तु पुंरूपमास्थिताः ।
धृतस्त्रीवेषभाषाश्च चेरुर्देवा दिशो दश ॥

पुरुषाकारविबुधान् [1]हन्यात्कारागृहान्तरे ।
पुनश्च वनितारूपान् सहते स्म न चासुरः ॥

ते पीड्यमाना दैत्येन स्त्रीवेषा अपि सन्ततम् ।
मन्दरं प्राप्य ते सर्वे महादेवहितं गिरिम् ॥

तत्र देवं नमस्कृत्य हरिब्रह्मादयः सुराः ।
तदाज्ञयाऽभवन् देवीसखीनां परिचारिकाः ॥

तत्राप्यनुपदं देवानन्धको गिरिमासदत् ।
तं मन्दरगतं देवाः स्त्रीवेषा विष्णुपूर्वकाः ॥

व्यजिज्ञपन्महेशाय दौरात्म्यं चास्य कृत्स्नशः ।
ततो देवो महादेवः करुणामृतवारिधिः ॥

देवानां रक्षणे यत्तो भैरवेशमचोदयत् ।
विनिग्रहाय दैत्यानां सगणो निर्जगाम सः ॥

तयोर्युद्धमभूत्तत्र सेनयो रुद्रदैत्ययोः ।
विनाशमगमद्दैत्यसेना भैरवसेनया ॥

ये ये दैत्या हता रौद्रैस्तांस्तान् भृगुसुतस्तदा ।
मृत्युञ्जयेन मन्त्रेण जप्तेन च पुनः पुनः ॥

पुनरुज्जीवयामास तदद्भुतमिवाभवत् ।
शुक्रमाकृष्य सहसा भक्षयामास शङ्करः ॥

ततो हताऽऽसुरी सेना गणपैर्भैरवैः क्षणात् ।
भैरवोऽपि ततः क्रुद्धस्तमन्धकमहासुरम् ॥

शूलप्रोतं विधायाशु शिवसन्निधिमभ्यगात् ।
शिवेनालोकितो दैत्यः शूलप्रोतोऽपि तत्क्षणम् ॥

---

[1] अहङ्काराद्गृहान्तरे.

निवृत्तमस्य सकलं कर्मजातं तदासुरम् ।
लम्बमानः स शूलाग्रे देवं तुष्टाव हृष्टधीः ॥

तत्स्तोत्रमुदितो देवस्तं वरेण समायुजत् ।
वव्रे सोऽपि वरं दैत्यो गाणापत्यमनुत्तमम् ॥

ततो देवोऽपि दैत्याय गाणापत्यं प्रसन्नधीः ।
शुक्रं च ग्रस्तमीशोऽन्तरुत्ससर्जोदरान्तरात् ॥

शुक्रोऽभ्यर्च्य तदेशानं स्वमण्डलमथाविशत् ।
ततो विष्णुमुखा देवा समाराध्याम्बया शिवम् ॥

स्त्रीरूपं संपरित्यज्य ययुः स्वं स्वं तदास्पदम् ।
असुरोऽप्यन्धकः पापी विलोक्यान्ते त्रिशूलिनम् ॥

गाणापत्यममर्त्यानामपि दुर्लभमाप सः ।

(सूतः)—(शं. सं.-उप-७४)

एकदा पुनरीशानः प्रियया गिरिकन्यया ॥

अन्तरङ्गगणेन्द्रैश्च शृङ्गारवनमाश्रितः ।
तत्र शृङ्गारविपिने देव्या दत्तकरः शिवः ॥

गुल्मान् लताः द्रुमांश्चान्यान् फुल्लपल्लवशोभिनः ।
सार्धं ददर्श तान् देव्या शनैस्तद्दृष्टिसूचितान् ॥

मध्ये तत्र वटं दृष्ट्वा महाविटपमद्भुतम् ।
तन्मूलवेदिकामध्यमाससाद सहोमया ॥

अध्यासामासतुस्तत्र दिव्यास्तरणमासनम् ।
देवी न्यग्रोधमालोक्य देवदेवं च सस्मिता ॥

प्राह वृक्षो महादेव न दृष्टो यत्र कुत्रचित् ।
तामाह वदतीमेवमितोऽप्येष युगान्तिमे ॥

ब्रह्मणः प्रलये प्राप्ते महानेतच्छताधिकः ।
भविष्यति तदा पर्णमेकमस्यार्णवाम्भसि ॥

पतिष्यति महाविष्णुस्तत्र शेतेऽर्भकाकृतिः ।
ब्रह्मोत्पत्तिनिमित्तं मां स्मरिष्यति जनार्दनः ॥

हिरण्यगर्भं तेनाहं जनयिष्यामि तन्मुखात्।
(अजस्य नाभावध्येकं समर्पितमिति श्रुतिः।)
जगत्स्रष्टेरयं पश्चाद्यथापूर्वं प्रवर्तते॥

उद्यानपालकान्देवः स्त्रीभिः सन्निहितान् सह।
आहूय वापिकामध्यादानयिष्यथ पक्षिणौ॥

कौचिदित्याह मुग्धेन्दुशेखरस्तानुमासखः।
ते हंसं शुकमेकं च गृहीत्वा जग्मुरञ्जसा॥

तौ पक्षिणौ प्रणम्येशं समातस्थतुरग्रतः।
आलोक्य तौ तु विश्वात्मा पप्रच्छ प्रियया सह॥

क्व तिष्ठन्तौ द्विजौ कालं किं किं कृत्वा विनेष्यथः।
साम्बे पृच्छति तत्रैवं शुकः प्रोवाच हृष्टधीः॥

कृतमालातरोः [1] शाखामाश्रित्य स्थीयते मया।
अत्रैव भवदुद्याने सततं भाग्यशालिना॥

हंसोऽपि पुनराहेशं प्रणम्य स कृताञ्जलिः।
ब्रह्मविष्णवोश्च लोकेषु दिक्पालानां च संचरन्॥

भूरिपुण्यवशाद्देव तवोद्यानमिहागतः।
वापीमध्येऽत्र पीयूषसममम्भः पिबन् सदा॥

पन्नगास्तव जटाजूटनिलयायाश्च साम्प्रतम्।
प्रशंसन्नम्भसो नित्यं माहात्म्यं निवसाम्यहम्॥

ब्रुवन्तमिति तं हंसं शुकं च जगतां पतिः।
गच्छतामिति तौ चोक्त्वा विससर्ज तदा स्मयन्॥

ततो देवी भृशं क्रुद्धा समुत्थाय तदासनात्।
ईशमुक्त्वा तव स्त्रीति हंसस्य वचनात्कथम्॥

प्रीतिस्तव मुखे हासः साधु साध्विति निर्गता।
गत्वा दूरं क्वचिल्लीना भूमौ पांसून् समूह्य सा॥

चकार पुत्तलीं सा च सजीवा पुनरुत्थिता।
तदन्तरे महादेवः कुपितां जगदम्बिकाम्॥

---

[1] सेवां कुर्वता स्थीयते—पा.

सान्त्वयित्वा समानीय जगामान्तःपुरं प्रभुः।
यैः पांसुभिरुमादेव्या कृता पुत्तलिका तदा॥

ते मन्मथस्य दग्धस्य देहभस्मचयास्ततः।
दुर्गुणः पुरुषाकारः कैलासस्य समीपगः॥

तं गणेन्द्राः समुद्वीक्ष्य त्वं भण्डो नामतोऽसुरः।
([1] गच्छ दुष्ट त्वया नात्र स्थातव्यं सुरशत्रुणा॥
निरासुरिति कोपेन स भण्डो निर्गतोऽसुरः॥)
भण्डासुरस्तपस्तेपे प्रीतं कुर्वन् पशोः पतिम्।

सुघोरमतिवैराग्याद्वर्षाणामयुतायुतम्।
शत्रवो मम देवेन्द्र हरिब्रह्मादयः सुराः॥

संहरिष्ये ततस्तेषां वीर्याणि कृपयेशितुः।
विन्देरन् तेन मां वीर्यं भक्षयन्तं हृदि स्थितम्॥

ययाचे वरमित्येवं देवदेवं त्रियम्बकम्।
प्रीतस्तत्तपसा देवस्तदा सर्वं वरं ददौ॥

भण्डासुरो लब्धवरो भक्षयन्वीर्यमात्मनाम्।
ब्रह्मविष्ण्विन्द्रमुख्यानां देवानामपि सर्वशः॥

नष्टवीर्याः सुराः सेन्द्राः स्वस्वपत्न्यां विरागिणः।
किमेतदिति निर्विण्णा [2] जज्ञिरे न तु तं सुराः॥

[3] इच्छन्तोऽस्य प्रतीकारमीशार्चनरता भृशम्।
ब्रह्मा हरिर्हरिश्चान्ये हरितामधिपाश्च ते॥

लिङ्गे षोडशभिर्देवमुपचारैरुपाचरन्।
कैलासगिरिमभ्येत्य पश्चादभ्यर्चयञ्छिवम्॥
निर्वीर्या देव सञ्जाता न जानीमोऽस्य कारणम्।

(ईश्वरः)—

तानुवाच हरिब्रह्मप्रमुखानिति भाषिणः।
एवं भण्डासुरो युष्मद्वीर्यमादाच्छरीरगः॥

---

[1] पुराणपाठः. [2] जानीयुरिति स्यात्. [3] इत्थं तस्य–पा.

तदर्थं सर्वसंहारयागः कार्यो मया यदि।
[1] असुराणामनुमतिस्त्वन्यथा नैव शक्यते॥
मदनुष्ठितयागाग्नौ हुतेष्वखिलदेहिषु।
आज्ञयानन्तरं शक्तिर्मम कापि [2] भविष्यति॥
(भण्डासुरं सा संहृत्य युष्मांश्च जनयिष्यति।)
यथापूर्वं क्षणेनैव सत्यमुक्तं सुरा मया।
तदोमिति वचः प्रोचुः श्रुतदेवगिरः सुराः॥
निश्शक्तहस्तपादाः स्मो नितरां विमुखाः क्रियाम्।
इतीश्वरो विसृष्टेषु गतेषु विबुधेष्वथ॥
स्वस्मिन्नेव महावह्नौ जुहाव समिधः सुरान्।
मुनीन् पितृगणानन्यान्गन्धर्वोरगराक्षसान्॥
मनुष्यान् पक्षिणो गाश्च जगत्स्थावरजङ्गमम्।
[3] महाग्रासो गृहीत्वाग्नौ दीक्षितः स्वयमम्बया॥
हुते निश्शेषमखिले स्थावरेऽपि च जङ्गमे॥
तस्मिन्नग्नौ समुत्तस्थौ शक्तिरण्डैस्त्रिभिः सह।
बिभ्राणा पुष्पविशिखमिक्षुचापं सृणिं स्रजम्॥
प्रणनाम महादेवं शक्तिः संप्राप्य पादयोः।
व्यजिज्ञपच्च किं कार्यं शाधि मां सर्वभूतप॥
तामाह ब्रुवतीमेवं शक्तिमान् गिरिजापतिः।
भण्डासुरं महाघोरं भक्षकं शुक्लमात्मनाम्॥
संहराशु महाशक्ते रक्षार्थमखिलात्मनाम्।
विससर्ज तदा सापि तस्मिन् शरमथैककम्॥
विमुञ्चन्ती संजहार प्राणांस्तस्य तदाज्ञया।
बाणेनैकेन सहसा हते भण्डासुरे तया॥
अनन्तरं दयासिन्धुः शक्तिं तामादिदेश ह।
अण्डत्रये त्वया सृष्टे ब्रह्मविष्णुमहेश्वरान्॥

---

[1] अमराणामनुमतिस्त्वन्यथा—पा. [2] जनिष्यति—पा. [3] महाग्रासोऽ-मसत्स्वाग्नौ—पा.

महालक्ष्मीमम्बिकां च वाचां देवीं सरस्वतीम् ।
तैस्तैः संयोज्य तत्पत्नीः सृष्टिरक्षालयान् क्रमात् ॥

कारयेति शिवाज्ञां तां वहन्ती शिरसेश्वरी ।
तथैव त्रीन् समुत्पाद्य तच्छक्तीरपि तादृशीः ॥

सृष्टिरक्षालयगुणान् कारयामास तैस्त्रिभिः ।
([1] पुनः कदाचित्कालाग्निरुद्रमूर्तिं स्वमास्थितः ॥

तेनैकेन जगत्सृष्टिरक्षालयमुखाः क्रियाः ।
करोति स्वयमेवेशः कदाचिद्विष्णुमास्थितः ॥

तेनैकेनापि सृष्ट्यादिकर्म कारयतीश्वरः ।
एवं वै ब्रह्मणो मूर्तिमास्थायैकेन तेन वै ॥

सृजत्यवति हन्तीशः कल्पे कल्पे जगत्पतिः ।
तथापि रुद्रमूर्तिं स्वामङ्गीकृत्याम्बिकापतिः ॥

अभिन्नामभिमन्वानः [2] स सदा तत्र तिष्ठति ।
कल्पे ब्रह्मा क्वचिद्देवं समाराध्य सदाशिवम् ॥

स्वयं सृजति वै लोकं संहरत्यवतीति च ।
कल्पेऽन्यस्मिन् हरिस्त्वेवं समाराध्य सदाशिवम् ॥

प्रतिकल्पं जगत्सृष्टिस्थितिसंहारमीश्वरः ।
तानधिष्ठाय देवांस्त्रीन् क्रीडतीति परा श्रुतिः ॥)

देवदेवं समाराध्य स्वस्वाहङ्कारचोदिताः ।
सृष्ट्यादिसर्वकर्माणि कुर्वन्ति स्वाज्ञयैव ते ॥

रुद्रमूर्तेश्च तन्नाम तच्चिह्नं तस्य चेष्टितम् ।
सदाशिवस्य यन्नाम नानयोर्विद्यते भिदा ॥

अन्येषां तामधिष्ठाय ददातीष्टं स्वयं शिवः ।
आज्ञापयति चेशानः सर्वानालोक्य सादरम् ॥

अहमेव हरः सोऽयं नावयोर्विद्यते भिदा ।
अनुशास्येति देवस्तानन्तर्धानं ययौ शिवः ॥

---

[1] अयं कुण्डलितः पाठः पुनः कदाचिदित्यारभ्य तानधिष्ठायेत्यन्तः संहितायां न दृश्यते. [2] सर्वं कर्म करोति वै—पा.

तेऽपि तत्पूजया लब्धमहाभोगास्त्रयः सुराः।
कुर्वन्ति सततं सृष्टिस्थितिनाशान्पृथक् पृथक्॥
तदादि शिवपूजाया महिमासंभृतश्रियः।
भुञ्जन्तो विपुलान् भोगान् ब्राह्मानपि च वैष्णवान्॥
रौद्रांश्च पदसंभूतानीश्वराज्ञासमुद्भवान्।
शैवं च परमानन्दमन्वभूवंस्त्रयश्च ते॥
भण्डासुरः शिवस्याग्रे निहतः शिवया पुनः।
प्राप्य रुद्रगणेन्द्रत्वं दुष्प्रापममरैरपि॥
आस्तेऽद्यापि गणैः सार्धं सन्निधौ परमेशयोः।
अग्निकुण्डसमुद्भूता येयमम्बांशसंभवा॥
त्रिपुरेति समाख्याता पुष्पबाणेक्षुकार्मुका।
सेयमीशं समाराध्य शिवया सह सङ्गता॥
इत्थं भण्डासुरार्थे जगदिदमखिलं ब्रह्मविष्ण्विन्द्रपूर्वान्
रौद्रे यागे शिवोऽयं समिध इव च तान् स्वांशवह्नौ च हुत्वा।
शक्त्या भण्डासुरेन्द्रं त्रिपुरवनितया घातयित्वा महत्या
विश्वं देव्या यथान्यान्सकलमपि सुरान्कल्पयामास भूयः॥
गङ्गासागरसंगमे हिमगिरौ पृष्ठे च मेरोः पुनः
काश्यां वृद्धगिरौ प्रयागगययोर्मध्यार्जुने नैमिषे।
तप्त्वा यत्फलमाप्नुयादविकलं भक्त्या सकृच्छङ्करं
लिङ्गेऽभ्यर्च्य तदाप्नुयात्फलमहो वक्ष्येऽनवद्ये तव॥

---

व्रतानि चीर्णान्यमुनाखिलानि
चान्द्रायणादीनि यथाविधानम्।
भूरादयस्तेन जिताश्च लोकाः
शिवार्चना येन कृता सकृत्स्यात्॥
संसारदुःखानि तितीर्षुरज्ञः
सहस्रजन्मस्वनुभूय तानि।
सकृद्भवानीसहितं महेशं
लिङ्गेऽर्चयेद्भक्तियुतोऽनवद्ये॥

लिङ्गार्चकानां नहि गर्भवासो
न जन्मदुःखं मरणाद्भयं न।
देवत्वमाशापतिता मुनित्वं
देवेन्द्रता तद्वशगानवद्ये॥

ब्रह्माण्डमध्ये सुकृतानुरूपं
भोगाय यद्यत्परिकल्पितं स्यात्।
तल्लिङ्गपूजाकरणेन सिध्ये-
दाचन्द्रतारादधिकं परं तु॥

पूजां महेशस्य करोति यो वा
भोगेच्छया वा पुरुषार्थकामः।
इच्छानुरूपं फलमेत्य सर्वे
संक्रीडतेऽग्रे परमेश्वरस्य॥

कामेषु यं यं प्रसमीक्ष्य कुर्या-
च्छिवार्चनं तल्लभते ह्ययत्नात्।
ईशार्चनेनेह विनानवद्ये
सुदुर्लभं चापि पदं न सिध्येत्॥

गतिर्न पूजारहितस्य जन्तो-
र्मुक्तिर्न पूजारहितस्य जन्तोः।
ब्रह्मेन्द्रविष्णवादिपदं न सिध्ये-
त्तया विना जन्मसहस्रतोऽपि॥

सार्वभौमत्वमीशस्य पूजया देवि दर्शितम्।
अष्टैश्वर्यप्रसिद्धिश्च नान्यथा लभ्यते क्वचित्॥

मनोरमाः पद्मदलायताक्ष्य-
स्त्रियश्च कल्याणयुता गृहाश्च।
आतुष्टिपर्यन्तधनानि शंभोः
सिध्यन्ति पूजाकृतिनोऽनवद्ये॥

रौद्रं समभ्यर्च्य हि लिङ्गमादौ
शिलामयं चारु हरिस्तु भक्त्या।

[1]सुदुर्लभं वैष्णवमाद्यमग्र्य-
मवाप्तवानिष्टपदं परं यत्॥
लक्ष्मीः समाराध्य महेशलिङ्गं
वक्षो हरेः प्राप्तवती निवासम्।
कर्ता समस्तस्य बभूव धाता
सा भारती तस्य च वल्लभाऽऽसीत्॥

आराध्य लिङ्गं त्रिदशेश्वरोऽभू-
च्छक्रः शची तं पतिमाप जिष्णुम्।
आरधनीयोऽखिलचेतनैश्च
तत्साम्बमूर्तिर्गिरिशोऽनवद्ये॥

ईशानपूजाखिलकामदा स्या-
त्पूजा शिवाया अपि सर्वदा स्यात्।
येनापि केनापि ततोऽनवद्ये
पूज्यौ भवानीपरमेश्वरौ च॥

स्वयं भुवि स्थापितदिव्यलिङ्गे
सदन्नक्लृप्ते स्फटिके तु वापि।
तीर्थे गिरौ वा विपिनेऽर्चयित्वा
यामीं न कांचिच्छृणुयात्कथां सः॥

त्रियम्बकेनापि नमः शिवाय-
मन्त्रेण वाथ प्रणवान्वितेन।
आराध्य भक्त्या परमीशितारं
कदापि यामीं श्रुणुयात्कथां सः॥

पूजाप्रभावेन महेश्वरस्य
भक्तिप्रभावेन तथाम्बिकायाः।
शिवोपमानाः शिवसन्निधाने
क्रीडन्ति यावन्नव पञ्च शक्राः॥

---

[1] सुदर्शनम्.

तपांसि यज्ञा बहुदक्षिणाश्च
न रौद्रसूक्तार्चनपुण्यतुल्याः ।
तद्भक्तिपूर्वं सततं महेश-
माराधयेदम्बिकयागमान्तैः ॥

शाठ्येन वा दम्भविलोभतो वा
प्रसङ्गतो वापि यदृच्छया वा ।
ईशं नमन्तो न यमं व्रजन्ति
पञ्चाक्षरेणार्च्य भवन्ति मुक्ताः ॥

आयुष्यमारोग्यमतीव सौख्यं
भोगांश्च राज्यं वरयोषितश्च ।
सुपुत्रदारेष्टधनानि सर्वं
शिवार्चकानां पुरतो भवन्ति ॥

विद्यां च रूपं कुलमिष्टसंप-
त्समृद्धिदारान्भवनं मनोज्ञम् ।
ज्ञानं च विज्ञानफलं समीयु-
राराधयन्तः शिवमिन्दुमौलिम् ॥

एकाहमाराधयतोऽपि रुद्रं
भक्त्या महेशानपदं प्रदिष्टम् ।
किंवानिशं चार्चयतामुमेशं
यथाविधानं शतरुद्रमन्त्रैः ॥

चण्डालः श्वपचोऽपि वाथ पतितो गोघ्नः कृतघ्नोऽपि वा
लिङ्गे शङ्करमर्चयन् सकृदपि स्वान्ते शिवं भावयन् ।
मुक्तः पातककोटिभिर्जलधरैर्मुक्तार्कवद्भ्राजते
सत्यं सत्यमिदं पुनः पुनरिदं वक्ष्येऽनवद्ये तव ॥

मानुष्यमासाद्य सुदुर्लभं य
ईशानपूजां न करोति मूढः ।
तस्यैव तज्जन्म निरर्थकं स्या-
त्पूजाकृतस्तत्सफलं हि जन्म ॥

दोषैर्महापातकिनोऽपि मुक्ता
भवेयुरीशार्चनयानवद्ये ।
भिषक्तया रोगिण आशु रोगै-
रिव प्रसन्ने किमसाध्यमीशे ॥

वक्ष्ये रहस्यं तव शास्त्रसारं
सन्यासवृत्तिश्च जितेन्द्रियत्वम् ।
शिवार्चनायाः सदृशं न विद्धि
सैवानवद्ये सततं विधेया ॥

पापाधिकः पापरतोऽपि पापै-
र्जनैर्युतो वपि नरोऽनवद्ये ।
न लिप्यते वारिजपत्रमम्भसा
पापैस्तथा शङ्करपूजकश्चेत् ॥

प्रातर्वरं दर्शनमीश्वरस्य
गतिं समाप्नोति गरीयसीं सः ।
सन्दर्शनाल्लिङ्गवरस्य नित्यं
पापैर्युतोऽसौ भवतीह मुक्तः ॥

प्रातर्लिङ्गमुमापतेरघहरं सन्दर्शनं स्वर्गदं
मध्याह्ने हयमेधतुल्यफलदं सायन्तने जन्महम् ।
भानोरस्तमयात्प्रदोषसमये पञ्चाक्षराराधनं
तत्कालत्रयतुल्यमिष्टफलदं सद्योऽनवद्येऽन्वहम् ॥

सन्दर्शनं स्पर्शनमीश्वरस्य
वरं वरेण्यस्य करद्वयेन ।
लिङ्गं महापुण्यतमं यदस्मा-
न्न लिप्यते पातककोटिभिश्च ॥

यो मातृहा वा पितृहा पशुघ्नो
भ्रूणस्य वीरस्य गुरोश्च हन्ता ।
अमन्त्रकं वापि महेशलिङ्गं
स्पृष्ट्वानवद्ये स भवेद्विशुद्धः ॥

तदात्मलिङ्गं परिकल्प्य शुद्धः
स्पृशेदनर्हः सकलं तदर्हः ।
त्रयोदशीरात्रिमुखे प्रदोषे
वस्त्रोपहाराङ्गदनीलकण्ठम् ॥

दृष्ट्वा नमेद्भक्तियुतोऽनवद्ये
स मुच्यते पातकराशिभिश्च ।
अनेकजन्मायुतपापराशिः
संदर्शनेन त्रिपुरान्तकस्य ।

क्षिप्रं विनश्यत्यनलेन तूलं
दह्यत्तथा चित्रमहोऽनवद्ये ॥

बालघ्नः पितृहा च गोहयसुतस्त्रीशूद्रहा मातृहा
वक्ता वा परदोषदुष्टवचसो रत्नापहारी नरः ।
देवस्वस्य परस्य वा पशुधनस्तेयी च हन्तापि वा
दृष्ट्वा लिङ्गमुमापतेश्च सहसा पूतोऽनवद्ये भवेत् ॥

जातिस्मरत्वं बहुविद्यतां च
विज्ञानवत्तां पृथिवीपतित्वम् ।
भयेन वा ज्ञानवशेन वापि
प्राप्नोति दृष्ट्वेश्वरवेरलिङ्गम् ॥

पापक्षयं दर्शनमीश्वरस्य
तत्स्पर्शनं रुद्रगणत्वदं स्यात् ।
तद्दर्शनं मोक्षफलं विदद्या-
द्यथाविधानं श्रुतिमन्त्रपूर्वम् ।

प्रदक्षिणं यः कुरुते शिवस्य
भक्त्या पुनः पञ्च हरस्य नित्यम् ।
एकं पुनश्च स्तुतिभिर्विधाय
प्रदक्षिणं याति पुनर्न जन्म ॥

संदर्शनार्थं शिवलिङ्गमूर्तेः
प्रयाति यावन्ति पदानि मर्त्यः ।
पदे पदे स्यादश्वमेधपुण्यं
प्रदक्षिणप्रक्रमणं च तद्वत् ॥

वर्णी सव्यं त्वसव्यं यतिरुभयमपि द्वौ वनस्थो गृहस्थः
प्रादक्षिण्यं विदध्याद्वृषगणवृषभान् सोमसूत्रं वृषं च।
चण्डं सूत्रं च चण्डं वृषभमिति च यत्तत्प्रदोषेषु कार्यं
नत्वा नत्वा प्रणामं प्रणतिरितरथा विष्वगङ्गेन शंभोः ॥

एकं सव्यं त्वसव्यं दशशतकपरं द्वे च लक्षं वृषाद्यं
नत्वा नत्वाष्टकोटिः प्रणतिपरिवृतिः सप्तकोटिः शिवस्य।
प्रादक्षिण्यं ततोऽङ्गैर्दशगुणमखिलं बाह्यकक्ष्यां दश स्या-
त्स्तोत्रादन्यत्र मौनं पदविरलगतिर्मौलिदष्टाञ्जलिश्च ॥

प्रदक्षिणं शङ्करलिङ्गमूर्ते-
र्वदन्ति सन्तः किल सप्तधेति।
दशाधिकं चोत्तरमुत्तरं स्या-
त्पदे पदे यज्ञफलं किलाद्यम् ॥

संदर्शनं वन्दनमर्चनं च
प्रदक्षिणं तर्पणमीश्वरस्य।
शनिप्रदोषे ऋणमोचनाय
दीप्तो भवाम्भोनिधिबाडवाग्निः ॥

प्रदोषकाले न हरिं प्रपश्ये-
त्पश्येत्प्रमादाद्यदि चक्रपाणिम्।
नश्यन्ति चत्वारि नरस्य तस्य
प्रज्ञाबलायूंषि यशोऽनवद्य ॥

प्रदोषकाले न हरिं प्रपश्ये-
त्त्रयोदशी यत्र कला निशायाम्।
स्मृतिक्षयः पश्यति चेत्प्रमादा-
न्मतिक्षयः स्यात्तिसृणां नवानाम् ॥

त्रयोदशीरात्रिमुखे विशेषा-
त्पश्येत्प्रमादाद्यदि तत्प्रदोषे।
वृषद्वयो द्वादशवत्सराणां
हरेः प्रदोषेऽर्चनमानतिं च ॥

संकीर्तनं वा स्मरणं न कुर्या-
त्संदर्शनं भक्तियुतोऽनवद्ये ।
ह्यतत्क्रियश्चेन्न तु धर्मलोपो
विष्णवर्चनं सन्ततकार्यमाहुः ॥

प्रदोषकालेन विनानवद्ये
तत्रापि कुर्वीत नृसिंहमूर्तेः ।
आलोकनार्चानतिकीर्तनानि
होमं जपं भोजनसङ्गमांश्च ॥

स्वाध्यायतैलं च हरिप्रसङ्गं
त्यजेत्प्रदोषेषु नृसिंहमूर्तेः ।
रुद्रात्मकत्वं हि जगत्प्रसिद्धं
तस्मात्समाराधनमीश्वरस्य ॥

यथाविधानं विदधीत काले
तत्राभिषेकेऽभिरतः शिवस्य ।
तद्धदवादं क्रमवक्ष्यमाण-
मभ्यज्य तैलेन घृतेन दध्ना ॥

क्षीरेण वाथेक्षुरसेन गन्धं
सनालिकेरोदकमाक्षिकाभ्याम् ।
शुद्धोदकैश्चाप्यभिषेकयेत्त-
दभीष्टसिद्धिं सकलामवाप्य ॥

विज्ञानवान् [1] ज्ञानदृशा समीक्ष्य
परार्थतत्त्वं प्रमथेन्द्रतां च ।
संप्राप्य मुक्तो भवतीशभक्त्या
[2] दशापराधान् सलिलेन शंभुः ॥

कृताभिषेकः सलिलेऽनवद्ये
शतं सुदुग्धेन गवां च घध्ना ।
[3](सहस्रमाज्यैरयुतं कदाचित्)

---

[1] ज्ञानदृशामवाप्य–पा. [2] दक्षापराधान्–पा. [3] अयमंशो मातृकासु दृश्यते ।

यः कारयेदन्वहमेकमासं
[1] घृताभिषेके शिवलिङ्गमूर्तेः ।
उद्धृत्य कोटिं स्वकुलोद्भवानां
स मोदते राजतपर्वताग्रे ।
गोधूमचूर्णैर्यवजैश्च चूर्णै-
रभ्यर्च्य लिङ्गस्य घृतोक्षितस्य ॥

उष्णाम्बुसिक्तस्य च बिल्वपत्रैः
संघर्षणात्कोटिगवां प्रदाता ।
लिङ्गस्य पीठस्य च कोष्णतोय-
सेकश्च बिल्वच्छदघर्षणं च ॥

कृष्णाष्टमीतैलघृताभिषेकं
सहस्रगोदानसहस्रतुल्यम् ।
यः स्नापयेत्सादरमीशलिङ्गं
सद्योघृतैः कृष्णतिलस्य तैलैः ॥

सकृत्सहस्रायुतकोटिकल्प-
समार्जितैः शुद्ध्यति सर्वपापैः ।
यः स्नापयेत्पाण्डुरभस्मनेशं
भक्त्यानवद्ये स विमुक्तपापः ॥

चन्द्रांशुशुभ्रः शिववत्सुधांशोः
प्रमोदते मण्डल एव साक्षात् ।
गवां सहस्रैर्दश वेदविद्भ्यः
सूर्योपरागे सह हेमवस्त्रैः ॥

दातुः फलं यत्तदहोऽनवद्ये
स्नानेन लिङ्गस्य गवां सुदुग्धैः ।
दध्नाभिषेकं सकृदीश्वरस्य
कुर्वन् पदं वैष्णवमेति दिव्यम् ॥

---

[1] कृताभिषेके—पा.

यो वानवद्ये मधुनेशलिङ्गं
संस्नापयेद्वह्निपदं स यायात् ।
पूतेन तोयेन तु धौतवस्त्रैः
संस्नाप्य लिङ्गं लभते स कामान् ॥

प्रचेतसः प्राप्य पदं प्रसन्नः
प्रमोदते देववधूसहस्त्रैः ।
संस्नापयेत्कृष्णचतुर्दशीं त्वां
शीतांशुवारे तु गवां पयोभिः ॥

सायुज्यमाप्नोति नरोऽनवद्ये
भक्त्या महेशस्य तु दिव्यलिङ्गम् ।
नालीकतोयस्नपितोऽनवद्ये
लिङ्गेऽष्टमी भानुदिनान्यवारे ॥

सायुज्यलाभात्करसन्निविष्टो
नालीसुपीतो धवलश्च मुख्यः ।?
कृष्णाष्टमी वाथ चतुर्दशी च
घृतेन तैलेन शिवस्य लिङ्गम् ॥

संस्नापयेद्वा मधुना नयेत्तम्
सायुज्यमीशस्य हरेः प्रयाति ।
संस्नाप्य तैलेन महेशलिङ्गं
सायुज्यमाप्नोति कुलैस्त्रिभिश्च ॥

तथेक्षुसारेण तदन्तिकेऽसौ
स मोदते कोटिकुलैककल्पम् ।

इत्थं यः शिववासरेषु सुघृतैः संस्नापयेदैश्वरं
लिङ्गं जातु नरो हरं भवशतैरप्यार्जितं पातकम् ।
हित्वा कोटिकुले पुरन्दरसमः प्राप्तो गिरिं राजतं
भूत्वाभीष्टसमस्तलोकगतिको मुक्तोऽनवद्ये भवेत् ॥

घृतेन दध्ना मधुतैलदुग्धैः
संस्नाप्य चैकेन निवेद्य देव्या ।
पञ्चामृतस्नापनमीशलिङ्गे
महाफलं सन्त उदाहरन्ति ॥

रुद्राभिषेकं सलिलैस्तु कुर्या-
त्सुवस्त्रपूतैः शतरुद्रसूक्तैः ।
पञ्चाष्टषट्सप्तदशापि वारं
रुद्रोऽनवद्ये स भवेन्मनुष्यः ॥

पुष्पैश्च पत्रैर्गिरिजैश्च वन्यै-
स्स्वारामजैश्छिद्रककीटहीनैः ।
नवैर्न भूमौ पतितैश्च शुद्धैः
पूजाखिलानां मनुजैर्विधेया ॥

एकेन पुष्पेण तथार्कजेन
लिङ्गार्चनं वेदविदे द्विजाय ।
यद्वा सुवर्णस्य दश प्रदानं
सन्तोऽनवद्ये प्रवदन्ति तुल्यम् ॥

अर्कप्रसूनस्य सहस्रतोऽपि
वरं तथैकं करवीरपुष्पम् ।
ततोऽर्कपुष्पात्करवीरपुष्पा-
द्वैल्वं दलं चम्पकपङ्कजं च ॥

धुत्तूरकद्रोणसमं कुशं च
शमी त्वपामार्गजमुत्पलं च ।
क्रमात्सहस्राधिकमेकमेकं
नीलोत्फलं श्रेष्ठतमं प्रसूनम् ॥

भूमौ नगाग्रेषु नभोन्तराले
पाताललोकेषु च देवलोके ।
रुद्रप्रियं श्रेष्ठतमं सुपुष्पं
नीलोत्पलान्नास्त्यधिकं समानम् ॥

नीलोत्पलानां शिवलिङ्गमूर्ध्नि
मालासहस्रेण समर्पयेद्यः ।
परार्धलक्षायुतमीशतुल्यो
नरोऽनवद्ये वसतीशलोके ॥

अन्यप्रसूनार्चयितानवद्ये
तच्छ्रेष्ठतुल्यः कुलकोटियुक्तः ।
कालं शिवाग्रे निवसेत्सभोगः
तल्लिङ्गमर्च्यं कुसुमैरवश्यम् ॥

अगन्धि दुर्गन्ध्यपवित्रभूतं
केशादिदुष्टं पतितं च नोक्तम् ।
जीर्णं तथा पर्युषितं ह्यपकं
त्याज्यं प्रसूनं मुकुलं वदन्ति ॥

नचेत्प्रसूनानि तदीयपत्रैः
तेषामभावे तु फलैर्विधेया ।
पूजा तृणैरोषधिभिश्च गुल्मैः
भक्त्याथवा केवलयानवद्ये ॥

वक्ष्येऽनवद्ये शृणु ते रहस्यं
धुत्तूरपुष्पेण शिवं निशायाम् ।
शिवां निशायामपि केतकीयैः
सालोक्यसिद्धिं लभते सकल्पम् ॥

दलैरपामार्गसमुद्भवैस्तु
यः पूजयेत्साम्बशिवं समन्त्रम् ।
चतुर्दशीयुक्तदिने विशेषा-
त्सायुज्यमाप्नोति स चानवद्ये ॥

घृतान्वितं गुग्गुलधूपमेकं
मासार्धमात्रं विनिवेदयेद्यः ।
लोकं स चाप्नोति शिवस्य साक्षा-
च्छिवोऽपराधं क्षमते सहस्रम् ॥

१ अम्भोधितोयेन घृतेन दीपः
पुरो महेशस्य तथाऽम्बिकायाः ।
तावद्युगानां शिवलोकमेति
सहस्रसूर्यप्रतिमो गणेशः ॥

तैलेन वाथ प्रतिबोध्य दीपं
शिवाग्रतो गुग्गुलधूपमाद्यैः ।
दत्वा नरः पापचयैर्विमुक्तः
कामानवाप्नोति नरोऽनवद्ये ॥

घृतेन दीपं परमेश्वराय
साज्यं ददद्गुग्गुलधूपमारात् ।
गङ्गानदीस्नानफलं प्रयाति
[1]वृद्धाद्रिवासं लभतेऽनवद्ये ॥

इष्टं लभेद्यद्यतीव हृद्यं
भोज्यं प्रियं स्वादु गृहे यदस्ति ।
तत्तत्समस्तं परमेश्वराय
निवेदयन्नीश्वरतामुपैति ॥

दद्याद्यः शिवलिङ्गमूर्ध्नि कुसुमं चैकं स तीर्थापगा-
स्नानैः सर्वमयैः समस्तधरणीदानैर्गवां कोटिभिः ।
स्वर्णैर्मेरुसमैः फलं यदुदितं [2]दत्ते द्विजेभ्यः श्रुतौ ?
तत्पुण्यं लभते सहस्रगुणितं सद्योऽनवद्ये ध्रुवम् ॥

एकं प्रसूनं सलिलं च किंचि-
दमन्त्रकं वापि समन्त्रकं वा ।
समर्चयेच्छङ्करमूर्ध्नि भक्त्या
स्ववंशकोट्या शिवलोकमेति ॥

दलैश्च बैल्वैरथ भृङ्गपत्रै-
रभ्यर्चनं शङ्करलिङ्गमूर्ध्नि ।
सालोक्यसारूप्यफलप्रदं स्या-
त्स्ववंशविंशस्य तथानवद्ये ॥

तस्मादवश्यं विदधीत पूजा-
मुमापतेर्यद्यपि संकटेऽस्मिन् ।
नैव त्यजेत्प्रक्रमणेन पूजां
भक्त्यैकपुष्पार्चनतोऽनवद्ये ॥

---

[1] वृषाद्रि—पा. [2] दत्तैः इति स्यात्.

वने नगाग्रे सरितां च कूले
तीर्थेऽमरैर्वा मुनिभिर्मनुष्यैः।
प्रतिष्ठितं लिङ्गमुदीक्ष्य भक्त्या
पूजा भवेत्प्रक्रमणैर्नमोभिः॥

भक्त्या विना यज्ञतपोभिरुग्रै-
र्दानैरथान्यैरनवद्य ईशः।
ध्येयो न दृश्यो न च [1]भाषणीयः
स्पृश्यो न चार्च्यो न तु जन्मलक्षैः॥

पूजा च भक्तिः शिवभक्तमैत्री
तथानुमोदः श्रवणं कथायाः।
क्रियाङ्गजेष्टास्मृतिरष्टचिह्नै-
र्भक्तोऽनवद्येऽभिहितो मुनीन्द्रैः॥

चिह्नैर्युतो विप्रवरश्च विद्वान्
यतिः श्वपाकोऽपि स एव भक्तः।
नान्यश्चतुर्वेदधरोऽपि पूज्यो
देयं च तस्मै स शिवस्वरूपः॥

पत्रं च पुष्पं फलमेकसिद्धं
भक्त्येष्टदेवाय समर्पयेद्यः।
[2]न शक्नुयात्तस्य फणीश्वरोऽपि
पुण्यं विवेक्तुं भुवि चानवद्ये॥

प्रासादमत्युच्छ्रितगोपुरैश्च
विमानमुत्तम्भनमण्टपं यः।
[3]वित्तानुसारेण करोति पुण्यं
तस्यानवद्ये कथितुं न शक्यम्॥

मृद्वालुकागोमयभस्मपिष्टैः
कृत्वार्चयन् जातु महेशलिङ्गम्।
[4]कुशाग्रसु कुड्याङ्गुलिवेदिकासु
क्रीडाभिरप्येति गणेश्वरत्वम्॥

---

[1] भूषणीयः–पा. [2] नानाशयेत्तस्य शिवोऽपि यस्मान्महान्यतीशस्य स चानवद्ये–पा.
[3] चित्तानु–पा. [4] कुशास्वकुड्या–पा.

वेदिर्भवानी शिवलिङ्गमीशः
सच्चित्सदानन्दमयौ भवेताम्।
प्रीतौ च तौ नास्य हि दुर्लभं त-
ल्लिङ्गार्चनादप्युभयत्र सत्यम्॥

पूजा विधेया विधिनेश्वरस्य
श्रुत्वा गुरोर्दोषकरी न चेत्सा॥
कलावजानन् गुरुतामुपत्य
घोरं स शिष्यो नरकं प्रयाति।

श्रुत्यर्थं [1]न कलौ वदन्ति मनुजाः स्वल्पायुषोऽबुद्धयः
किंचिज्ज्ञा अपि तं वदन्ति सकलास्तच्छिष्यतामाप्नुयुः।
ते चामी विहितेतरार्थवशगा नीचां गतिं यान्त्यतः
प्राप्तः सद्गुरुणोक्तमार्गवशगो मुक्तोऽनवद्ये भवेत्॥

महिषासुरव्याघ्रासुरवधः

(सूतः)—(शं. सं. उप. ७५)

पुरा सुरा हरिब्रह्मप्रमुखा अधिपा दिशाम्।
महिषेणासुरेन्द्रेण तथा व्याघ्रासुरेण च॥

चिरं विप्रकृतास्त्यक्तस्वस्वलोकास्समेत्य ते।
केदारे देवमीशानं पूजयामासुरञ्जसा॥

ततः प्रसन्नो भगवान् तेषामाविरभूच्छिवः।
नमस्कृत्य तदा तस्मै प्रोवाच मधुसूदनः॥

शिरस्यञ्जलिमाधाय विनयेन समन्वितः।
मम देव रजोमोहाद्ब्रह्मणश्च पुरावयोः॥

कलहेन महद्युद्धमभूद्वै रोमहर्षणम्।
ब्रह्मा कोपान्मदुपरि ससर्ज महिषासुरम्॥

अहं व्याघ्रासुरं तस्मिन्नसृजं क्रोधमूर्छितः।
आवाभ्यां यत्तपस्तप्तं त्वत्प्रीतिजनकं महत्॥

---

[1] सकला विदन्ति—चा.

तेन पुण्येन महता तौ सृष्ट्वा बलवत्तरौ।
तौ नियुध्य चिरं कालमन्योन्याशक्यनिग्रहौ॥

व्याघ्रोऽन्वधावद्ब्रह्माणं महिषो मां महेश्वर।
ततश्च विबुधान् सर्वानसुरौ च न्यधावताम्॥

इदानीमधिकं ताभ्यां पीड्यते जगतां त्रयम्।
वयं देव तयोरग्रे स्थातुमेव न शक्नुमः॥

तौ निगृह्यासुरौ दुष्टौ रक्ष रक्ष दयानिधे।
इति विज्ञापितो देवः सर्वेशो मधुविद्विषा॥

सस्मितं गिरिजावक्त्रमवलोक्य जगत्पतिः।
दुर्गामुत्पाद्य सहसा स्वाज्ञया परमेश्वरः॥

सिंहं तस्या ददौ यानमतिभीमपराक्रमम्।
आयुधानि शितान्यस्या अष्टादश ददौ मुदा॥

अनुगृह्य च तामाशु कृपापूर्णेन चक्षुषा।
आज्ञापयत्तयोरीशो निग्रहार्थं सुरद्रुहोः॥

सारूढा सिंहमतुलं सर्वायुधविशारदा।
व्याघ्रं संहृत्य सहसा जगतामवनाय सा॥

महिषस्य शिरश्छेदं चकार विशिखैः पुनः।
तच्छिरः पुरतस्तस्या अयुध्यत पुनः पुनः॥

तदाक्रम्य पदैकेन शूलाग्रेण जघान च।
तत्पदस्पर्शमात्रेण स ज्ञानी महिषासुरः॥

तामस्तुवन्महामायां महिषासुरमर्दिनीम्।
प्रीतास्मै सा ददौ क्षिप्रं गाणपत्यं सुरद्रुहे॥

सन्निधौ परमेशस्य वासं च महिषाय सा।
पुनश्च सन्निधिं प्राप्य शिवयोरसुरार्दिनी॥

तावाराध्य ततो लिङ्गे तयोरग्रेऽवसन्मुदा।
देवाश्च ते निरातङ्का देवं देवीं प्रणम्य च॥

दुर्गां च स्वं स्वमचिरादापुः सर्वे तदास्पदम्।

## सप्तासुरसंहारः

(सूतः)—(शं. सं. उप-७६)

स्वर्गे कदाचिद्देवेन्द्रे भोगान् [1]भुञ्जति स्वर्भवान् ॥

तं द्रष्टुं सप्त ऋषयः संप्रापुः शंसितव्रताः ।
तानागतान् स सत्कृत्य महेन्द्रो मुनिसत्तमान् ॥

अहं धन्योऽस्मि मुनयो यूयमत्र यदागताः ।
आप्तकामो विशेषेण युष्मान् तत्प्रार्थये वरान् ॥

देवा मनुष्याः पितरस्ते वयं सख्यमाश्रिताः ।
असुरा राक्षसाश्चैव पिशाचाश्च तपोधनाः ॥

सखायस्तन्निवृत्तास्तदस्माकं रिपवोऽसुराः ।
असद्बाधारता नित्यं यूयं तच्छान्तये स्थिताः ॥

तस्माद्दिक्ष्वमरावत्यां यूयं प्रत्येकमास्थिताः ।
अग्निं निधाय कुण्डेषु रक्षोघ्नेन मखेन वै ॥

यजध्वं प्रत्यहं देवं नियमेन निरन्तरम् ।
मत्प्रीत्यर्थं मुनिश्रेष्ठाः सप्त यूयं महत्तराः ॥

ब्रुवन्तमेवं देवेन्द्रं प्रत्यूचुः सप्त ते द्विजाः ।
वयं स्वकर्मानुष्ठानं त्यक्त्वात्रैव निरन्तरम् ॥

कथं वत्स्यामहे देव मघवन्निति तेऽब्रुवन् ।
ब्रुवतस्तानितीन्द्रोऽपि प्रणिपत्य कृताञ्जलिः ॥

मदर्थं यूयमत्रैव यजध्वमृषिसत्तमाः ।
युष्माकं ज्ञानिनां किं वानुष्ठानं ब्रूत सत्तमाः ॥

इत्यर्थितं महेन्द्रस्याशक्नुवन्तो निरासितुम् ।
चक्रुस्तथा ते दिक्ष्वग्निं प्रतिष्ठाप्य यथाविधि ॥

रक्षोघ्नं यज्ञममला महेन्द्रप्रीतिमिच्छवः ।
नात्यर्थं प्रीतमनसो बहिः संतोषलाञ्छनाः ॥

---

[1] भुञ्जन्निषेदिवान्—पा.

कुर्वत्सु यज्ञं रक्षोघ्नं तेषु सप्तसु योगिषु ।
समुत्तस्थुर्महाघोरा असुराः सप्त सप्तसु ॥

रक्तासुरोऽत्र प्रथमो रक्तबीजाक्षकोऽपरः ।
अन्ये तु पञ्च विख्याताः [1] पञ्चवारणसंज्ञया ॥

एते सप्त विनिर्गत्य कुण्डेभ्यो ऋषिसत्तमान् ।
दृष्ट्वात्मनो धावमानानन्वधावन्महासुराः ॥

पलायतस्तान् सन्त्यज्य सप्तर्षीन् सप्त चासुराः ।
इन्द्रलोकमनुप्राप्य चेन्द्रादीनपि धावतः ॥

प्रसह्य जघ्निरे मूर्ध्नि लुण्ठयाञ्चक्रिरे पुरम् ।
ब्रह्मलोकमनुप्राप्य विष्णुलोकं च तेऽसुराः ॥

तांस्तान् प्रहृत्य सहसा प्रजह्रुस्तत्पुराणि च ।
हिंसितुं समनुक्रान्ताः प्राणिनो निखिलानपि ॥

सप्तर्षयो महेन्द्राद्या ब्रह्मा विष्णुश्च लोकपाः ।
अपूजयन्महादेवं तेषां शान्तिमभीप्सवः ॥

ततः कैलासशिखरं संप्राप्य जगदीश्वरम् ।
व्यजिज्ञपंस्तं प्रणम्य चेष्टितं त्रिदशद्विषाम् ॥

तानाह स महादेवः स्मयन्निव दयानिधिः ।
इन्द्रः स्वात्मोपभोगार्थं महर्षीन् मदुपासकान् ॥

बलात्कारेण रक्षोघ्नं यज्ञं कर्तुं न्ययुङ्क्त हि ।
विपरीतः स वै यज्ञः सुरघ्नः समपद्यत ॥

उपप्लवाय ब्रह्मेन्द्रविष्ण्वादीनामजायत ।
इति ब्रुवन्महादेवो जहास सकरध्वनिः ॥

ततो देवी समीपस्था दुर्गा दैत्यसुरार्दिनी ।
तामाह महिषव्याघ्रघातिनीं जगतां पिता ॥

रक्तासुरं महादुर्गे रक्तबीजाक्षमेव च ॥
पञ्चापि [2] वारणान् सङ्ख्ये जहि शीघ्रं मदाज्ञया ।
इति कुण्डोदरं चापि [3] पञ्चवारणनिग्रहे ॥

---

[1] पञ्चरावण. [2] रावणान्–पा. [3] रावण–पा.

न्ययुङ्क्त तौ विनिर्गत्य दुर्गाकुण्डोदरावुभौ ।
जघान समरे रक्तं रक्तबीजाक्षमम्बिका ॥

कालीमुत्पाद्य तज्जिह्वासमराङ्कणमास्थिता ।
रक्तासुरं च संहृत्य रक्तबीजाक्षमेव च ॥

तयो रुधिरसंसक्तपांसवोऽपि [1] महासुराः ।
समुत्तिष्ठेयुरेतस्मात्कारणात्कालिजिह्वया ॥

रक्तानि संहृतान्येवमसुरौ संहृतौ तया ।
ततः काली च तद्रक्तपानादेव मदाकुला ॥

सर्वसंहरणोद्युक्ता चुक्रुशुः प्राणिनोऽखिलाः ।
ततः प्राण्युपकाराय तद्गर्वशमनाय च ॥

तथा ननर्त देवेशस्तदद्भुतमिवाभवत् ।
निर्जिता ताण्डवे काली देवेन विगतस्मया ॥

सलज्जा दुर्गया साकमाश्रिता सर्वमङ्गलाम् ।
कुण्डोदरोऽपि पश्चापि वारणान्महतोऽसुरान् ॥

निर्जित्य भक्षयित्वा तान् साम्बमीशानमाश्रितः ।
ब्रह्मा च विष्णुर्देवेन्द्रः सप्तापि ऋषयः सुराः ॥

देवदेवाज्ञया प्राप्य स्वं लोकं मोदमाप्नुवन् ।
एवमेवासुराक्रान्तास्त्रिदशास्ते यदा यदा ॥

तदा तंदेशमाराध्य संभूय सुखिनोऽभवन् ।
पृथक् पृथक् समाराध्य पदप्राप्तिः पुरोदिता ॥

संभूय चेशमाराध्य सिद्धिः प्रोक्ता मयाधुना ।
इतीदं सर्वमाख्यातं पूजामाहात्म्यमुत्तमम् ॥

य इदं श्रुणुयान्नित्यं श्रावयन्ति पठन्ति च ।
विलिख्य पुस्तके नित्यमर्चयन्ति च सादरम् ॥

तेऽभीष्टमैहिकं सर्वमासाद्य विगताधयः ।
पुत्रपौत्रस्नुषाभ्रातृपितृमातृसुहृद्गणैः ॥
जामातृदुहितुःपुत्रबन्धुवर्गैश्च सन्ततम् ।

---

[1] महत्तराः—पा. [2] रावणान्—पा.

दृष्ट्वा दृश्यानि सर्वाणि चाचरित्वा मुदान्विताः ।
तथैवाचरणीयानि चान्ते निर्वृतिमाप्नुयुः ॥

सकलमेतदिदं परमेशितु-
श्चरणपङ्कजयोः परिचर्यया ।
हरिपितामहवज्रिपदाप्तयो
मुनिवराः प्रभवन्ति समृद्धयः ॥

(शं. सं. उग्र—७७)

पुरा ब्रह्मात्मजाः पुण्याः सनकश्च सनन्दनः ।
[1] सनत्सुजातो भगवान् सनत्पूर्वः कुमारकः ॥

चत्वारो ऋषयः शम्भोः पूजां पुण्यां विधाय ते ।
प्रसन्नेन ततो वेदान् शिवेनाध्यापिताः खलु ॥

आगमांश्च पुराणानि सेतिहासानि सुव्रताः ।
शिवार्चनपरा नित्यं शिवयोगेन पावनाः ॥

शिवज्ञानाग्निना दग्धमहापातकसंचयाः ।
जीवन्मुक्ता बभूवुस्ते परमानन्दनिर्भराः ॥

व्यासभुजस्तम्भः

व्यासः पुरा महादेवं विश्वरक्षाकरं परम् ।
पूजयित्वा ततो वेदान् पुराणानि मुनीश्वराः ॥

ज्ञात्वा सम्यग्जगादैतान् शिष्याणां च तपस्विनाम् ।
परतत्त्वं महादेवं ज्ञातवान् तत्वतो बुधः ॥

ऐश्वर्यमदमोहेन विद्यागर्वेण मायया ॥
ईश्वरस्य तदा शिष्यानृषीनपि च वीक्ष्य सः ।

नारायणं परं तत्त्वं परं ब्रह्म सनातनम् ॥
जगादाविद्यया शंभोर्मोहितः परमेशितुः ।

तदोचुस्तापसाः सर्वे शिष्याः [2] स्वस्य विचारतः ॥
इयन्तं कालमीशानं परं ब्रह्म सनातनम् ।
उक्तवानसि विप्रेन्द्र तद्विरुद्धमिहोच्यते ॥

---

[1] सनातनश्च भगवान्—पा. [2] तस्य विचारिताः.

वेदान्तानां पुराणानां विरुद्धार्थं ब्रवीषि किम्।
इति पृष्टोऽपि तैर्व्यासः पुनः प्राह द्विजानिमान् ॥

विष्णुरेव परं ब्रह्म नान्यः कश्चन विद्यते ।
तूष्णीमुक्तं मया पूर्वं यत्किंचित्तत्तदा द्विजाः ॥

तदिदानीं परं ब्रह्म ज्ञातुमर्हथ माधवम् ।
इति तस्य वचः श्रुत्वा विरुद्धार्थं द्विजोत्तमाः ॥

संशयाविष्टमनसः पुनः प्रोचुस्तपोधनम् ।
वेदैः पुराणैर्विश्वेशो वेद्य एको महेश्वरः ॥

इत्युक्तं भवता पूर्वममोहेनैव भूरिशः ।
तद्विरुद्धं वदस्यद्य मोहितो माययेशितुः ॥

न प्रमाणमिदं तस्माद्वचनं तव सत्यतः ।
इति तेषां वचः श्रुण्वन् पुनर्व्यासस्तपोधनः ॥

सत्यं ब्रवीमि विप्रेन्द्राः युष्माकं सन्निधावहम् ।
विष्णुरेव परं तत्त्वं परं ब्रह्म सनातनम् ॥

ततस्ते ऋषयः शिष्याः श्रुण्वन्तोऽस्य गिरं तदा ।
यदि सत्यं ब्रवीष्यद्य तर्हि काशीपुरीं पराम् ॥

[1] गत्वा च सत्यतो ब्रूहि भुजमुद्धृत्य तापस ।
तदा प्रमाणं वचनं भवेत्तव न संशयः ॥

इति तेषां वचः श्रुत्वा तथेत्युक्त्वा स तापसः ।
काशीं प्राप्य महापापप्रशोधनपटीयसीम् ॥

तत्र विश्वेशसन्निधे भुजमद्धृत्य निर्भयः ।
नारायणः परं ब्रह्म परमात्मा परात्परः ॥

परं तत्त्वं परं ज्योतिरुद्धृत्य भुजमुच्यते ।
सत्यं सत्यं पुनः सत्यं सम्यगत्रोच्यतेऽधुना ॥

इति ब्रुवति मोहेन व्यासे तस्मिञ्छिवान्तिके ।
स्तब्धौ भुजौ तथा व्योम्नि न च जिह्वा चचाल ह ॥

---

[1] गत्वात्र—पा.

केवलं दारुवत्तस्थे निश्चेष्टः स च तापसः ।
तद्दृष्ट्वा ऋषयः सर्वे तच्छिष्याश्च भयान्विताः ॥

अहो मोहस्य माहात्म्यं यदयं वदतां वरः ।
व्यस्तवान् सकलान्वेदान्पुराणानि च सर्वदा ॥

तथापि विपरीतार्थं वदत्यत्र भयं विना ।
तदस्य स्तम्भितौ बाहू वाग्बन्धोऽपि बभूव ह ॥

असत्यवादी व्यासोऽपि शिवमायाविमोहितः ।
तदस्य शिक्षा दैवेन कृता खलु दुरत्यया ॥

इति सर्वेऽपि तच्छिष्या ऋषयो भयकम्पिताः ।
चक्रुः स्तोत्रं महेशस्य बद्धाञ्जलिकराः पुनः ॥

तत्राविरासीद्भगवान् तदैव मधुसूदनः ।
व्यासं स्तब्धकरं वीक्ष्य विस्मयाकुलितान्तरः ॥

अहो तव मतिः कुत्र गता व्यासाधुना ऋषे ।
शिवं विश्वाधिकं शान्तं सच्चिदानन्दरूपिणम् ॥

योगिध्येयमुमाकान्तं मम कर्तारमव्ययम् ।
सर्ववेदान्तसर्वस्वं सर्वाधिकमनुत्तमम् ॥

मुक्त्वा मां मायया तस्य प्रोक्तवानधिकं बत ।
ततो न तव मात्रं हि मोहः किं तु ममाप्यहो ॥

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
शिव एव परं तत्त्वं विश्वस्मादधिकः परः ॥

अहं सर्वजगत्कर्ता मम कर्ता महेश्वरः ।
तस्य देवादिदेवस्य कर्ता कोऽपि न विद्यते ॥

स एव सकलानीशः शास्ति सर्वेश्वरेश्वरः ।
तत्प्रसादाद्धिनिर्मोक्षः सर्वेषां संसृतेर्ध्रुवम् ॥

इत्युक्त्वा ऋषिभिः साकं तुष्टाव परमेश्वरम् ।
जय शंभो महादेव सच्चिदानन्दविग्रह ॥

नमस्तेऽस्तु महादेव परात्परतराय च ।
विश्वाधिकाय भवते नमो यज्ञेश्वराय ते ॥

नमस्ते सर्वकर्त्रेऽस्तु पुनर्भूयो नमो नमः ।
एवं स्तुवति देवेशं हरौ साकमृषीश्वरैः ॥

गतमोहस्तदा व्यासो भयाकुलितमानसः ।
विश्वाधिको महादेवः परतत्त्वं परात्परम् ॥

सर्वेषामपि लोकानां शास्ता संकल्पमात्रतः ।
तदाज्ञया जगत्सर्वं सृजते पूर्ववद्विधिः ॥

नारायणोऽपि भगवानाज्ञया पालयत्यदः ।
यस्य पूजाप्रभावेन ब्रह्मा ब्रह्मत्वमाप्तवान् ॥

विष्णुश्च स्वपदं प्राप पूजया यस्य शूलिनः ।
नमस्तस्मै महेशाय मायातीताय शंभवे ॥

इति तुष्टाव देवेशं व्यासः शंभुं तपोधनः ।
तदा प्रादुरभूच्छंभुः साम्बः सगण ईश्वरः ॥

तदानीं वीक्ष्य तं नन्दी व्यासं शङ्करवल्लभः ।
त्वया कृतं महामोहात्परब्रह्मणि शङ्करे ॥

नीलग्रीवे विरूपाक्षे सच्चिदानन्दविग्रहे ।
विश्वाधिके विश्वरूपे महाग्रासे महात्मनि ॥

तिष्ठति ब्रह्मविष्ण्वादिदैवतैरपि वन्दिते ।
वृथैव सत्यं दुर्बुद्ध विष्णुर्ब्रह्मेत्यभाषथ ॥

उत्थापितौ यतो बाहू निकृन्तव्यौ त्वया ततः ।
पश्य शंभुं विरूपाक्षं प्रसन्नं तव चाग्रतः ॥

अनेकब्रह्मविष्ण्वादिकपालालङ्कृताकृतिम् ।
अप्रतर्क्यमनिर्देश्यमनन्तमहिमास्पदम् ॥

दृष्ट्वा व्यासः शिवं साक्षाच्चक्षुष्मत्तामवाप्तवान् ।
प्रणम्य दण्डवद्भूमौ समुत्थाय कृताञ्जलिः ॥

क्षन्तव्यो मेऽपराधोऽयमज्ञानेन विजृम्भितः ।
महादेव महादेव महादेव दयानिधे ॥

भवानेव भवानेव भवानेव गतिर्मम ।
एवं स्तुवति देवेशं व्यासे तस्मिन् कृताञ्जलौ ॥

तत्रैवान्तरधाच्छंभुः सर्वैश्च गणनायकैः।
ततो दृष्ट्वा महादेवं विष्णुः सर्वेऽपि तापसाः॥
व्यासशिष्याश्च सर्वे ते हर्षकण्टकितत्वचः।
व्यासं संवीक्ष्य नितरां भयकम्पितविग्रहम्॥
इतः परं न वक्तव्यमीदृग्वाक्यं त्वयानघ।
शिवमेव परं तत्त्वं ब्रूहि नित्यं विना मदम्॥
इत्युक्त्वान्तर्दधे विष्णुर्बुद्धिं व्यासाय भूसुराः।
ऋषयश्च ततः सर्वे स्वं स्वमाश्रममापिरे॥
विचिन्त्य मनसा पश्चान्निष्कृतिं स च तापसः।
काञ्चीं प्राप्य स्वशिष्यैश्च कलिदोषविवर्जिताम्॥
तत्र संपूज्य विधिना प्रतिष्ठाप्य महेश्वरम्॥
[1] मुक्त्वाऽशपं च दुरितं [2] मोहं शंभोः कृपाबलात्॥
निर्मलं प्राप संतोषं शिवज्ञानप्रभावतः।

## ऋषिपूजा

(शं. सं. उप.–७८)

पुरा वसिष्ठः पुण्यात्मा पूजयित्वा पुरद्रुहम्॥
अरुन्धतीमवाप्यायं गां च कामप्रदायिनीम्।
सर्वविद्यापरिज्ञानं प्राप्यानन्यसमः सुधीः॥
सप्तर्षिष्वपि चैकत्वं प्राप्तवान् पूजया प्रभोः।
पराशरः शक्तिसुतो वसिष्ठस्य च पौत्रकः॥
शिवपूजारतो नित्यं दिने कस्मिन् स्वमातरम्।
विधवां वीक्ष्य दुःखेन पप्रच्छ पितरं तदा॥
मातः पिता मम गतः कुत्रेति रहसि स्वयम्।
तस्य तद्वचनं श्रुत्वा तन्माता दुःखितान्तरा॥
निहतस्ते पिता पुत्र राक्षसेन दुरात्मना।
अत एव हि संप्राप्तं वैधव्यमधुना मम॥

---

[1] मुक्त्वा दोषं च–पा. [2] मोक्षं–पा.

तदत्र निष्कृतिः कार्या त्वया यत्नेन पुत्रक ।
इति तस्या वचः श्रुत्वा दुःखाकुलितमानसः ॥

राक्षसं हन्तुकामोऽयं शिवपूजां चकार ह ।
ततः प्रसन्नो भगवान् पूजया तुष्टमानसः ॥

तस्मै वरांश्च दत्वाशु तत्रैवान्तर्दधे प्रभुः ।
ततो ददर्श पितरं मृतमप्यस्य चाज्ञया ॥

चकार च ततो यागं विनाशाय च रक्षसाम् ।
ततः शिवाज्ञया पेतुरग्निकुण्डेऽत्र राक्षसाः ॥

मम्रुः केचन निर्दग्धाः शिवमन्त्रप्रभावतः ।
दृष्ट्वैतत्तापसाः सर्वे वसिष्ठश्च महामतिः ॥

शक्तिं संप्रीणायामासुस्तत्कोपप्रशमाय वै ।
मुक्त्वा कोपं ततः शक्तिर्वेदांश्चैवागमानपि ॥

पुराणानि च सर्वाणि ज्ञात्वायं तत्त्वतो द्विजाः ।
शास्त्रं च कल्पयित्वायं किंचित्संतोषसंयुतः ॥

नित्यत्वं प्राप कृपया शंभोः सोऽयं महीसुराः ।
पूजयित्वा पुरा शंभुं विश्वामित्रोऽपि तामसः ॥

सृष्टिं चकार मतिमांस्त्रिशङ्कुं च ररक्ष ह ।
लब्ध्वा वरान्महादेवात्सप्तर्षिष्वेकतामगात् ॥

व्याघ्रपादोऽपि पुण्यात्मा महर्षिरयमीश्वरम् ।
पूजयित्वा पुरारातिं तत्प्रसादात्सुतं वरम् ॥

लब्धवान् देवदेवस्य ददर्श नटनं महत् ।
नित्यत्वं प्राप देवेशकृपया स मुनीश्वरः ॥

## उपमन्युकथा

व्याघ्रपादात्मजः पूर्वमुपमन्युर्महामतिः ।
क्षीरं ययाचे बाल्येऽसौ मातरं स्वगृहे स्थिताम् ॥

सा ददौ कृत्रिमक्षीरं पिष्टमिश्रजलेन वै ।

तत्पीत्वा विरसत्वात्स रुरोद भृशदुःखितः।
नेदं क्षीरं जलं मातरित्युक्त्वा बाधयन्मुहुः॥

ततः सा दुःखदुःखेन रुदन्तं वीक्ष्य चात्मजम्।
([1]नास्ति पुत्र गृहेऽस्माकं क्षीरं स्वादु मनोहरम्॥

वसिष्ठस्तव पुण्यात्मा मातुलः शङ्करप्रियः।
शिवपूजारतो नित्यं वेदवेदान्तपारगः॥

लब्धवान् पूजया शंभोः कामधेनुं पयस्विनीम्।)
पीत्वा त्वं तद्गृहे क्षीरं कामधेनुसमुद्भवम्॥

वाञ्छस्यत्रापि बालत्वात्क्षीरं व्यर्थतयात्मज।
अप्रसन्ने विरूपाक्षे कुतः क्षीरेण भोजनम्॥

विशेषेण दरिद्रस्य तव क्षीरं कुतो भवेत्।
तदत्र पूजा कर्तव्या त्वया क्षीरैषिणात्मज॥

विश्वाधिकस्य सततं योगिध्येयस्य शूलिनः।
पूजया लभ्यते सर्वं वाञ्छितं मनुजैः प्रभोः॥

इति मातृवचः श्रुत्वा तथेति [2]मुनिबालकः।
किंचिद्दूरमयं गत्वा रहःस्थानं सुशोभनम्॥

भूतिभूषितसर्वाङ्गो रुद्राक्षवरभूषणः।
ध्यायन्नेकमनाः शंभुं कृतिनिश्चितमानसः॥

पूजयामास देवेशं पुराणपुरुषं प्रभुम्।
ततः प्रसन्नो भगवान् तस्मै मघवदाकृतिः॥

([3]तं दृष्ट्वा मघवन्तं स कोपाकुलितमानसः।
त्वं गच्छ पुरतो मेऽद्य यत्र कुत्रापि वृत्रहन्॥

न स्मर्यते भवानद्य मया पूजारतेन वै।)
पूजाविघ्नो यदि भवेन्महादेवस्य शूलिनः।
शपेऽहं त्वामिति तदा चुकोप शपितुं सुरम्॥

---

[1] पुराणपाठः. [2] मुनिपोतकः—पा. [3] पुराणपाठः.

तस्य तद्वीक्ष्य चित्तस्य धैर्यं शक्तिमपीश्वरः ।
प्रादुरासीत्क्षणेनैव वृषोपरि सहोमया ॥

तं दृष्ट्वा साम्बमीशानं प्रणम्य भुवि दण्डवत् ।
उत्थाय सहसा भक्त्या ननर्तानन्दनिर्भरः ॥

धन्योऽस्म्यनुगृहीतोऽस्मि चाहमद्य महेश्वर ।
त्वद्दर्शनेन देवेश काङ्क्षितं फलितं मम ॥

इति तस्य वचः श्रुत्वा महेशस्तापसप्रियः ।
क्षीरार्थिने ददौ तस्मै क्षीरसागरमीश्वरः ॥

सर्ववेदान्तविज्ञानं पुराणानां तथैव च ।
शास्त्राणामपि सर्वेषां तव तत्त्वं स्फुरत्वलम् ॥

अविनश्वरता भूयात्तव तापसपुत्रक ।
इति दत्वा वरानन्यानीश्वरोऽन्तरधात्क्षणात् ॥

लब्ध्वा वरं ततः शम्भोरुपमन्युः शिवप्रियः ।
पूजयित्वा महादेवं गौतमोऽपि महामुनिः ॥

शिवव्रतानि सर्वाणि चरन् शङ्करवल्लभः ।
[1] सर्वविद्याः शिवज्ञानं सम्यक् प्राप्य प्रभोर्वशी ॥

नित्यत्वं प्राप्य परया प्रीत्या तस्थे शिवप्रियः ।

## (शता) सदानन्दचरितम्

सदानन्दोऽपि योगीन्द्रः सच्चिदानन्दविग्रहम् ॥
संपूज्य परया भक्त्या साक्षात्साम्बं महेश्वरम् ।
संचरन् सर्वलोकेषु भुवनेष्वपि सन्ततम् ॥

तत्र तत्र च वृत्तान्तं सम्यग्ज्ञात्वा तपोधनः ।
शंभवेऽनुदिनं सर्वं विज्ञाप्य परया मुदा ॥
कैलासवासिने कृत्वा प्रणामं च यथाविधि ।
परमानन्दकल्लोलपारावारो बभूव सः ॥

---

[1] सर्वविषापरिज्ञानां—पु. पा.

## मार्कण्डेयचरितम्

मृकण्डुरपि संपूज्य महादेवं महामुनिः ।
सर्वविद्यासु निपुणं मार्कण्डेयमवाप्तवान् ॥

प्रसिद्धिं तेन नितरां संप्राप्य भुवनेष्वपि ।
सत्यलोके निवसति सर्वदा परया मुदा ॥

मृकण्डोश्च सुतो धीमान्मार्कण्डेयो महामुनिः ।
मृकण्डुनायं देवेशाद्यदा लब्धो महातपाः ॥

तदा षोडशवार्षेयः कल्पितः शम्भुना मुनिः ।
तस्य षोडशवर्षाणि व्यतीयुरनुपूर्वशः ॥

दिनद्वयावशिष्टानि मार्कण्डेयस्य भूसुराः ।
पितरौ मृत्युमालोक्य तदा रुरुदतुर्भृशम् ॥

श्रुत्वा तयोश्च व्यसनं स्वनिमित्तं मृकण्डुजः ।
मृत्युञ्जयं विरूपाक्षं क्षयद्वीरं पिनाकिनम् ॥

पूजयामास पुण्यात्मा तदेकाग्रमना भृशम् ।
तदानीमन्तकः शीघ्रं तत्रागत्य मृकण्डुजम् ॥

आजुहाव प्रियैर्वाक्यैर्निजलोकाय भूसुराः ।
शिवपूजारतस्तस्थे चागणय्य यमं तदा ॥

तदा तं सुमहाटोपाद्भीषयन् भीषणाकृतिः ।
आश्लिष्य भीत्या देवेशं लिङ्गरूपे स्थितं मुनिम् ॥

आचकर्ष च पाशेन बध्वा वैवस्वतो यदा ।
तदाविरासीद्भगवान् तस्माल्लिङ्गान्महेश्वरः ॥

तं यमं भीषणं क्षिप्रं पादेनाताडयत्प्रभुः ।
पादाघातवशाद्दूरं पपातायं यमः प्रभोः ॥

महापर्वतसंकाशो ममार किल भूसुराः ।
मृकण्डुजस्तदोन्मील्य नयनेऽपश्यदन्तिके ॥

नीलपर्वतसंकाशं गतप्राणमिमं पुरः ।
ददर्श च महादेवं कालकालं पिनाकिनम् ॥

नीलकण्ठं विरूपाक्षं जटामकुटमण्डितम् ।
तुष्टाव परया प्रीत्या मार्कण्डेयो महामुनिः ॥

नमस्ते कालकालाय विरूपाक्षाय शूलिने ।
विश्वाधिकाय विश्वाय परात्परतराय ते ॥

कपर्दिने करालाय कालीनृत्तप्रियाय ते ।
उग्राय सर्वभक्षाय भीमाय महते नमः ॥

क्षिप्रेषवे नमस्तुभ्यं क्षयद्वीराय ते नमः ।
इति स्तुतिं महादेवः श्रुत्वा तस्य महात्मनः ॥

प्रसन्नः प्राह विश्वात्मा मार्कण्डेयं महामुनिम् ।
पूजया ते प्रसन्नोऽहं मार्कण्डेय महामुने ॥

भूयासुस्तव वर्षाणि षोडशैव सदा मुने ।
काङ्क्षितान्यपि सर्वाणि तव सिध्यन्ति मा चिरम् ॥

इति दत्वा वरं तस्मै तत्रैवान्तरधात्प्रभुः ।
सोऽपि संप्राप्य नित्यत्वं मार्कण्डेयो महामुनिः ॥

स्वगृहं प्राप्य परया प्रीत्या पित्रोः सदावसत् ।
अनन्यसदृशो लोके शिवशास्त्रविशारदः ॥

शिवागमार्थविज्ञानसंपन्नोऽद्यापि वर्तते ॥

## अगस्त्यवृत्तान्तः

(शं. सं. उप-७९)

अगस्त्यः पूजया शंभोस्तापसानामधीश्वरः ।
जहार दर्पं विन्ध्यस्य महाद्रेस्तापसेश्वरः ॥

प्राशयामास चाम्भोधिं महदूर्मिकुलाकुलम् ।
तथा चेल्वलवातापी दुरात्मानावशिक्षयत् ॥

द्राविडाख्यां तथा भाषां निर्ममे कृपया प्रभोः ।
सर्वशास्त्रपरिज्ञानं सम्यक् प्राप तपोधनः ॥

ताण्डवं देवदेवस्य ददर्श परमं द्विजाः ।
ददर्श शम्भोः कल्याणं पार्वत्या सह पावनम् ॥

सर्वलोकाभिगमनं स्वेच्छया प्राप दुष्करम् ।
शिवयोगं तथा स्कन्दादुपदेशमवाप्तवान् ॥
[1] सर्वलोकसुपूज्यत्वं जगत्ख्यातिमवाप्तवान् ॥

## दधीचिवृत्तान्तः

दधीचिरपि पुण्यात्मा क्षुपेण सह भूभुजा ।
तेन सख्यं समापायं बाल्य एव तपोधनः ॥

कदाचिदेतौ कलहं चक्रतुर्विप्रभूभुजौ ।
राजा राजबलं श्रेष्ठमाह विप्रः स्वकं बलम् ॥

एवं बहुप्रकारेण प्राप्ते वादे तयोर्द्विजाः ।
ताडयामास राजानं स्वाधिक्यं वादिनं क्रुधा ॥

तदानीं स महीपालो वज्रमादाय भीषणम् ।
जघान विप्रं कोपेन दुरात्मा दुष्टचेतनः ॥

तदा तत्याज स प्राणान् वज्राघातेन तापसः ।
हाहाकारो महानासीत्तत्रत्यानां भयावहः ॥

तदा समागतः शीघ्रं शुक्रस्तस्य पितामहः ।
तच्छरीरं द्विधाभूतमेकीकृत्य स भार्गवः ॥

जीवयामास मतिमान् विद्यया स्वस्य भूसुराः ।
तं वीक्ष्य जीवितं शुक्रः पौत्रं प्राह प्रियं वचः ॥

अद्यप्रभृति पूजा च त्वया कार्या महेशितुः ।
पूजया देवदेवस्य तव सर्वं भविष्यति ॥

पूजा पुण्यप्रदा पुंसां पूजा मोक्षप्रदा प्रभोः ।
पूजया स्वपदं प्राप ब्रह्मा विष्णुश्च वैष्णवम् ॥

इन्द्रो यमस्तथेशानः कुबेराद्याः सुरेश्वराः ।
तमद्व्यं महेशानं मृत्युञ्जयमुमासखम् ॥

---

[1] सर्वपूज्यत्वमगमज्जगति ख्यातिमाप्तवान् ।

उपसर्गाः क्षयं यान्ति शत्रवो व्याधयो ग्रहाः ।
मनः प्रसन्नतां याति पूज्यमाने महेश्वरे ॥

इत्युक्त्वा भार्गवस्तस्मा उपदिश्य बहून्मनून् ।
निर्ययौ स्वेच्छया शीघ्रं ब्राह्मणानामधीश्वराः ॥

ततो दधीचिः पुण्यात्मा पूजयन् शङ्करं प्रभुम् ।
वज्रास्थित्वमवध्यत्वमौदार्यमभयं तदा ॥

प्रसन्नाद्देवदेवेशादवाप मुनिपुङ्गवः ।
पुनरन्यान्वरान् लब्ध्वा क्षुपस्यान्तिकमेत्य सः ॥

ताडयामास पादेन क्षुपं तं दुष्टचेतनम् ।
तदा कोपाकुलो राजा वज्रमादाय भीषणम् ॥

वक्षोमध्ये जघानास्य दधीचेश्च महाबलः ॥
धूलीबभूव तत्क्षिप्रं तत्रैव पतनाद्द्विजाः ॥

विहस्य तं क्षुपं प्राह दधीचिः सुमहातपाः ।
न बिभेमि महीपाल तव वज्रायुधादपि ॥

गणयामि न चेशानं तव कर्तारमप्यलम् ।
दधीचेर्वचनं श्रुत्वा क्षुपः कोपाकुलो भृशम् ॥

विष्णुमुद्दिश्य सुमहत्तपश्चक्रे दुरासदम् ।
[1]तस्यैवं तपतस्तीव्रं प्रादुरासीद्धरिः स्वयम् ॥

तं प्रणम्य स्ववृत्तान्तं तस्मै प्रोवाच भूमिपः ।
तच्छ्रुत्वा स हरिस्तेन दधीचेराश्रमं ययौ ॥
तत्र दृष्ट्वा ऋषिवरं [2]संभाव्य परया मुदा ॥

मदर्थं तापसश्रेष्ठ राज्ञां बलमनुत्तमम् ।
एवं ब्रूह्यत्र यो दोषः संजायेत ममास्तु सः ॥

इत्युक्तिं माधवस्यायं नाङ्गीचक्रे यदा तदा ।
हरिः कोपाकुलस्तस्मिंश्चक्रं तत्याज भीषणम् ॥

---

[1] तत्रैवं–पा. [2] संप्राप्य.

तस्मिन्निपतनाच्चक्रं क्षणाद्धूलीबभूव ह ।
तस्मिन्मुनौ हरिश्चक्रे मायी मायामनेकधा ॥
दूरीचकार तां सर्वां मायया स्वस्य भूसुराः ।
पुनश्च मायामेतस्मिन् सोऽपि चक्रे ऋषीश्वरे ॥
पुनर्दर्भं समादाय तस्मिन्स प्रेरयदृषिः ।
तत्क्षणान्मारयामास सेनाः सर्वा मधुद्विषः ॥
एकाकी स स्वयं तस्थे तदानीं हरिरप्यहो ।
तदा समाययौ तत्र ब्रह्मा ब्रह्मविदां वरः ॥
दधीचिं तपतां श्रेष्ठं तुष्टाव परया मुदा ।
दधीचिरपि कोपेन विष्णुं वीक्ष्य पुरस्स्थितम् ॥
छिन्द्यात्तव करं विष्णो वीरभद्रो महाबलः ।
भक्तास्तव महामौर्ख्यात्परमेश्वरदूषकाः ॥
पतन्तु निरये घोरे पाञ्चरात्रावलम्बिनः ।
शपत्येवं मुनौ विष्णुं ब्रह्म प्रोवाच मन्युमान् ॥
भक्तैः शिवस्य कलहः पतिष्यत्यात्मनोपरि ।
विजयश्च न ते भूयादपराधी परं हरे ॥
तमाहूयेति सहसा परमेष्ठी जनार्दनम् ।
प्रणम्य च मुनिं ब्रह्मा सान्त्वयित्वा जगाम ह ॥
गतवत्यब्जजे लोकं सनारायणके तदा ।
क्षुपस्तदा तदालोक्य दधीचस्यास्य विस्मितः ।
तमेव शरणं प्राप क्षमस्वेति पुनः पुनः ॥
सखा त्वं ब्राह्मणश्रेष्ठ पूर्वमद्य पिता मम ।
माता च महितो भ्राता त्वं सर्वमसि भो द्विज ॥
अपराधं क्षमस्वेति याचमानमुवाच सः ।
क्षान्तं मयाधुना राजन् क्षमासारा हि साधवः ॥
कोपस्य मादृशानां हि प्रणिपातः प्रतिक्रिया ।
ब्राह्मणा बलिनो राजन् यदस्माकं कुलप्रभुः ॥

महाब्राह्मण ईशानो विष्णुः क्षत्राधिपः स्मृतः ।
विशामधिपतिर्ब्रह्मा तस्मात्तान् ब्राह्मणादयः ॥

यजन्ते यदतिक्रम्य पापिनः पतिताश्च ते ।
आराधय हरं तस्माद्भव त्वं ब्रह्मवत्सलः ॥

ब्रह्मतेजोऽधिकं राजन् न क्षात्रं वैश्यसंभवम् ।
सर्वेषामधिको यस्माद्भगवान् ब्राह्मणः शिवः ॥

स यस्य देवता सोऽपि ब्राह्मणो महतो महान् ।
तस्माद्दिवे दिवे कुर्याद्ब्राह्मणेभ्यो नमः सदा ॥

न कीर्तयेत्सदा तेषामश्लीलं यदि बुद्धिमान् ।
न्यायेन पृथिवीं शाधि क्षुप त्वं राजसत्तम ॥

[1] अनुज्ञाप्य दधीचिस्तमित्येवं पृथिवीपतिम् ।
पुनश्च शिवपूजायां निरतो विस्मयं गतः ॥

---

ध्यायन्नेव महेशानं निनायानेहसां शतम् ।
एवं ब्रह्मा हरिश्चैव महेन्द्रप्रमुखाः सुराः ॥

शिवपूजामहिम्नैव शिवसायुज्यमाप्नुवन् ।
ऋषयश्च महाभागा ब्रह्मनिष्ठा यशस्विनः ॥

पाशमोक्षमवापुस्ते ज्ञानिनामपि दुर्लभम् ।
शिवतुल्यत्वबुद्धिस्तु शिवान्येषु भयावहा ॥

शिवाधिकमतिस्त्वन्यदेवतायां तु पापिनाम् ।
उदेति तस्य नाशार्थं [2] समताज्ञानगर्विणाम् ।

यस्मिन्देवः प्रसन्नः स्याद्भक्तिस्तस्मिंस्तु विस्फुरेत् ।
यस्मिन्नीशकृपा नास्ति दुर्जनो न च विश्वसेत् ॥

अन्धस्य दीपसंपत्तिरन्धकाराय केवलम् ।
अश्रेयःपात्रभूतस्य शिवभक्तिर्न जायते ॥

---

[1] अनुशास्य, [2] सुपुत्रज्ञातिगर्विणाम् , सपुत्र—पा.

अज्ञस्योपदिशन् धर्मं सैकते वारिसेचकः।
प्राज्ञस्योपदिशन् धर्मं केदारजलदायकः॥

प्रमाणवाक्यश्रवणे विश्वसेद्यदि बुद्धिमान्।
यथोक्तफलभागी स शैवलोकमुपैति हि॥

अश्रद्दधानः संदिग्धः सर्वकार्येषु नष्टधीः।
स चानध्यवसायी स्यात्तस्मादेव विनश्यति॥

विश्वस्तस्य प्रमाणं स्यादेकमेव फलप्रदम्।
अनेकानि प्रमाणानि न विश्वस्ते फलन्ति च॥

चूतबीजे निरुप्ते तु जलसेकादिरक्षणात्।
एकोऽपि फलति स्वैरं त्वय्यैतत्प्रदृश्यताम्॥

अविश्वासेन बहुशोऽप्युप्तबीजानि सर्वतः।
न फलन्ति परं पुंसां तद्दृष्ट्वा विश्वसेद्बुधः॥

दधीचिशापतः केचिद्गौतमस्यापि शापतः।
परे च कण्वशापेन निहताः पापबुद्धयः॥

शिवार्चने शिवस्तोत्रे विमुखा दुःखभागिनः।
बुद्धिभ्रंशात्परे नष्टा मोहेनान्ये विनाशिताः॥

अन्ये मताभिमानेन नष्टाः पापिन एव ते।
मत्पितान्यमतासक्तो न मयात्रेति केचन॥

देशभीत्या परे नष्टाः प्रतिबन्धहताः परे।
प्रबलद्वेषसंत्रस्ताः शिवशक्तिपराङ्मुखाः॥

धनिकस्नेहसंबन्धात्परे स्वस्वात्मवञ्चकाः।
पूर्वार्जितेन पापेन दारिद्र्यनिहताः स्वयम्॥

धनग्रहणलोभेन परे नष्टाश्च पापिनः।
सर्वे कलिमहिम्नैते कल्पिता नरकालयाः॥

यमप्रार्थनया पूर्वं शंभोराज्ञावशाद्गणाः।
पराङ्मुखान् शिवे मर्त्यान् कृत्वा निरयवासिनः॥

कुर्वन्ति तं न जानन्ति शिवो मुक्तिप्रदस्त्विति।
शिवपूजाफलं प्राहुः संपदं बालिशा अपि॥

नान्यपूजाफलं लोके वदन्ति हि विपाश्चितः ।
पुत्रकामां पतिः पत्नीं प्राशयेन्मध्यपिण्डकम् ॥

रुद्रपिण्डसमुत्पन्नाः सर्वे ते चाविशेषतः ॥
पितरं नैव जानन्ति पापोपहतचेतसः ।

आदत्ते हि श्रुतिः सेयं जागर्ति स्फुटवर्णिनी ॥
यः पुत्रः पितरं द्वेष्टि तं विद्यादन्यरेतसम् ।

ये शिवद्वेषिणो मर्त्या अन्यरेतस्समुद्भवाः ॥
नैकरेतस्समुत्पन्ना नानारेतोद्भवाः स्फुटम् ।

त्वं देवेष्विति मन्त्रोऽयं शिवस्योपास्तिवाचकः ॥
ये पुनः शिवभक्तास्ते गदिता ब्राह्मणोत्तमाः ।

ब्रह्म शंभुः समाख्यातस्तज्ज्ञानी ब्राह्मणः स्मृतः ॥
ब्राह्मणः शिवभक्तोऽसौ नान्यो ब्राह्मण उच्यते ।

द्विजातिर्वान्यजातिर्वा शिवभक्त्यैव केवलम् ॥
ब्राह्मणः प्रोच्यते सद्भिर्नान्यभक्त्या कदाचन ।

यः शिवे भक्तियुक्तस्स्यादुक्तमार्गेण पूजकः ।
स शंभुः सकलोपास्यः सत्यं सत्यं न संशयः ॥

य एनं पठति ग्रन्थं शृणोति श्रावयेदपि ।
स एव वीरशैवः स्यात्सावधानं विलोक्यताम् ॥

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तरहस्यैकोत्तरशतस्थलाभिज्ञ श्रीनीलकण्ठ-
शिवाचार्यकृते क्रियासारे शिवपूजाप्रकरणं नाम चतुर्दशोपदेशः
समाप्तः



WD 2274—GBPM—1,000—27-3-57

